M-3025

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
| श्रीकृ(ष्ण)जन्मखंड पुरवणि | - | पुराण | पूर्ण | - | 6/12 | 300 | संस्कृत | कागज | 14 | 41 | | |

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगोपीजनवल्लभायनमः ॥ ॥ नारदउवाच ॥ ॥ श्रुतंप्रथमतोब्रह्मन्ब्रह्मखंडंम
नोहरम् ॥ ब्रह्मणोवदनांभोजात्परमाद्भुतमेवच ॥ १ ॥ ततस्तद्वचनात्तूर्णंसमागत्यतवांतिकम् ॥ श्रुतंप्रकृतिखंडंचसुधा
खंडात्परंवरम् ॥ २ ॥ ततोगणपतेःखंडमखंडभवखंडनम् ॥ नमेतृप्तंमनोऽलोलंविशिष्टंश्रोतुमिच्छति ॥ ३ ॥ श्रीकृष्ण
जन्मखंडंचजन्मादेःखंडनंनृणाम् ॥ प्रदीपंसर्वतत्त्वानांकर्मघ्नंहरिभक्तिदम् ॥ ४ ॥ सद्योवैराग्यजननंभवरोगनिकृंतनम्
॥[illegible]कारणंमुक्तिबीजानांभवाब्धेस्तारणंपरम् ॥ ५ ॥ कर्मोपभोगरोगाणांखंडनेचरसायनम् ॥ श्रीकृष्णचरणांभोजप्रा
प्तिसोपानकारणम् ॥ ६ ॥ जीवनंवैष्णवानांचजगतांपावनंपरम् ॥ वदविस्तार्यमांभक्तंशिष्यंचशरणागतम् ॥ ७ ॥ केन
वाप्रार्थितःकृष्णआजगाममहीतले ॥ सर्वांशैरेकएवेशःपरिपूर्णतमःस्वयम् ॥ ८ ॥ युगेकुत्रकुतोहेतोःकुत्रवाविर्बभूवह
वसुदेवोऽस्यजनकःकोवाकावाचदेवकी ॥ ९ ॥ वदकस्यकुलेजन्ममायायासुविडंबनम् ॥ किंचकारसमागत्यकेनरूपे
णवाहरिः ॥ १० ॥ जगामगोकुलंकंसभयेनसूतिकागृहात् ॥ कथंकंसात्कीटतुल्याद्भयेशस्यभयंमुने ॥ ११ ॥ हरिर्वागोप
वेषेणगोकुलेकिंचकारह ॥ कुत्रगोपांगनासार्धंविजहारजगत्पतिः ॥ १२ ॥ कावागोपांगनाकेवागोपालाबालरूपिणः ॥
कावायशोदाकोनंदःकिंवापुण्यंचकारह ॥ १३ ॥ कथंराधापुण्यवतीदेवीगोकुलवासिनी ॥ व्रजेवाव्रजकन्यासाबभूवप्रे
यसीहरेः ॥ १४ ॥ कथंगोप्योदुराराध्यंसंप्रापुरीश्वरंपरम् ॥ कथंताश्चपरित्यज्यजगाममथुरांपुनः ॥ १५ ॥ भारावतरणं
कृत्वाकिंविधायजगामसः ॥ कथयस्वमहाभागपुण्यश्रवणकीर्तनः ॥ १६ ॥ सुदुर्लभांहरिकथांतरणिंभवसागरे ॥ निषेक
भोगनिग[illegible]क्लेशच्छेदनकर्तनीम् ॥ १७ ॥ पापेंधनानांदहनेज्वलदग्निशिखामिव ॥ पुंसांश्रुतवतांकोटिजन्मकिल्बिषना

कृ.ज.पू.
॥ १ ॥

शिनीम् ॥ १८ ॥ मह्यंभक्तायशिष्यायज्ञानंदेहिकृपानिधे ॥ तपोजपमहादानात्पृथिव्यांतीर्थदर्शनात् ॥ १९ ॥ श्रुतिपा
ठादनशनाद्व्रताद्देवार्चनादपि ॥ दीक्षाखाःसर्वयज्ञेषुयत्फलंलभतेनरः ॥ २० ॥ षोडशींज्ञानदानस्यकलांनार्हतितत्फलम् ॥
पित्राहंप्रेषितोज्ञानदानायतवसन्निधिम् ॥ २१ ॥ सुधासमुद्रंसंप्राप्यकोवान्यत्पातुमिच्छति ॥ २२ ॥ ॥ श्रीनारायणउ
वाच ॥ ॥ मयाज्ञातोऽसिधन्यस्त्वंपुण्यराशिःसुमूर्तिमान् ॥ करोषिभ्रमणंलोकान्पावितुंकुलपावन ॥ २३ ॥ जनानांत्हद
यंसद्यःसुव्यक्तंवचनेनवै ॥ शिष्येकलत्रेकन्यायांदौहित्रेबांधवेऽपिच ॥ २४ ॥ पुत्रेपौत्रेचवचसिप्रतापेचापदिस्त्रियाम् ॥
वृद्धौवैरिणिविद्यायांज्ञायतेत्हृदयंनृणाम् ॥ २५ ॥ जीवन्मुक्तोऽसिपूतस्त्वंशुद्धभक्तोगदाभृतः ॥ पुनासिपादरजसासर्वा
धारांवसुंधराम् ॥ २६ ॥ पुनासिलोकान्त्सर्वांश्चस्वीयविग्रहदर्शनात् ॥ सुमंगलाहरिकथातेनत्वंश्रोतुमिच्छसि ॥ २७ ॥ य
त्रकृष्णकथाःसंतितत्रैवसर्वदेवताः ॥ ऋषयोमुनयश्चैवतीर्थानिनिखिलानिच ॥ २८ ॥ कथाःश्रुत्वाकथांतेतेयांतिसंतोनिरा
पदः ॥ भवंतितानितीर्थानियेषुकृष्णकथाःशुभाः ॥ २९ ॥ सद्यःकृष्णकथावक्तास्वस्यपुंसांशतंशतम् ॥ समुद्धृत्यश्रुतवतां
पुनातिनिखिलंकुलम् ॥ ३० ॥ प्रष्टातुप्रश्नमात्रेणपुनातिकुलमात्मनः ॥ श्रोताश्रवणमात्रेणस्वकुलंस्वस्वबांधवान् ॥ ३१ ॥
शतजन्मतपस्तप्तोजन्मेदंभारतेलभेत् ॥ करोतिसफलंजन्मश्रुत्वाहरिकथामृतम् ॥ ३२ ॥ अर्चनंवंदनंमंत्रजपःसेवनमेव
च ॥ स्मरणंकीर्तनंशश्वद्गुणश्रवणमीप्सितम् ॥ ३३ ॥ निवेदनंस्वस्यदास्यंनवधाभक्तिलक्षणम् ॥ करोतिजन्मसफलंकृ
त्वैतानिचनारद ॥ ३४ ॥ नचविघ्नोभवेत्तस्यपरमायुर्ननश्यति ॥ नयातितत्पुरःकालोवैनतेयमिवोरगः ॥ ३५ ॥ नजहा
तिसमीपंचक्षणंतस्यहरिःस्वयम् ॥ उपतिष्ठंतितूर्णंतमणिमादिकसिद्धयः ॥ ३६ ॥ सुदर्शनंभ्रमत्येवतस्यपार्श्वेदिवानि

अ० १

॥ १ ॥

शम् ॥ ३८ ॥ कृष्णाज्ञयाचरक्षार्थंकोवाकिंकर्तुमीश्वरः ॥ ३७ ॥ नयांतितत्समीपंचस्वप्नेऽपियमकिंकराः ॥ ज्वलदग्निंय
थादृष्ट्वाशलभानव्रजंतितम् ॥ ३८ ॥ व्याधयोविपदःशोकाविघ्नाश्चनप्रयांतितम् ॥ नयातितत्समीपंचमृत्युमर्त्यंभयं
मुने ॥ ३९ ॥ ऋषयोमुनयःसिद्धाःसंतुष्टाःसर्वदेवताः ॥ सचसर्वत्रनिःशंकःसुखीकृष्णप्रसादतः ॥ ४० ॥ तवकृष्णकथा
यांचरतिरात्यंतिकीसदा ॥ जनकस्यस्वभावोहिजन्येतिष्ठतिनिश्चितम् ॥ ४१ ॥ विप्रेंद्रकाप्रशंसेयंजन्मतेब्रह्ममानसे ॥ य
त्रयत्रकुलेजन्मतन्मतिस्तादृशीभवेत् ॥ ४२ ॥ पिताविधाताजगतांकृष्णपादाब्जसेवया ॥ नित्यंकरोतियःशश्वन्नवधा
भक्तिलक्षणम् ॥ ४३ ॥ रतिःकृष्णकथायांचयस्याश्रुपुलकोद्गमः ॥ मनोनिमग्नंतत्रैवसभक्तःकथितोबुधैः ॥ ४४ ॥ पुत्र
दारादिकंसर्वंजानातिश्रीहरेरिति ॥ आत्मनामनसावाचासभक्तःकथितोबुधैः ॥ ४५ ॥ निर्जनेतीर्थसंपर्केनिःसंगायेमु
दान्विताः ॥ ध्यायंतेचरणांभोजंश्रीहरेस्तेचवैष्णवाः ॥ ४६ ॥ दयास्तिसर्वजीवेषुसर्वंकृष्णमयंजगत् ॥ योजानातिम
हाज्ञानीसभक्तोवैष्णवोमतः ॥ ४७ ॥ शश्वद्येनामगायंतिगुणंमंत्रंजपंतिच ॥ कुर्वंतिश्रवणंगाथावदंतितेऽतिवैष्णवाः ॥
॥ ४८ ॥ लब्धानीष्टानिवस्तूनिप्रदातुंहरयेमुदा ॥ तूर्णंयस्यमनोत्हृष्टंसभक्तोज्ञानिनांवरः ॥ ४९ ॥ यन्मनोहरिपादाब्जेस्वप्ने
ज्ञानेदिवानिशम् ॥ पूर्वकर्मोपभोगंचबहिर्भुंक्तेसवैष्णवः ॥ ५० ॥ गुरुवक्त्राद्विष्णुमंत्रोयस्यकर्णेविशत्ययम् ॥ तंवैष्ण
वंमहापूतंप्रवदंतिमनीषिणः ॥ ५१ ॥ पूर्वान्सप्तपरान्सप्तसप्तमातामहादिकान् ॥ सोदरानुद्धरेद्भक्तःस्वप्रसूंचप्रसूप्रसूम्
॥ ५२ ॥ कलत्रंकन्यकांबंधुंशिष्यंदौहित्रमात्मनः ॥ किंकरान्किंकरींश्चैवमुद्धरेद्वैष्णवःसदा ॥ ५३ ॥ सदावांछंतितीर्था
निवैष्णवस्पर्शदर्शने ॥ पापिदत्तानिपापानितेषांनश्यंतिसंगतः ॥ ५४ ॥ गोदोहनक्षणंयावद्यत्रतिष्ठंतिवैष्णवाः ॥ तत्रसर्वा

णितीर्थानिसंतितावन्महीतले ॥ ५५ ॥ ध्रुवंतत्रमृतःपापान्मुक्तोयातिहरेःपदम् ॥ तथैवज्ञानगंगायामंतेकृष्णस्मृतौय
था ॥ ५६ ॥ तुलसीकाननेगोष्ठेश्रीकृष्णमंदिरेपरे ॥ वृंदारण्येहरिद्वारेतीर्थेष्वन्येषुवायथा ॥ ५७ ॥ पापानिपापिनोयां
तितीर्थस्नानवगाहनात् ॥ तेषांपापानिनश्यंतिवैष्णवस्पर्शवायुना ॥ ५८ ॥ नहिस्थातुंशक्नुवंतिपापान्येवकृतानिच ॥
ज्वलदग्नौयथादत्तशुष्काणिचतृणानिच ॥ ५९ ॥ भक्तंवर्त्मनिगच्छंतंतंयेपश्यंतिमानवाः ॥ सप्तजन्मार्जिताघानितेषां
नश्यंतिनिश्चितम् ॥ ६० ॥ येनिंदंतिहृषीकेशंतद्भक्तंपुण्यरूपिणम् ॥ शतजन्मार्जितंपुण्यंतेषांनश्यतिनिश्चितम् ॥ ६१ ॥
तेपच्यंतेमहाघोरेकुंभीपाकेभयानके ॥ भक्षिताःकीटसंघेनयावच्चंद्रदिवाकरौ ॥ ६२ ॥ तस्यदर्शनमात्रेणपुण्यंनश्यति
निश्चितम् ॥ गंगांस्नात्वारविंनत्वातदाविद्वान्हिशुद्ध्यति ॥ ६३ ॥ वैष्णवस्पर्शमात्रेणमुक्तोभवतिपातकी ॥ तस्यपापानि
हंत्येवस्वांतस्थोमधुसूदनः ॥ ६४ ॥ इत्येवंकथितोविप्रविष्णुवैष्णवयोर्गुणः ॥ अधुनाश्रीहरेर्जन्मनिबोधकथयामिते ॥ ६५ ॥
इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेनारायणनारदसंवादेविष्णुवैष्णवयोर्गुणप्रशंसाप्रस्तावःप्रथमोऽध्यायः
॥ १ ॥ श्रीनारायणउवाच ॥ ॥ येनवाप्रार्थितःकृष्णआजगाममहीतलम् ॥ यंयंविधायभूमौसजगामस्वालयंविभुः
॥ १ ॥ भारावतरणोपायंदुष्टानांचवधोद्यमम् ॥ सर्वंतेकथयिष्यामिसुविचार्यविधानतः ॥ २ ॥ अधुनागोपवेषंचगोकु
लागमनंहरेः ॥ राधागोपालिकायेननिबोधकथयामिते ॥ ३ ॥ शंखचूडवधंपूर्वंसंक्षेपात्कथितंश्रुतम् ॥ अधुनातत्सुवि
स्तार्यंनिबोधकथयामिते ॥ ४ ॥ श्रीदाम्नःकलहश्चैवबभूवराधयासह ॥ श्रीदामाशंखचूडश्चशापात्तस्याबभूवह ॥ ५ ॥ रा
धांशशापश्रीदामायाहियोनिंचमानवीम् ॥ व्रजेव्रजांगनाभूत्वाविचरस्वमहीतले ॥ ६ ॥ भीताश्रीदामशापात्साश्रीकृ

ष्णंसमुवाचह ॥ गोपीरूपाभविष्यामिश्रीदामामांशशापह ॥ ७॥ कमुपायंकरिष्यामिवदमांभयभंजन ॥ त्वयाविना
कथमहंधरिष्यामिस्वजीवनम् ॥ ८ ॥ क्षणमेकंयुगशतंकालनाथत्वयाविना ॥ चक्षुर्निमेषविरहाद्भवेदंधंमनोमम ॥ ९ ॥
शरत्पार्वणचंद्राभंसुधापूर्णाननंतव ॥ नाथचक्षुश्चकोराभ्यांपिबाम्येवमहर्निशम् ॥ १० ॥ त्वमात्मामेमनःप्राणादेहमात्रं
वहाम्यहम् ॥ दृष्टिशक्तिश्चचक्षुस्त्वंजीवनंपरमंधनम् ॥ ११ ॥ स्वप्नेज्ञानेत्वयिमनःस्मरामित्वत्पदांबुजम् ॥ तवदास्यंवि
नानाथनजीवामिक्षणंविभो ॥ १२ ॥ कृष्णस्तद्वचनंश्रुत्वाबोधयामाससुंदरीम् ॥ वक्षसिप्रेयसींकृत्वाचकारनिर्भयांचता
म् ॥ १३ ॥ महीतलंगमिष्यामिवाराहेचवरानने ॥ मयासार्धंभूगमनंजन्मतेपिनिरूपितम् ॥ १४ ॥ व्रजंगत्वाव्रजेदेवि
विहरिष्यामिकानने ॥ ममप्राणाधिकात्वंचभयंकिंतेमयिस्थिते ॥ १५ ॥ तामित्युक्त्वाहरिस्तत्रविररामजगत्पतिः ॥ अ
तोहेतोर्जगन्नाथोजगामनंदगोकुलम् ॥ १६ ॥ किंवातस्यभयंकंसाद्भयांतंकारकस्यच ॥ मयाभयच्छलेनैवजगामरा
धिकांतिकम् ॥ १७ ॥ विजहारतयासार्धंगोपवेषंविधायसः ॥ सहगोपांगनाभिश्चप्रतिज्ञापालनायच ॥ १८ ॥ ब्रह्म
णाप्रार्थितःकृष्णःसमागत्यमहीतलम् ॥ भारावतरणंकृत्वाजगामस्वालयंविभुः ॥ १९ ॥ ॥ नारदउवाच ॥ ॥ श्रीदाम्नः
कलहश्चैवकथंवाराधयासह ॥ संक्षेपात्कथितंपूर्वंसाकल्यंकथयाधुना ॥ २० ॥ श्रीनारायणउवाच ॥ ॥ एकदाराधिका
सार्धंगोलोकेश्रीहरिःस्वयम् ॥ अलौकिकेमहारण्येनिर्जनेरासमंडले ॥ २१ ॥ राधिकासुखसंभोगाद्बुबुधेनस्वकंपरम् ॥
कृत्वाविहारंश्रीकृष्णस्तामपृष्ट्वाविहायच ॥ २२ ॥ गोपिकांविरजामन्यांश्शृंगारार्थंजगामह ॥ वृंदारण्येचविरजासुभ
गाराधिकासमा ॥ २३ ॥ तस्यावयस्याःसुंदर्यौगोपीनांशतकोटयः ॥ कृष्णप्राणाधिकागोपीधन्यामान्याचयोषिताम्

॥ २४ ॥ रत्नसिंहासनस्थासाददर्शहरिमंतिके ॥ ददर्शश्रीहरिस्तांचशरच्चंद्रनिभाननाम् ॥ २५ ॥ मनोहरांसस्मितांचपश्यं
तींवक्रचक्षुषा ॥ सदाषोडशवर्षीयांप्रोद्भिन्नवयौवनाम् ॥ २६ ॥ रत्नालंकारशोभाढ्यांभूषितांशुक्लवाससा ॥ पुलकांकित
सर्वांगींकामबाणप्रपीडिताम् ॥ २७ ॥ दृष्ट्वातांश्रीहरिस्तूर्णंविजहारतयासह ॥ पुष्पतल्पेमहारण्येनिर्जनेरत्नमंडपे ॥
॥ २८ ॥ मूर्छामवापविरजाकृष्णश्रृंगारकौतुकात् ॥ कृत्वावक्षसिप्राणेशंकोटिकंदर्पसन्निभम् ॥ २९ ॥ तयासक्तंश्रीहरिं
चरत्नमंडपसंस्थितम् ॥ दृष्ट्वाचराधिकाल्यश्चचक्रुस्तांचनिवेदनम् ॥ ३० ॥ तासांचवचनंश्रुत्वासुष्वापचचुकोपह ॥ भृ
शंरुरोदसादेवीरक्तपंकजलोचना ॥ ३१ ॥ ताउवाचमहादेवीमांतंदर्शयितुंक्षमाः ॥ यदिसत्यंब्रूतयूयंमयासार्धंप्रयच्छत
॥ ३२ ॥ करिष्यामिफलंगोप्याःकृष्णस्यचयथोचितम् ॥ कोरक्षिताऽद्यतस्याश्चमयिशास्तिंप्रकुर्वंति ॥ ३३ ॥ शीघ्रमा
नयताल्यश्चतयासार्द्धंहरिंप्रियम् ॥ राधिकावचनंश्रुत्वाकाश्चिद्गोप्योभयान्विताः ॥ ३४ ॥ ताःसर्वाःसंपुटांजल्योभक्तिन
म्रात्मकंधराः ॥ तामूचुःपुरतःस्थित्वासर्वाएवप्रियांसतीम् ॥ ३५ ॥ आल्यऊचुः ॥ ॥ वयंतंदर्शयिष्यामोविरजासहितं
विभुम् ॥ तासांचवचनंश्रुत्वारथमारुह्यसुंदरी ॥ जगामसार्द्धंगोपीभिस्त्रिषष्टिशतकोटिभिः ॥ ३६ ॥ रत्नेंद्रसाररचितंको
टिसूर्यसमप्रभम् ॥ मणींद्रसाररचितंकलशानांत्रिकोटिभिः ॥ ३७ ॥ राजितैश्चित्रराजीभिर्ज्वलद्भिश्चविराजितम् ॥ ल
क्षचक्रसमायुक्तंमनोयायिमनोहरम् ॥ ३८ ॥ मणिसारविकारैश्चकोटिस्तंभैःसुशोभितम् ॥ नानाचित्रविचित्रेणसहितैः
सुमनोहरैः ॥ ३९ ॥ सिंदूराकारमणिभिर्मध्यदेशविभूषितैः ॥ रत्नकृत्रिमसिंहैश्चरथचक्रोर्ध्वसंस्थितैः ॥ ४० ॥ चतुर्लक्षप
रिमितैश्चित्रघंटासमन्वितैः ॥ चित्रपुत्तलिशोभाढ्यैर्विचित्रैश्चविराजितम् ॥ ४१ ॥ रतिमंदिरलक्षैश्चरत्नसारविनिर्मितैः ॥

मणिसारकपाटैश्च शोभितैश्चित्रवाजिभिः ॥ ४२ ॥ मणींद्रसारकलशशेखरोज्वलितैर्युतम् ॥ भोगद्रव्यसमायुक्तं वेषद्रव्य समन्वितम् ॥ ४३ ॥ शोभितं रत्नशय्याभी रत्नपात्रघटान्वितम् ॥ हरिन्मणीनां वेदीनां समूहेन समन्वितम् ॥ ४४ ॥ कुंकुमाभमणीनां च सोपानकोटिभिर्युतम् ॥ स्यमंतकैः कौस्तुभैश्च रुचकैः प्रवरैस्तथा ॥ ४५ ॥ पद्मकृत्त्रिमकोटिनां शतकैश्च सुशोभितम् ॥ चित्रकाननवापीभिर्विशिष्टाभिर्विराजितम् ॥ ४६ ॥ रत्नेंद्रसाररचितकलशोज्वलशेखरम् ॥ शतयोजनमूर्ध्वं च दशयोजनविस्तृतम् ॥ ४७ ॥ पारिजातप्रसूनानां मालाकोटिविराजितम् ॥ कुंदानां करवीराणां यूथिकानां तथैव च ॥ ४८ ॥ सुचारुचंपकानां च नागेशानां मनोहरैः ॥ मल्लिकानां मालतीनां माधवीनां सुगंधिनाम् ॥ ४९ ॥ कदंबानां च मालानां कदंबैश्च विराजितम् ॥ सहस्त्रदलपद्मानां मालाभिश्च विराजितम् ॥ ५० ॥ चित्रपुष्पोद्यानसरःकाननैश्च विभूषितम् ॥ सर्वेषां स्यंदनानां च श्रेष्ठं वायुवहं परम् ॥ ५१ ॥ तत्सूक्ष्मवस्त्रसाराणां वरैराच्छादितं परम् ॥ रत्नदर्पणलक्षाणां शतकैश्च समन्वितम् ॥ ५२ ॥ श्वेतचामरकोटीभिर्वज्रकोटिभिरन्वितम् ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चितैः ॥ ५३ ॥ पारिजातप्रसूनानां कोटितल्पविराजितम् ॥ कोटिघंटासमायुक्तं पताकाकोटिभिर्युतम् ॥ ५४ ॥ रत्नशय्याकोटिभिश्च चित्रवज्रपरिच्छदैः ॥ चंदनाक्तैश्चंपकानां कुंकुमैश्च विचित्रितैः ॥ ५५ ॥ पुष्पोपधानसंयुक्तैः शृंगारार्हाभिरन्वितम् ॥ अदृश्यैरश्रुतैर्द्रव्यैः सुंदरैश्च विभूषितम् ॥ ५६ ॥ एवंभूताद्रथात्तूर्णमवरुह्य हरिप्रिया ॥ जगाम सहसा देवी तं रत्नमंडपं मुने ॥ ५७ ॥ द्वारे नियुक्तं ददर्श द्वारपालं मनोहरम् ॥ लक्षगोपैः परिवृतं स्मेराननसरोरुहम् ॥ ५८ ॥ गोपं श्रीदामनामानं श्रीकृष्णप्रियकिंकरम् ॥ तमुवाच रुषा देवी रक्तपंकजलोचना ॥ ५९ ॥ दूरं गच्छ गच्छ दूरं रतिलंपटकिंकर ॥ कीदृशीं मत्परां कांतां द्रक्ष्यामि

त्वत्प्रभोरहम् ॥ ६० ॥ राधिकावचनंश्रुत्वानिःशंकःपुरतःस्थितः ॥ तामेवनददौगंतुंवेत्रपाणिर्महाबलः ॥ ६१ ॥ तूर्णंचरा
धिकाःल्यश्वश्रीदामानंसकिंकरम् ॥ बलेनप्रेरयामासुःकोपेनस्फुरिताधराः ॥ ६२ ॥ श्रुत्वाकोलाहलंशब्दंगोपिकानांहरिः
स्वयम् ॥ ज्ञात्वाचकोपितांराधामंतर्धानंचकारह ॥ ६३ ॥ विरजाराधिकाशब्दादंतर्धानंहरेरपि ॥ दृष्ट्वाराधांभयार्तासा
जहौप्राणांश्चयोगतः ॥ ६४ ॥ सद्यस्तत्रसरिद्रूपंतच्छरीरंबभूवह ॥ व्याप्तंचवर्तुलाकारंतयागोलोकमेवच ॥ ६५ ॥ को
टियोजनविस्तीर्णप्रस्थेतिनिम्नमेवच ॥ दैर्घ्येदशगुणंचारुनानारत्नाकरंपरम् ॥ ६६ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणे
श्रीकृष्णजन्मखंडेनारायणनारदसंवादेविरजानंदप्रस्तावोनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ श्रीभगवानुवाच ॥ ॥ रा
धारतिगृहंगत्वानददर्शहरिंमुने ॥ विरजांचसरिद्रूपांदृष्ट्वागेहंजगामसा ॥ १ ॥ श्रीकृष्णोविरजांदृष्ट्वासरिद्रूपांप्रियांस
तीम् ॥ उच्चैरुरोदविरजातीरेनीरमनोहरे ॥ २ ॥ ममांतिकंसमागच्छप्रेयसीनांपरेवरे ॥ त्वयाविनाहंसुभगेकथंजीवामि
सुंदरि ॥ ३ ॥ नद्यधिष्ठात्रिदेवित्वंभवमूर्तिमतीसती ॥ ममाशिषारूपवतीसुंदरीयोषितांवरा ॥ ४ ॥ पूर्वरूपाच्चसौभाग्या
दिदानींसुभगाभव ॥ पुरातनंशरीरंतेसरिद्रूपमभूत्सति ॥ ५ ॥ जलादुत्थायचागच्छविधायतनुमुत्तमाम् ॥ अष्टौसिद्धी
र्मयादत्तासुरसुंदरिसत्वरम् ॥ ६ ॥ कृष्णाज्ञयाचविरजाविधायतनुमुत्तमाम् ॥ आजगामहरेरग्रेसाक्षाद्राधेवसुंदरी ॥
॥ ७ ॥ पीतवस्त्रपरिधानास्मेराननसरोरुहा ॥ पश्यंतंप्राणनाथंचपश्यंतीवक्रचक्षुषा ॥ ८ ॥ नितंबश्रोणिभारार्तापीनोन्न
तपयोधरा ॥ मानिनीमानिनीनांचगजेंद्रमदगामिनी ॥ ९ ॥ सुंदरीसुंदरीणांचधन्यामान्याचयोषिताम् ॥ चारुचंपक
वर्णाभापक्वबिंबाधरावरा ॥ १० ॥ पक्वदाडिमबीजाभदंतपंक्तिमनोहरा ॥ शरत्पार्वणचंद्रास्याफुलेंदीवरलोचना ॥ ११ ॥

कस्तूरीबिंदुनासार्धंसिंदूरबिंदुभूषिता ॥ चारुपत्रकशोभाढ्यासुचारुकबरीयुता ॥ १२ ॥ रत्नमंडलमध्यस्थाभूषितारत्न
मालया ॥ गजमौक्तिकनासाग्रामुक्ताहारविराजिता ॥ १३ ॥ रत्नकंकणकेयूरचारुशंखकरोज्वला ॥ किंकिणीजालश
ब्दाढ्यारत्नमंजीररंजिता ॥ १४ ॥ तांचरूपवतींदृष्ट्वाप्रेमोद्रेकांजगत्पतिः ॥ चकारालिंगनंतूर्णंचुचुंबचमुहुर्मुहुः ॥ १५ ॥
नानाप्रकारशृंगारंविपरीतादिकंविभुः ॥ रहसिप्रेयसींप्राप्यचकारचपुनःपुनः ॥ १६ ॥ विरजासारजोयुक्ताधृत्वावीर्यम
मोघकम् ॥ सद्योबभूवतत्रैवधन्यागर्भवतीसती ॥ १७ ॥ दधारगर्भमीशस्यदिव्यंवर्षशतंचसा ॥ ततःसुस्रावतत्रैवपुत्रा
न्सप्तमनोहरान् ॥ १८ ॥ मातासासप्तपुत्राणांश्रीकृष्णस्यप्रियासती ॥ तस्थौतत्रसुखासीनासार्द्धंपुत्रैश्चसप्तभिः ॥ १९ ॥
एकदाहरिणासार्द्धंवृंदारण्येचनिर्जने ॥ विजहारपुनःसाध्वीशृंगारासक्तमानसा ॥ २० ॥ एतस्मिन्नंतरेतत्रमातुःक्रोडं
जगामह ॥ कनिष्ठपुत्रस्तस्याश्चभ्रातृभिःपीडितोभिया ॥ २१ ॥ भीतंस्वतनयंदृष्ट्वातत्याजतांकृपानिधिः ॥ क्रोडेचका
रबालंसाकृष्णोराधागृहंययौ ॥ २२ ॥ प्रबोध्यबालंसासाध्वीनददर्शांतिकेप्रियम् ॥ विललापभृशंतत्रशृंगारातृप्तमान
सा ॥ २३ ॥ शशापस्वसुतंकोपाल्लवणोदोभविष्यसि ॥ कदापितेजलंकेचिन्नखादिष्यंतिजीविनः ॥ २४ ॥ शशापबाला
न्सर्वांश्चयांतुमूढामहीतलम् ॥ गच्छध्वंचमहींमूढाजंबुद्वीपंमनोहरम् ॥ २५ ॥ स्थितिर्नैकत्रयुष्माकंभविष्यतिपृथक्पृ
थक् ॥ द्वीपेद्वीपेस्थितिंकृत्वातिष्ठंतुसुखिनःसदा ॥ २६ ॥ द्वीपस्थाभिर्नदीभिश्चसहक्रीडंतुनिर्जने ॥ कनिष्ठोमातृशापा
च्चलवणोदोबभूवह ॥ २७ ॥ कनिष्ठःकथयामासमातृशापंचबालकान् ॥ आजग्मुर्दुःखिताःसर्वेमातृस्थानंचबालकाः ॥
॥ २८ ॥ श्रुत्वाविवरणंसर्वंप्रजग्मुर्धरणीतलम् ॥ प्रणम्यचरणंमातुर्भक्तिनम्रात्ममूर्तयः ॥ २९ ॥ सप्तद्वीपसमुद्राश्चसप्त

तस्थुर्विभागशः ॥ कनिष्ठाद्दृद्धपर्यंतंद्विगुणंद्विगुणंमुने ॥ ३० ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलांतकाः ॥ एतेषांचजलंपृ
थ्व्यांसस्यानांचभविष्यति ॥ ३१ ॥ व्याप्ताःसमुद्राःसप्तैवसप्तद्वीपांवसुंधराम् ॥ रुरुदुर्बालकाःसर्वेमातृभ्रातृशुचान्विताः
॥ ३२ ॥ रुरोदचभृशंसाध्वीपुत्रविच्छेदकातरा ॥ मूर्छामवापशोकेनपुत्राणांभर्तुरेवच ॥ ३३ ॥ तांशोकसागरेमग्नांवि
ज्ञायराधिकापतिः ॥ आजगामपुनस्तस्याःस्मेराननसरोरुहः ॥ ३४ ॥ दृष्ट्वाहरिंसातत्त्याजशोकंरोदनमेवच ॥ आनंद
सागरेमग्नादृष्ट्वाकांतंबभूवह ॥ ३५ ॥ चकारश्रीहरिंक्रोडेविजहारस्मरातुरा ॥ तांचपुत्रपरित्यक्तांहरिस्तुष्टोबभूवह ॥
॥ ३६ ॥ वरंतस्यैददौप्रीत्याप्रसन्नवदनेक्षणः ॥ कांतेनित्यंतवस्थानमागमिष्यामिनिश्चितम् ॥ ३७ ॥ यथाराधातत्स
मात्वंभविष्यसिप्रियामम ॥ पुत्रान्द्रक्ष्यसिनित्यंत्वंमद्वरस्यप्रसादतः ॥ ३८ ॥ इत्युक्तवंतंश्रीकृष्णंवसंतंविरजांतिके ॥
दृष्ट्वाराधावयस्याश्चकथयामासुरीश्वरम् ॥ ३९ ॥ श्रुत्वारुरोषसादेवीसुष्वापक्रोधमंदिरे ॥ एतस्मिन्नंतरेकृष्णोजगा
मराधिकांतिकम् ॥ ४० ॥ सतस्थौराधिकाद्वारेश्रीदाम्नासहनारद ॥ रासेश्वरीहरिंदृष्ट्वारुष्टोवाचप्रियंपुरः ॥ ४१ ॥ म
त्तोबहुतराःकांतागोलोकेसंतितेहरे ॥ याहितासांसन्निधानंमयातेकिंप्रयोजनम् ॥ ४२ ॥ विरजाप्रेयसीकांतासरिद्रूपा
बभूवह ॥ देहंत्यक्त्वाममभयात्तथाऽपियाहितांप्रति ॥ ४३ ॥ तत्तीरेमंदिरंकृत्वातिष्ठतिष्ठचयाहिताम् ॥ नदीबभूव
सात्वंचनदोभवितुमर्हसि ॥ ४४ ॥ नदस्यनद्यासार्द्धंचसंगमोगुणवान्भवेत् ॥ स्वजातौपरमाप्रीतिःशयनेभोजनेसु
खात् ॥ ४५ ॥ देवचूडामणेःक्रीडानद्यासार्द्धंमहाद्भुत ॥ महाजनःस्मेरमुखःश्रुत्वासद्योभविष्यति ॥ ४६ ॥ येत्वांव
दंतिसर्वेशंतेकिंजानंतितत्त्वतः ॥ भगवान्सर्वभूतात्मानदींसंभोक्तुमिच्छति ॥ ४७ ॥ इत्युक्त्काराधिकादेवीविररामरुषा

न्विता ॥ नोत्तस्थौभूमिशयनाद्गोपीलक्षसमन्विता ॥ ४८ ॥ काश्चिच्चामरहस्ताश्चकाश्चित्सूक्ष्मांशुकांबराः ॥ काश्चि
त्तांबूलहस्ताश्चकाश्चिन्मालाकरावराः ॥ ४९ ॥ वासितोदकराःकाश्चित्काश्चित्पद्मकरावराः ॥ काश्चित्सिंदूरहस्ताश्चपान
हस्ताश्चकाश्चन ॥ ५० ॥ रत्नालंकारहस्ताश्चकाश्चित्कज्जलवाहिकाः ॥ वेणुवीणाकराःकाश्चित्काश्चित्कंकतिकाकराः ॥
॥ ५१ ॥ काश्चिदाबीरहस्ताश्चयंत्रहस्ताश्चकाश्चन ॥ सुगंधितैलहस्ताश्चकाश्चनप्रमदोत्तमाः ॥ ५२ ॥ करतालकराःकाश्चिच्चं
डुहस्ताश्चकाश्चन ॥ काश्चिन्मृदंगमधुरमुरलीतानकारिकाः ॥ ५३ ॥ संगीतनिपुणाःकाश्चित्काश्चिन्नर्तनतत्पराः ॥ क्रीडाव
स्तुकराःकाश्चिन्मधुहस्ताश्चकाश्चन ॥ ५४ ॥ सुधापात्रकराःकाश्चिदंघ्रिपीठकराःपराः ॥ वेषवस्तुकराःकाश्चित्काश्चिच्चरण
सेवकाः ॥ ५५ ॥ पुटांजलिकराःकाश्चित्काश्चित्स्तुतिपरावराः ॥ एवंकतिविधाःसंतिराधिकापुरतोमुने ॥ ५६ ॥ बहिर्देश
स्थिताःकाश्चित्कोटिशःकोटिशःसदा ॥ काश्चिद्द्वारनियुक्ताश्चवयस्यावेत्रधारिकाः ॥ ५७ ॥ कृष्णमभ्यंतरंगंतुंनददुर्द्वारसं
स्थिताः ॥ पुरःस्थितंतंप्राणेशंराधापुनरुवाचसा ॥ ५८ ॥ नानुरूपमत्यकथ्यमयोग्यमतिकर्कशम् ॥ ॥ राधिकोवाच ॥
हेकृष्णविरजाकांतगच्छमत्पुरतोहरे ॥ कथंदुनोषिमांलोलरतिचौरातिलंपट ॥ ५९ ॥ शीघ्रंपद्मावतींगच्छरत्नमालांमनो
रमाम् ॥ अथवावनमालांवारूपेणाप्रतिमांव्रज ॥ ६० ॥ हेनदीकांतदेवेशदेवानांचगुरोर्गुरो ॥ मयाज्ञातोसिभद्रंतेगच्छग
च्छममाश्रयात् ॥ ६१ ॥ शश्वत्तेमानुषाणांचव्यवहारस्यलंपट ॥ लभतांमानुषीयोनिर्गोलोकाद्व्रजभारतम् ॥ ६२ ॥ हेसु
शीलेशशिकलेहेपद्मावतिमाधवि ॥ निवार्यतांचधूर्तोऽयंकिमस्यात्रप्रयोजनम् ॥ ६३ ॥ राधिकावचनंश्रुत्वातमूचुर्गो
पिकाहरिम् ॥ हितंतथ्यंचविनयंसारंयत्समयोचितम् ॥ ६४ ॥ काश्चिदूचुरितिहरेगच्छस्थानांतरंक्षणम् ॥ राधाकोपाप

नयनेत्यागमिष्यामहेवयम् ॥ ६५ ॥ काश्चिदूचुरितिप्रीत्याक्षणंगच्छगृहांतरम् ॥ त्वयैववर्धितारा धात्वांविनाकंचवक्ष्य
ति ॥ ६६ ॥ काश्चिदूचुरितिप्रेम्णाराधिकायांहरिंमुने ॥ क्षणंवृंदावनंगच्छमानापनयनावधि ॥ ६७ ॥ काश्चिदित्यूचुरी
शंचपरिहासपरंवचः ॥ मानापनयनंभक्त्यामानिन्याःकुरुकामुक ॥ ६८ ॥ काश्चनोचुरितीशंतंयाहिजायांतरंतव ॥ लोलु
पस्यकथंनाथकरिष्यामोयथोचितम् ॥ ६९ ॥ काश्चनोचुरितिहरिंसस्मितंपुरतःस्थितम् ॥ गत्वासमीपमुत्थायमानाप
नयनंकुरु ॥ ७० ॥ काश्चनोचुरितिप्राणनाथगोप्योदुरक्षरम् ॥ कःक्षमःसांप्रतंद्रष्टुंराधिकामुखपंकजम् ॥ ७१ ॥ काश्चनो
चुरितिविभुंव्रजस्थानांतरंहरे ॥ कोपापनयनेकालेपुनरागमनंतव ॥ ७२ ॥ काश्चनोचुरितीदंतंप्रगल्भाःप्रमदोत्तमाः ॥ वयं
त्वांवारयिष्यामोनचेद्याहिगृहांतरम् ॥ ७३ ॥ काश्चिन्निवारयामासुर्माधवंप्रमदोत्तमाः ॥ स्मितवक्त्रंचसर्वेशंस्वस्थमक्रोध
मीश्वरम् ॥ ७४ ॥ गोपीभिर्वार्यमाणेचजगत्कारणकारणे ॥ सद्यश्चुकोपश्रीदामाहरौगेहांतरंगते ॥ ७५ ॥ कोपादुवाच
श्रीदामाराधिकांपरमेश्वरीम् ॥ रक्तपद्मेक्षणांरुष्टांरक्तपंकजलोचनाम् ॥ ७६ ॥ ॥ श्रीदामोवाच ॥ ॥ कथंवदसिमात
स्त्वंकटुवाक्यंमदीश्वरम् ॥ विचारणांविनादेविकरोषिभर्त्सनंवृथा ॥ ७७ ॥ ब्रह्मानंतेशदेवेशंजगत्कारणकारणम् ॥
वाणीपद्मालयामायाप्रकृतीशंचनिर्गुणम् ॥ ७८ ॥ स्वात्मारामंपूर्णकामंकरोषित्वंविडंबनम् ॥ देवीनांप्रवरात्वंचनि
बोधकस्यसेवया ॥ ७९ ॥ यस्यपादार्चनेनैवसर्वेषामीश्वरीपरा ॥ तन्नजानासिकल्याणिकिमहंवक्तुमीश्वरः ॥ ८० ॥
भ्रूभंगलीलयाकृष्णःस्रष्टुंशक्तश्चत्वद्विधाः ॥ कोटिशःकोटिशोदेव्यस्तंनजानासिनिर्गुणम् ॥ ८१ ॥ वैकुंठेश्रीहरेरस्यचर
णांबुजमार्जनम् ॥ करोतिकेशैःशश्वच्छ्रीःसेवनंभक्तिपूर्वकम् ॥ ८२ ॥ सरस्वतीचस्तवनैःकर्णपीयूषसुंदरैः ॥ सततंस्तौ

तिर्यंभक्त्यानजानासितमीश्वरम् ॥ ८३ ॥ श्रीताचप्रकृतिर्मायासर्वेषांबीजरूपिणी ॥ सततंस्तौ[illegible]यंभक्त्यातंनजानासि
मानिनि ॥ ८४ ॥ स्तुवंतिसततंवेदामहिम्नःषोडशींकलाम् ॥ कदापिनविजानंतितंनजानासिभामिनि ॥ ८५ ॥ वक्रैश्च
तुर्भिर्यंब्रह्मावेदानांजनकोविभुः ॥ स्तौतिसेवांचकुरुतेचरणांबुजमीश्वरि ॥ ८६ ॥ शंकरःपंचभिर्वक्रैःस्तौतियंयोगिनां
गुरुः ॥ साश्रुपूर्णःसपुलकःसेवतेचरणांबुजम् ॥ ८७ ॥ शेषःसहस्रवदनैःपरमात्मानमीश्वरम् ॥ सततंस्तौतियंभक्त्यासे
वतेचरणांबुजम् ॥ ८८ ॥ धर्मःपाताचसर्वेषांसाक्षीचजगतांपतिः ॥ भक्त्याचचरणांभोजंसेवतेसततंमुदा ॥ ८९ ॥ श्वे
तद्वीपनिवासीयःपाताविष्णुःस्वयंविभुः ॥ तस्यांशश्चतथायंयंधार्यतेप्यक्षरंपरम् ॥ ९० ॥ सुरासुरमुनींद्राश्चमनवोमान
वाबुधाः ॥ सेवंतेनहिपश्यंतिस्वप्नेपिचरणांबुजम् ॥ ९१ ॥ क्षिप्रंरोषंपरित्यज्यभजपादांबुजंहरेः ॥ भ्रूभंगलीलामात्रेण
सृष्टिसंहर्तुरेवच ॥ ९२ ॥ निमेषमात्रादस्यैवब्रह्मणःपतनंभवेत् ॥ यस्यैकदिवसेप्यष्टाविंशतींद्राःपतंत्यपि ॥ ९३ ॥ एव
मष्टोत्तरशतमायुर्यस्यजगद्विधेः ॥ त्वंवाकान्याश्चवाराधेमदीश्वरवशेखिलम् ॥ ९४ ॥ श्रीदाम्नोवचनंश्रुत्वाकेवलंकटुमु
ज्वलम् ॥ सद्यश्चुकोपसाब्रह्मन्सद्यःप्राणेश्वरीहरेः ॥ ९५ ॥ रासेश्वरीबहिर्गत्वातमुवाचहनिष्ठुरम् ॥ स्फुरदोष्ठीमुक्तकेशी
रक्तांभोरुहलोचना ॥ ९६ ॥ ॥ राधिकोवाच ॥ ॥ रेरेजाल्ममहामूढश्शृणुलंपटकिंकर ॥ त्वंनजानासिसर्वार्थंनजाना
मित्वदीश्वरम् ॥ ९७ ॥ त्वदीश्वरश्चश्रीकृष्णोनत्वस्माकंव्रजाधम ॥ जानासिजनकंस्तौषिसदानिंदसिमातरम् ॥ ९८ ॥
यथासुराश्चत्रिदशान्नित्यंनिंदंतिसंततम् ॥ तथानिंदसिमांमूढतस्मात्त्वमसुरोभव ॥ ९९ ॥ गोपव्रजासुरींयोनिंगोलोकाच्च
बहिर्भव ॥ मयाद्यशप्तोमूढस्त्वंकस्त्वांरक्षितुमीश्वरः॥ १००॥रासेश्वरीतमित्युक्त्वासुष्वापविररामच ॥ श्रीदामो० ॥ मानु

ष्याइवकोपस्तेतस्मात्त्वंमानुषीभुवि ॥ १०१ ॥ भविष्यसिनसंदेहोमयाशप्तात्वमंबिके ॥ छाययाकलयावापिपरशक्त्या कलंकिनी ॥ १०२ ॥ मूढारापाणपत्नींत्वांवक्ष्यंतिजगतीतले ॥ रापाण:श्रीहरेरंशोवैश्योवृंदावनेवने ॥ १०३ ॥ भविष्य तिमहायोगीराधाशापेनगर्भजः ॥ गोकुलेप्राप्यतंकृष्णंविहरिष्यसिकानने ॥ १०४ ॥ भवितातेवर्षशतंविच्छेदोहरिणा सह ॥ पुन:प्राप्यतमीशंचगोलोकमागमिष्यसि ॥ १०५ ॥ तामित्युक्त्वाचनत्वाचसजगामहरे:पुरः ॥ गत्वाप्रणम्यश्री कृष्णंशापाख्यानमुवाचह ॥ ६ ॥ आनुपूर्व्यातुतत्सर्वैरुरोदचभृशंपुनः ॥ उवाचतंरुदंतंचगच्छध्वंधरणीतलम् ॥७॥ नजे तातेत्रिभुवनेत्वसुरेंद्रोभविष्यसि ॥ कालेशंकरशूलेनदेहंत्यक्त्वाममांतिकम् ॥ ८ ॥ आगमिष्यसिपंचाशद्युगांतेतुममा शिषा ॥ श्रीकृष्णस्यवचःश्रुत्वातमुवाचशुचान्वितः ॥ ९ ॥ त्वद्भक्तिरहितंमांचकदाचिन्नकरिष्यसि ॥ इत्युक्त्वाश्रीहरिं नत्वाजगामस्वाश्रमाद्बहिः ॥ ११० ॥ पश्चाज्जगामसादेवीरुरोदचपुनःपुनः ॥ क्वयासिवत्सेत्युच्चार्यविललापभृशंसती ॥ ११ ॥ श्रीदामाऽपिचतांनत्वारुरोदप्रेमविह्वलः ॥ सएवशंखचूडश्चबभूवतुलसीपतिः ॥ १२ ॥ गतेश्रीदाम्निसादेवीज गामेश्वरसन्निधिम् ॥ सर्वंनिवेदयामासहरि:प्रत्युत्तरंददौ ॥ १३ ॥ शोकातुरांचतांकृष्णोबोधयामासप्रेयसीम् ॥ शंखचू डश्चकालेनसंप्रापपुनरीश्वरम् ॥ १४ ॥ राधाजगामधरणींवाराहेहरिणासह ॥ वृषभानुगृहेजन्मललाभगोकुलेमुने ॥ ॥ १५ ॥ इत्येवंकथितंसर्वंश्रीकृष्णाख्यानमंगलम् ॥ सर्वेषांवांछितंसारंकिंभूयःश्रोतुमिच्छसि ॥ ११६ ॥ ॥ इतिश्रीब्र ह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेनारायणनारदसंवादेसप्तसमुद्रजन्मराधाश्रीदामशापोद्भवोनामतृतीयोऽध्यायः ॥ ॥ ३ ॥ ॥ नारदउवाच ॥ ॥ केनवाप्रार्थितःकृष्णोमहींचकेनहेतुना ॥ आजगामजगन्नाथोवदवेदविदांवर ॥ १ ॥ नारा

यणउवाच ॥ पुरावाराहकल्पेसाभाराक्रांतावसुंधरा ॥ भृशंबभूवशोकार्ताब्रह्माणंशरणंययौ ॥ २ ॥ सुरैश्चासुरसंतप्तैर्भृ
शमुद्विग्नमानसैः ॥ सार्द्धंतैस्तांदुर्गमांचजगामवेधसःसभाम् ॥ ३ ॥ ददर्शतस्यांदेवेशंज्वलंतंब्रह्मतेजसा ॥ ऋषींद्रैश्चमु
नींद्रैश्वसिद्धेंद्रैःसेवितंमुदा ॥ ४ ॥ अप्सरोगणनृत्यंचपश्यंतंसस्मितंमुदा ॥ गंधर्वाणांचसंगीतंश्रुतवंतंमनोहरम् ॥ ५ ॥
जपंतंपरमंब्रह्मकृष्णइत्यक्षरद्वयम् ॥ भक्त्यानंदाश्रुपूर्णंतंपुलकांकितविग्रहम् ॥ ६ ॥ भक्त्यासात्रिदशैःसार्द्धंप्रणम्यच
तुराननम् ॥ साश्रुपूर्णासपुलकातुष्टावचरुरोदच ॥ ७ ॥ तामुवाचजगद्धाताकथंस्तौषिचरोदिषि ॥ कथमागमनंभद्रेव
दभद्रंभविष्यति ॥ ८ ॥ सुस्थिराभवकल्याणीभयंकितेमयिस्थिते ॥ आश्वास्यपृथिवींब्रह्मादेवान्पप्रच्छसादरम् ॥ ९ ॥
कथमागमनंदेवायुष्माकंममसन्निधिम् ॥ ब्रह्मणोवचनंश्रुत्वादेवाऊचुःप्रजापतिम् ॥ १० ॥ भाराक्रांताचवसुधादस्यु
ग्रस्तावयंप्रभो ॥ त्वमेवजगतांस्रष्टाशीघ्रंनोनिष्कृतिंकुरु ॥ ११ ॥ गतिस्त्वमस्याभोब्रह्मन्निर्वृत्तिंकर्तुमर्हसि ॥ पीडितायें
नभारेणपृथिवीयंपितामह ॥ १२ ॥ वयंतेनैवदुःखार्तातद्भारहरणंकुरु ॥ देवानांवचनंश्रुत्वापप्रच्छतांजगद्विधिः ॥ १३ ॥
दूरीकृत्यभयंवत्सेसुखंतिष्ठममांतिकम् ॥ केषांभारमशक्तात्वंसोढुंपंकजलोचने ॥ १४ ॥ अपनेष्यामितंभद्रेभद्रंतेभवि
ताध्रुवम् ॥ तस्यसावचनंश्रुत्वातमुवाचस्वपीडनम् ॥ पीडितायेनयेनैवंप्रसन्नवदनेक्षणा ॥ १५ ॥ ॥ क्षितिरुवाच ॥
शृणुतातप्रवक्ष्यामिस्वकीयांमानसींव्यथाम् ॥ विनाबंधुंसविश्वासंनान्यंकथितुमर्हति ॥ १६ ॥ स्त्रीजातिरबलाशश्वद्रक्ष
णीयास्वबंधुभिः ॥ जनकस्वामिपुत्रैश्चगर्हितान्यैश्चनिश्चितम् ॥ १७ ॥ त्वयापृष्टाजगत्ताततनलज्जाकथितुंमम ॥ येषां
भारैःपीडिताहंश्रूयतांकथयामिते ॥ १८ ॥ कृष्णभक्तिविहीनायेयेचतद्भक्तनिंदकाः ॥ तेषांमहापातकिनामशक्ताभार

वाहने ॥ १९ ॥ स्वधर्माचारहीनायेनित्यकृत्यविवर्जिताः ॥ श्रद्धाहीनाश्चवेदेषुतेषांभारेणपीडिता ॥ २० ॥ पितृमातृगु
रुस्त्रीणांपोषणंपुत्रपोष्ययोः ॥ येनकुर्वंतितेषांचनशक्ताभारवाहने ॥ २१ ॥ येमिथ्यावादिनस्तातततथासत्यविवर्जिताः ॥
निंदकागुरुदेवानांतेषांभारेणपीडिता ॥ २२ ॥ मित्रद्रोहीकृतघ्नश्चमिथ्यासाक्ष्यप्रदायकः ॥ विश्वासघ्नोन्यासहर्तातेषांभा
रेणपीडिता ॥ २३ ॥ कल्याणसूक्तसामानिहरेर्नामैकमंगलम् ॥ कुर्वंतिविक्रयंयेवैतेषांभारेणपीडिता ॥ २४ ॥ जीवघा
तीगुरुद्रोहीग्रामयाजीचलुब्धकः ॥ शब्ददाहीशूद्रभोजीतेषां० ॥ २५ ॥ पूजायज्ञोपवासादिव्रतानिविविधानिच ॥ ये
येमूढानिहंतारस्तेषां० ॥ २६ ॥ सदाद्विषंतियेपापागोविप्रसुरवैष्णवान् ॥ हरिंहरिकथांभक्तिंतेषां० ॥ २७ ॥ शंखादीनां
चभारेणपीडिताहंयथाविधे ॥ ततोधिकेनदैत्यानांतेषां० ॥ २८ ॥ इत्येवंकथितंसर्वंमद्दुःखथायानिवेदनम् ॥ त्वयायदि
सुपाल्याहंप्रतीकारंकुरुप्रभो ॥ २९ ॥ इत्येवमुक्त्वावसुधारुरोदचमुहुर्मुहुः ॥ ब्रह्मातद्रोदनंदृष्ट्वातामुवाचकृपानिधिः ॥
॥ ३० ॥ भारंतवापनेष्यामिदस्यूनामप्युपायतः ॥ उपायतोऽपिकार्याणिसिद्ध्यंत्येववसुंधरे ॥ ३१ ॥ कालेनभारहरणं
करिष्यतिमदीश्वरः ॥ मंत्रंमंगलकुंभंचशिवलिंगंचकुंकुमम् ॥ ३२ ॥ मधुकाष्ठंचंदनंचकस्तूरींतीर्थमृत्तिकाम् ॥ खड्गगं
डकखंडंचस्फाटिकंपद्मरागकम् ॥ ३३ ॥ इंद्रनीलंसूर्यमणिंरुद्राक्षंकुशमूलकम् ॥ शालग्रामशिलाशंखतुलसीप्रतिमा
जलम् ॥ ३४ ॥ निर्माल्यंचैवनैवेद्यंहरिद्वर्णमणिंतथा ॥ ग्रंथियुक्तंयज्ञसूत्रंदर्पणंश्वेतचामरम् ॥ ३५ ॥ गोरोचनंचमुक्तां
चशुक्तिंमाणिक्यमेवच ॥ पुराणसंहितांवन्हिंकर्पूरंपरशुंतथा ॥ ३६ ॥ रजतंकांचनंचैवप्रवालंरत्नमेवच ॥ कुशबीजंती
र्थतोयंगव्यंगोमूत्रगोमयम् ॥ ३७ ॥ त्वयियेस्थापयिष्यंतिमूढाश्चैतानिसुंदरि ॥ पच्यंतेकालसूत्रेणवर्षाणामयुतंध्रु

वम् ॥ ३८ ॥ ब्रह्मापृथ्वींसमाश्वास्यदेवताभिस्तयासह ॥ जगामजगतांधाताकैलासंशंकरालयम् ॥ ३९ ॥ गत्वातमाश्र
यंरम्यंददर्शशंकरंविधिः ॥ वसंतमक्षयवटमूलेस्वःसरितस्तटे ॥ ४० ॥ व्याघ्रचर्मपरीधानंदक्षकन्यास्थिभूषणम् ॥ त्रिशूल
पट्टिशधरंपंचवक्त्रंत्रिलोचनम् ॥ ४१ ॥ नानासिद्धैःपरिवृतंयोगींद्रगणसेवितम् ॥ परितोऽप्सरसांनित्यंपश्यंतंसस्मितंमु
दा ॥ ४२ ॥ गंधर्वाणांचसंगीतंश्रुतवंतंकुतूहलात् ॥ पश्यंतींपार्वतींप्रीत्यापश्यंतंवक्रचक्षुषा ॥ ४३ ॥ पृथिव्यासुरसंघैश्च
सार्द्धंप्रणतकंधरैः ॥ उत्तस्थौशंकरःशीघ्रंभक्त्यादृष्ट्वाजगद्गुरुम् ॥ ४४ ॥ ननाममूर्ध्नासंप्रीत्यालब्धवानाशिषंततः ॥ प्र
णेमुर्देवताःसर्वेशंकरंचंद्रशेखरम् ॥ ४५ ॥ प्रणनामधराभक्त्याचाशिषंयुयुजेहरः ॥ वृत्तांतंकथयामासपार्वतीशंप्रजाप
तिः ॥ ४६ ॥ श्रुत्वानतमुखस्तूर्णंशंकरोभक्तवत्सलः ॥ भक्तापायंसमाकर्ण्यपार्वतीपरमेश्वरौ ॥ ४७ ॥ बभूवतुस्तौ
दुःखार्तौबोधयामासतौविधिः ॥ ततोब्रह्मामहेशश्चसुरसंघान्वसुंधराम् ॥ ४८ ॥ गृहंप्रस्थापयामाससमाश्वास्यप्रयत्न
तः ॥ ततोदेवेश्वरैस्तूर्णमागत्यधर्ममंदिरम् ॥ ४९ ॥ सहतेनसमालोच्यप्रजग्मुर्भवनंहरेः ॥ वैकुंठंपरमंब्रह्मजरामृत्युहरंप
रम् ॥ ५० ॥ वायुनाधार्यमाणंचब्रह्मांडादूर्ध्वमुत्तमम् ॥ कोटियोजनमूर्द्ध्वंचब्रह्मलोकात्सनातनम् ॥ ५१ ॥ वर्णनीयंनक
विभिर्विचित्रंरत्ननिर्मितम् ॥ पद्मरागैरिंद्रनीलैरागमार्गविभूषितम् ॥ ५२ ॥ तेमनोयायिनःसर्वेसंप्रापुस्तंमनोहरम् ॥ हरे
रंतःपुरंगत्वाददृशुःश्रीहरिंसुराः ॥ ५३ ॥ रत्नसिंहासनस्थंचरत्नालंकारभूषितम् ॥ रत्नकेयूरवलयरत्ननूपुरशोभितम् ॥
॥ ५४ ॥ रत्नकुंडलयुग्मेनगंडस्थलविराजितम् ॥ पीतवस्त्रपरीधानंवनमालाविभूषितम् ॥ ५५ ॥ शांतंसरस्वतीकांतल
क्ष्मीधृतपदांबुजम् ॥ कोटिकंदर्पलीलाभंस्मितवक्त्रंचतुर्भुजम् ॥ ५६ ॥ सुनंदनंदकुमुदैःपार्षदैरुपसेवितम् ॥ चंदनोक्षित

सर्वांगंसुरत्नमुकुटोज्ज्वलम् ॥ ५७॥ परमानंदरूपंचभक्तानुग्रहकारकम् ॥ तंप्रणेमुःसुरेंद्राश्चभक्त्याब्रह्मादयोमुने॥५८॥ तुष्टुवुःपरयाभक्त्याभक्तिनम्रात्मकंधराः ॥ परमानंदभारार्ताःपुलकांचितविग्रहाः ॥ ५९ ॥ ॥ ब्रह्मोवाच ॥ ॥ नमामिक मलाकांतंशांतंसर्वेशमच्युतम् ॥ वयंयस्यकलाभेदाःकलांशकलयासुराः॥ ६० ॥ मनवश्चमुनींद्राश्चमानुषाश्चचराचराः॥ कलाकलांशकलयाभूतास्त्वत्तोनिरंजन ॥ ६१ ॥ ॥ शंकरउवाच ॥ ॥ त्वामक्षयमक्षरंवाव्यक्तमव्यक्तमीश्वरम् ॥ अना दिमादिमानंदरूपिणंसर्वरूपिणम् ॥ ६२ ॥ अणिमादिकसिद्धीनांकारणंसर्वकारणम् ॥ सिद्धिज्ञंसिद्धिदंसिद्धिरूपंकः स्तोतुमीश्वरः ॥ ६३ ॥ ॥ धर्मउवाच ॥ ॥ वेदेनिरूपितंवस्तुवर्णनीयंविचक्षणैः ॥ वेदेनिर्वचनीयंयत्तन्निर्वक्तुंचकःक्ष मः ॥ यस्यसंभावनीयंयद्गुणरूपंनिरंजनम् ॥ ६४ ॥ तदतिरिक्तंस्तवनंकिमहंस्तौमिनिर्गुणम् ॥ ब्रह्मादीनामिदंस्तोत्रंषट् श्लोकोक्तंमहामुने ॥ ६५ ॥ पठित्वामुच्यतेदुर्गाद्वांछितंचलभेन्नरः ॥ देवानांस्तवनंश्रुत्वातानुवाचहरिःस्वयम् ॥ ६६ ॥ गोलोकंयातयूयंचयामिपश्चात्प्रियासह ॥ नरनारायणौतौद्वौश्वेतद्वीपनिवासिनौ ॥ ६७॥ एतौयास्यंतिगोलोकंतथा देवीसरस्वती ॥ अनंताममायाचकार्तिकेयोगणाधिपः ॥ सावित्रीवेदमाताचपश्चाद्यास्यंतिनिश्चितम् ॥ ६८ ॥ तत्राहं द्विभुजःकृष्णोगोपीभीराधयासह ॥ अत्राहंकमलायुक्तःसुनंदादिभिरावृतः ॥ ६९ ॥ नारायणश्चकृष्णोऽहंश्वेतद्वीपनिवा सकृत् ॥ ममैवैताःकलाःसर्वेदेवाब्रह्मादयःस्मृताः ॥ ७० ॥ कलाकलांशकलयासुरासुरनरादयः ॥ गोलोकंयातयूयंचका र्यसिद्धिर्भविष्यति ॥ ७१ ॥ वयंपश्चाद्गमिष्यामःसर्वेषामिष्टसिद्धये ॥ इत्युक्त्वावैसभामध्येविरराममहरिःस्वयम् ॥ ७२ ॥ प्रणम्यदेवताःसर्वेजग्मुर्गोलोकमद्भुतम् ॥ विचित्रंपरमंधामजरामृत्युहरंपरम् ॥ ७३ ॥ ऊर्ध्वंवैकुंठतोगम्यंपंचाशत्को

टियोजनम् ॥ वायुनाधार्यमाणंचनिर्मितंस्वेच्छयाविभोः ॥ ७४ ॥ तमनिर्वचनीयंचदेवास्तेगमनोत्सुकाः ॥ तेमनोयायिनःसर्वेसंप्रापुर्विरजातटम् ॥ ७५ ॥ दृष्ट्वादेवाःसरित्तीरंविस्मयंपरमंययुः ॥ शुद्धस्फटिकसंकाशंसुविस्तीर्णमनोहरम् ॥ ॥ ७६ ॥ मुक्तामाणिक्यपरममणिरत्नाकरान्वितम् ॥ कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम् ॥ ७७ ॥ प्रवालांकुरमुद्भूतंकुत्रचित्सुमनोहरम् ॥ परमामूल्यसद्रत्नाकरराजिविभूषितम् ॥ ७८ ॥ विधेरदृश्यमाश्चर्यंनिधिश्रेष्ठाकरान्वितम् ॥ पद्मरागेंद्रनीलानामाकरंकुत्रचिन्मुने ॥ ७९ ॥ कुत्रचिच्चमरकताकरश्रेणीसमन्वितम् ॥ स्यमंतकाकरंकुत्रकुत्रचिद्रुचकाकरम् ॥ ८० ॥ अमूल्यपीतवर्णाभंमणिश्रेण्याकरान्वितम् ॥ रत्नाकरंकुत्रचिच्चकुत्रचित्कौस्तुभाकरम् ॥ ८१ ॥ कुत्रानिर्वचनीयानांमणीनामाकरंपरम् ॥ कुत्रचित्कुत्रचिद्रम्यविहारस्थलमुत्तमम् ॥ ८२ ॥ दृष्ट्वातुपरमाश्चर्यंजग्मुस्तत्पारमीश्वराः ॥ ददर्शपर्वतश्रेष्ठंशतशृंगंमनोरमम् ॥ ८३ ॥ पारिजाततरूणांचवनराजिविराजितम् ॥ कल्पवृक्षैःपरिवृतंवेष्टितंकामधेनुभिः ॥ ८४ ॥ कोटियोजनमूर्द्ध्वंचदैर्घ्यंदशगुणोत्तरम् ॥ शैलप्रस्थपरिमितंपंचाशत्कोटियोजनम् ॥ ८५ ॥ प्राकाराकारमस्यैवशिखरेरासमंडले ॥ दशयोजनविस्तीर्णंवर्तुलाकारमुत्तमम् ॥ ८६ ॥ पुष्पोद्यानसहस्रेणपुष्पितेनसुगंधिना ॥ संकुलेनमधुघ्राणांसमूहेनसमन्वितम् ॥ ८७ ॥ सुरतद्रव्यसंयुक्तैराजितंरतिमंदिरैः ॥ रत्नमंडपकोटीनांसहस्रेणसमन्वितम् ॥ ८८ ॥ रत्नसोपानयुक्तेनसद्रत्नकलशेनच ॥ हरिन्मणीनांस्तंभेनशोभितेनचशोभितम् ॥ ८९ ॥ सिंदूरवर्णमणिभिःपरितःखचितेनच ॥ इंद्रनीलैर्मध्यगतैर्मंडितेनमनोहरैः ॥ ९० ॥ रत्नप्राकारसंयुक्तमणिभेदैर्विराजितम् ॥ द्वारैःकपाटसंयुक्तैश्चतुर्भिश्चविराजितम् ॥ ९१ ॥ रज्जुग्रंथिसमायुक्तंरसालपल्लवान्वितैः ॥ परितःकदलीस्तंभसमूहैश्चसम

न्वितम् ॥ १२ ॥ शुक्लधान्यपर्णजालफलदूर्वांकुरान्वितम् ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चितम् ॥ १३ ॥ वेष्टितंगोप कन्यानांसुमूहैःकोटिशोमुने ॥ रत्नालंकारसंयुक्तैरत्नमालाविराजितैः ॥ १४ ॥ रत्नकंकणकेयूररत्ननूपुरभूषितैः ॥ रत्नकुंडलयुग्मेनगंडस्थलविराजितैः ॥१५॥ रत्नांगुलीयललितैर्हस्तांगुलिविराजितैः ॥ रत्नपाशकषट्कैश्चविराजितपदांगुलैः ॥ १६ ॥ भूषितैरत्नभूषाभिःसद्रत्नमुकुटोज्वलैः ॥ गजेंद्रमुक्तालंकारैर्नासिकामध्यराजितैः ॥ १७ ॥ सिंदूरबिंदुनासार्द्धमलकाधःस्थलोज्वलैः ॥ चारुचंपकवर्णाभैश्चंदनद्रवचर्चितैः ॥ १८ ॥ पीतवस्त्रपरीधानैर्बिंबाधरमनोहरैः ॥ शरत्पार्वणचंद्राणांप्रभांमुष्णन्मुखोज्वलैः ॥ १९ ॥ शरत्प्रफुल्लपद्मानांशोभामोषणलोचनैः ॥ कस्तूरीपत्रिकायुक्तैरेखाक्तकज्जलोज्वलैः ॥ १०० ॥ प्रफुल्लमालतीमालाजालैःकबरशोभितैः ॥ चारुणागमनेनैवगजखंजनगंजनैः ॥ १ ॥ वक्रभ्रूभंगसंयोगश्लक्ष्णस्मितसमन्वितैः ॥ पक्कदाडिमबीजाभदंतपंक्तिविराजितैः ॥ २ ॥ खगेंद्रचंचुशोभाढ्यनासिकोन्नतभूषितैः ॥ गजेंद्रगंडयुग्माभस्तनभारनतैरिव ॥ ३ ॥ नितंबकठिनश्रोणीपीनभारभरानतैः ॥ कंदर्पचरचेष्टाभिर्जर्जरीभूतमानसैः ॥ ॥ ४ ॥ दर्पणैःपूर्णचंद्रास्यसौंदर्यदर्शनोत्सुकैः ॥ राधिकाचरणांभोजसेवासक्तमनोरथैः ॥ ५ ॥ सुंदरीणांसमूहैश्चरक्षितंराधिकाज्ञया ॥ क्रीडासरोवराणांचलक्षैश्चपरिवेष्टितम् ॥ ६ ॥ श्वेतरक्तैर्लोहितैश्चवेष्टितैःपद्मराजितैः ॥ सुकूजद्भिर्मधुव्राणांसमूहैःसंकुलैःसदा ॥ ७ ॥ पुष्पोद्यानसहस्रेणपुष्पितेनसमन्वितम् ॥ कोटिकुंजकुटीरैश्चपुष्पशय्यासमन्वितैः ॥ ८ ॥ भोगद्रव्यसकर्पूरतांबूलवस्त्रसंयुतैः ॥ रत्नप्रदीपैःपरितःश्वेतचामरदर्पणैः ॥ ९ ॥ विचित्रपुष्पमालाभिःशोभितैःशोभितंमुने ॥ तंरासमंडपंदृष्ट्वाजग्मुस्तेपर्वताद्बहिः ॥ १० ॥ ततोविलक्षणंरम्यंददृशुःसुंदरंवनम् ॥ वनंवृंदावनं[illegible]राधामाधवयोःप्रिय

॥ ११ ॥ क्रीडास्थानंतयोरेवकल्पवृक्षचयान्वितम् ॥ विरजातीरनीराक्तैःकंपितंमंदवायुभिः ॥ १२ ॥ कस्तूरीयुक्तप त्राब्जैःपुष्पौघैःसुरभीकृतम् ॥ नवपल्लवसंसक्तपरपुष्टरुतैर्युतम् ॥ १३ ॥ कुत्रहेलिकदंबानांकदंबैःकमनीयकम् ॥ मंदरा णांचंपकानांचंदनानांतथैवच ॥ १४ ॥ सुगंधिकुसुमानांचगंधेनसुरभीकृतम् ॥ आम्राणांवंगरागाणांपनसानांतथैवच ॥ ॥ १५ ॥ तालानांनारिकेलानांवृंदैर्वृंदारकंवनम् ॥ जंबूनांबदरीणांचखर्जूराणांविशेषतः ॥ १६ ॥ गुर्वाकाम्रातकानांच जंबीराणांचनारद ॥ कदलीनांश्रीफलानांदाडिमानांमनोहरैः ॥ १७ ॥ सुपक्कफलसंयुक्तैःसमूहैश्चविराजितम् ॥ पिप्पली नांचशालानामश्वत्थानांतथैवच ॥ १८ ॥ निंबानांशाल्मलीनांचतिंतिडीनांचशोभनैः ॥ अन्येषांतरुभेदानांसंकूलैःसंकुलं सदा ॥ १९ ॥ परितःकल्पवृक्षाणांवृंदैर्वृंदैर्विराजितम् ॥ मल्लिकामालतीकुंदकेतकीमाधवीलता ॥ २० ॥ एतासांचसमू हैश्चयूथिकाभिःसमन्वितम् ॥ चारुकुंजकुटीरैस्तैःपंचाशत्कोटिभिर्मुने ॥ २१ ॥ रत्नप्रदीपदीपैश्चधूपेनसुरभीकृतैः ॥ शृं गारद्रव्ययुक्तैश्चवासितैर्गंधवायुभिः ॥ २२ ॥ चंदनोक्तैःपुष्पतल्पैर्मालाजालसमन्वितैः ॥ मधुलुब्धमधुघ्राणांकलशब्दै श्चशब्दितम् ॥ २३ ॥ रत्नालंकारशोभाढ्यैर्गोपीवृंदैश्चवेष्टितम् ॥ पंचाशत्कोटिगोपीभीरक्षितंराधिकाज्ञया ॥ २४ ॥ द्वा त्रिंशत्काननंतत्ररम्यंरम्यंमनोहरम् ॥ वृंदावनाभ्यंतरितंनिर्जनस्थलमुत्तमम् ॥ २५ ॥ सुपक्कमधुरस्वादुफलैर्वृंदारकंमुने ॥ गोष्ठानांचगवांचैवसमूहैश्चसमन्वितम् ॥ २६ ॥ पुष्पोद्यानसहस्रेणपुष्पितेनसुगंधिना ॥ मधुलुब्धमधुघ्राणांसमूहेनसम न्वितम् ॥ २७ ॥ पंचाशत्कोटिगोपीनांविलासैश्चविराजितम् ॥ श्रीकृष्णतुल्यरूपाणांसद्रत्नगुंठितैर्वरैः ॥ २८ ॥ दृष्ट्वावृंदा वनंरम्यंययुर्गोलोकमीश्वराः ॥ परितोवर्तुलाकारंकोटियोजनविस्तृतम् ॥ २९ ॥ रत्नप्राकारसंयुक्तंचतुर्द्वारान्वितंमुने ॥

गोपानांचसमूहैश्चद्वारपालैःसमन्वितम् ॥ ३० ॥ आश्रमैर्रत्नग्रथितैर्नानाभोगसमन्वितैः ॥ गोपीनांभक्तनृत्यानांपंचाश
त्कोटिभिर्युतम् ॥ ३१ ॥ भक्तानांगोपवृंदानामाश्रमैःशतकोटिभिः ॥ ततोऽधिकसुविस्तीर्णैःसद्रत्नग्रथितैर्युतम् ॥ ३२ ॥
आश्रमैःपार्षदानांचततोऽधिकविलक्षणैः ॥ अमूल्यरत्नरचितैःसंयुक्तंदशकोटिभिः ॥ ३३ ॥ पार्षदप्रवराणांचश्रीकृष्णरू
पधारिणाम् ॥ आश्रमैःकोटिभिर्युक्तंसद्रत्नेनविनिर्मितैः ॥ ३४ ॥ राधिकाशुद्धभक्तानांगोपीनामाश्रमैर्वरैः ॥ सद्रत्नरचि
तैर्द्रव्यैर्द्वात्रिंशत्कोटिभिर्युतम् ॥ ३५ ॥ तासांचकिंकरीणांचभवनैःसुमनोहरैः ॥ मणिरत्नादिरचितैःशोभितंदशकोटिभिः ॥
॥ ३६ ॥ देवास्तमद्भुतंदृष्ट्वाकियद्दूरंययुर्मुदा ॥ तत्राक्षयवटंरम्यंददृशुर्जगदीश्वराः ॥ ३७ ॥ पंचयोजनविस्तीर्णमूर्ध्वं
तद्द्विगुणंमुने ॥ सहस्रस्कंधसंयुक्तशाखासंस्थासमन्वितम् ॥ ३८ ॥ रक्तपक्वफलाकीर्णंशोभितंरत्नवेदिभिः ॥ कृष्णस्व
रूपांस्तन्मूलेददर्शवल्लभान्शिशून् ॥ ३९ ॥ पीतवस्त्रपरीधानान्क्रीडासक्तमनोहरान् ॥ चंदनोक्षितसर्वांगान्रत्नभूषणभूषि
तान् ॥ ४० ॥ ददृशुस्तत्रदेवेशाःपार्षदप्रवरान्हरेः ॥ ततोऽविदूरेददृशूराजमार्गंमनोहरम् ॥ ४१ ॥ सिंदूराकारमणिभिःपरितोर
चितंमुने ॥ इंद्रनीलैःपद्मरागैर्हीरकैरुचकैस्तथा ॥ ४२ ॥ निर्मितैर्वेदिभिर्युक्तंपरितोरत्नमंडपम् ॥ चंदनागरुकस्तूरीकुंकुमद्र
वर्चर्चितम् ॥ ४३ ॥ दधिपूर्णलाजफलपुष्पदूर्वांकुरान्वितम् ॥ सूक्ष्मसूत्रग्रंथियुक्तश्रीखंडपल्लवान्वितम् ॥ ४४ ॥ रंभास्तं
भसमूहैश्चकुंकुमाक्तैर्विराजितम् ॥ सद्रत्नमंडलघटैःफलशाखासमन्वितैः ॥ ४५ ॥ सिंदूरकुंकुमाक्तंचगंधचंदनचर्चितैः ॥
भूषितैःपुष्पमालाभिःपादपैःपरिभूषितम् ॥ ४६ ॥ गोपिकानांसमूहैश्चक्रीडासक्तैश्चवेष्टितम् ॥ बहुमूल्येनरत्नेनरत्नसो
पाननिर्मितान् ॥ ४७ ॥ वन्हिशौचांशुकैरम्यैःश्वेतचामरदर्पणैः ॥ रत्नतल्पविचित्रैश्चपुष्पमाल्यैर्विराजितान् ॥ ४८ ॥

षोडशद्वारसंयुक्तान्द्वारपालैश्चरक्षितान् ॥ परितःपरिखायुक्तानुरुप्राकारवेष्टितान् ॥ ४९ ॥ चंदनागरुकस्तूरीकुंकुमद्रव
चर्चितान् ॥ गृहान्मनोरमान्दृष्ट्वातेदेवागमनोत्सुकाः ॥ ५० ॥ जग्मुःशीघ्रंकियद्दूरंददृशुःसुंदरंततः॥ आश्रमंराधिकाया
श्चरासेश्वर्याश्चनारद ॥ ५१ ॥ देवाधिदेव्यागोपीनांवरायाश्चारुनिर्मितम् ॥ प्राणाधिकायाःकृष्णस्यरम्यद्रव्यमनोहरम् ॥
॥ ५२ ॥ सर्वानिर्वचनीयंचपंडितैर्नैनिरूपितम् ॥ सुचारुवर्तुलाकारंषट्गव्यूतिप्रमाणकम् ॥ ५३ ॥ शतमंदिरसंयुक्तंज्व
लितंरत्नतेजसा ॥ अमूल्यरत्नसाराणांचयैर्विरचितंवरम् ॥ ५४ ॥ दुर्लंघ्याभिर्गभीराभिःपरिखाभिःसुशोभितम् ॥ कल्प
वृक्षैःपरिवृतंपुष्पोद्यानशतांतरम् ॥ ५५ ॥ सुमूल्यरत्नखचितप्राकारैःपरिवेष्टितम् ॥ सद्रत्नवेदिकायुक्तैर्युक्तंद्वारैश्चसप्तभिः
॥ ५६ ॥ संयुक्तंरत्नचित्रैश्चविचित्रैर्वर्तुलंमुने ॥ प्रधानसप्तद्वारेभ्यःक्रमशःक्रमशोमुने ॥ ५७ ॥ सर्वतोऽपिततस्तत्रषोडश
द्वारसंयुतम् ॥ देवादृष्ट्वाचप्राकारंसहस्रधनुरुच्छ्रितम् ॥ ५८ ॥ सद्रत्नक्षुद्रकलशसमूहैःसुमनोहरैः ॥ प्रदीप्तंतेजसारम्यं
परमंविस्मयंययुः ॥ ५९ ॥ ततःप्रदक्षिणीकृत्यकियद्दूरंययुर्मुदा ॥ पुरतोगच्छतांतेषांपश्चाद्भूतंतदाश्रयम् ॥ ६० ॥ गोपा
नांगोपिकानांचददृशुश्चाश्रमान्परान् ॥ सुमूल्यरत्नरचितान्शतकोटिमितान्मुने ॥ ६१ ॥ दर्शंदर्शंचपरितोगोपानांसर्वमा
श्रमम् ॥ गोपिकानांचापरंवारम्यंरम्यंवनंवनम् ॥ ६२ ॥ गोलोकंनिखिलंदृष्ट्वापुनरंतंययुःसुराः ॥ तदैववर्तुलाकारंरम्यं
वृंदावनंवनम् ॥ ६३ ॥ ददृशुःशतशृंगंचतद्वहिर्विरजानदीम् ॥ विरजांतांययुर्देवाददृशुःशून्यमेवच ॥ ६४ ॥ वाय्वाधारं
चगोलोकंसद्रत्नमयमद्भुतम् ॥ ईश्वरेच्छाविनिर्माणंराधिकाज्ञानुबंधनात् ॥ ६५ ॥ युक्तंसहस्रैःसरसांकेवलंमंगलाल
यम् ॥ नृत्यंचददृशुस्तत्रदेवाश्चसुमनोहरम् ॥ ६६ ॥ सुतानंचारुसंगीतंराधाकृष्णगुणान्वितम् ॥ श्रुत्वैवगीतपीयूषंमू

च्छीमापुःसुरामुने ॥ ६७ ॥ क्षणेनचेतनांप्राप्यतेदेवाःकृष्णमानसाः ॥ ददृशुःपरमाश्चर्यंस्थानेस्थानेमनोहरम् ॥ ६८ ॥ ददृशुर्गोपिकाःसर्वानानावेषविधायकाः ॥ काश्चिन्मृदंगहस्ताश्चकाश्चिद्वीणाकरावराः ॥ काश्चिच्चामरहस्ताश्चकरतालकराःपराः ॥ काश्चिद्यंत्रादिहस्ताश्चरत्ननूपुरशोभिताः ॥ ७० ॥ सद्रत्नकिंकिणीजालशब्देनशब्दितावराः ॥ काश्चिन्मस्तककुंभाश्चनृत्यभेदमनोरथाः ॥ ७१ ॥ पुंवेषनायिकाःकाश्चित्काश्चित्तासांचनायिकाः ॥ कृष्णवेषधराःकाश्चिद्राधावेषधराःपराः ॥ ७२ ॥ काश्चित्संयोगविरताःकाश्चिदालिंगनेरताः ॥ क्रीडासक्ताश्चताद्दृष्ट्वासस्मिताजगदीश्वराः ॥ ७३ ॥ प्रगच्छंतःकियद्दूरंददृशुश्चाश्रमान्बहून् ॥ राधासखीनांगेहांश्चप्रधानानांचभारत ॥ ७४ ॥ रूपेणैवगुणेनैववेषेणयौवनेनच ॥ सौभाग्येनैववयसासदृशीनांचतत्रवै ॥ ७५ ॥ त्रयस्त्रिंशद्वयस्याश्चराधिकायाश्चगोपिकाः ॥ वेषानिर्वचनीयाश्चतासांनामानिचशृणु ॥ ७६ ॥ सुशीलाचशशिकलायमुनामाधवीरती ॥ कदंबमालाकुंतीचजान्हवीचस्वयंप्रभा ॥ ७७ ॥ चंद्रमुखीचसावित्रीगायत्रीसुमुखीसुखा ॥ पद्मालयापारिजातागौरीचसर्वमंगला ॥ ७८ ॥ कालिकाकमलादुर्गाभारतीचसरस्वती ॥ गंगांबिकामधुमतीचंपापर्णाचसुंदरी ॥ ७९ ॥ कृष्णप्रियासतीचैवनंदिनीनंदनेतिच ॥ एताःसमानाःसद्रत्नरचिताराधिकाप्रियाः ॥ ८० ॥ ब्रह्मांडाद्बहिरूर्ध्वंचनास्तिलोकस्तदूर्ध्वकः ॥ ऊर्ध्वंशून्यमयंसर्वंतदंतासृष्टिरेवच ॥ ८१ ॥ रसातलेभ्यःसप्तभ्योनास्त्यधःसृष्टिरेवच ॥ तदधश्चजलंध्वांतमगंतव्यमदृश्यकम् ॥ ब्रह्मांडांतंतद्बहिश्चसर्वंमत्तोनिशामय ॥ १८२ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेगोलोकवर्णनंनामचतुर्थोऽध्यायः ॥ ४ ॥

॥ श्रीनारायणउवाच ॥ ॥ गोलोकंनिखिलंदृष्ट्वादेवास्तेत्दृष्टमानसाः ॥ पुनराजग्मूराधायाःप्रधानद्वारमेवच ॥ १ ॥ सद्र

त्नमणिनिर्माणवेदिकायुग्मसंयुतम् ॥ हरिद्राकारमणिनावज्रसंमिश्रितेनच ॥ २ ॥ अमूल्य[illegible]चतकपाटेनविभूषित
म् ॥ द्वारेनियुक्तंदद्दशुर्वीरभानुमनुत्तमम् ॥ ३ ॥ रत्नसिंहासनस्थंचरत्नाभरणभूषितम् ॥ पीतवस्त्रपरीधानंसद्रत्नमुकुटो
ज्ज्वलम् ॥ ४ ॥ द्वारंचित्रविचित्रेणविचित्रंपरमाद्भुतम् ॥ सर्वंनिवेदनंचक्रुर्देवादौवारिकंमुदा ॥ ५ ॥ तानुवाचद्वारपा
लोनिःशंकंत्रिदशेश्वरान् ॥ नाहंविनाज्ञयागंतुंदातुंसांप्रतमीश्वरः ॥ ६ ॥ किंकरान्प्रेषयामासश्रीकृष्णस्थानमेवच ॥ हरेर
नुज्ञांसंप्राप्यददौगंतुंसुरान्मुने ॥ ७ ॥ तंसंभाष्यययुर्देवाद्वितीयद्वारमुत्तमम् ॥ ततोऽधिकंविचित्रंचसुंदरंसुमनोहरम् ॥
॥ ८ ॥ द्वारेनियुक्तंदद्दशुश्चंद्रभानुंचनारद ॥ किशोरंश्यामलंचारुस्वर्णवेत्रकरंवरम् ॥ ९ ॥ रत्नसिंहासनस्थंचरत्नभूष
णभूषितम् ॥ गोपानांचसमूहेनपंचलक्षेणशोभितम् ॥ १० ॥ तंसंभाष्यययुर्देवास्तृतीयद्वारमुत्तमम् ॥ ततोऽतिसुंदरंचि
त्रंज्वलंतंमणितेजसा ॥ ११ ॥ द्वारेनियुक्तंदद्दशुःसूर्यभानुंचनारद ॥ द्विभुजंमुरलीहस्तंकिशोरंश्याममसुंदरम् ॥ १२ ॥ म
णिकुंडलयुग्मेनकपोलस्थलराजितम् ॥ रत्नदंडकरंश्रेष्ठंप्रेष्यंराधेशयोःपरम् ॥ १३ ॥ नवलक्षेणगोपानांवेष्टितंचनृपेंद्र
वत् ॥ तंसंभाष्यययुर्देवाश्चतुर्थंद्वारमेवच ॥ १४ ॥ तेभ्योविलक्षणंरम्यंसुदीप्तंमणितेजसा ॥ अत्यद्भुतविचित्रेणभूषितं
सुमनोहरम् ॥ १५ ॥ द्वारेनियुक्तंदद्दशुर्वसुभानुंव्रजेश्वरम् ॥ किशोरंसुंदरवरंमणिदंडकरंपरम् ॥ १६ ॥ रत्नसिंहासनस्थं
चरत्नभूषणभूषितम् ॥ पक्वबिंबाधरोष्ठंचसस्मितंसुमनोहरम् ॥ १७ ॥ तंसंभाष्यययुर्देवाःपंचमंद्वारमेवच ॥ वज्रभित्ति
स्थितैश्चित्रविचित्रैर्ज्वलितंपरम ॥ १८ ॥ द्वारपालंचदद्दशुर्देवभान्वभिधायकम् ॥ चारुसिंहासनस्थंचरत्नभूषणभूषि
तम् ॥ १९ ॥ मयूरपिच्छचूडंचरत्न[illegible]लाविभूषितम् ॥ कदंबपुष्पसंसक्तसद्रत्नकुंडलोज्ज्वलम् ॥ २० ॥ चंदनागरुकस्तू

रीकुंकुमद्रवचर्चितम् ॥ नृपेंद्रवरतुल्यंचदशलक्षप्रजान्वितम् ॥ २१ ॥ संवेत्रपाणिंसंभाष्ययययुर्दैवामुदान्विताः ॥ विल
क्षणंद्वारषट्कंचित्रराजिविराजितम् ॥ २२ ॥ वज्रभित्तियुग्मयुक्तेपुष्पमाल्यविभूषिते ॥ द्वारेनियुक्तंददृशुःशुक्रभानुंव्रजे
श्वरम् ॥ २३ ॥ नानालंकारशोभाढ्यंदशलक्षव्रजान्वितम् ॥ श्रीखंडपल्लवासक्तकपोलंकुंडलोज्ज्वलम् ॥ २४ ॥ तूर्णंसु
रास्तंसंभाष्ययययुर्द्वारंचसप्तमम् ॥ नानाप्रकारचित्रंचषड्भ्यश्चातिविलक्षणम् ॥ २५ ॥ द्वारेनियुक्तंददृशूरत्नभानुंहरेः
प्रियम् ॥ भूषितंभूषणैरम्यैर्मणिरत्नमनोहरैः ॥ २६ ॥ गोपैर्द्वादशलक्षैश्चराजेंद्रमिवराजितम् ॥ वज्रसिंहासनस्थंचस्मे
राननसरोरुहम् ॥ २७ ॥ तंवेत्रहस्तंसंभाष्यजग्मुर्देवेश्वरामुदा ॥ विचित्रमष्टमंद्वारंसप्तभ्योपिविलक्षणम् ॥ २८ ॥ दौ
वारिकंतेददृशुःसुपार्श्वंसुमनोहरम् ॥ सस्मितंसुंदरवरंश्रीखंडतिलकोज्ज्वलम् ॥ २९ ॥ बंधुजीवाधरोष्ठंचरत्नकुंडलमंडि
तम् ॥ सर्वालंकारशोभाढ्यंरत्नदंडधरंवरम् ॥ ३० ॥ गोपैर्द्वादशलक्षैश्चकिशोरैश्चसमन्वितम् ॥ ततःशीघ्रंययुर्देवानवमंद्वा
रमीप्सितम् ॥ ३१ ॥ वज्रसद्रत्नरचितंचतुर्वेदीसमन्वितम् ॥ अपूर्वचित्ररचितमालाजालैर्विराजितम् ॥ ३२ ॥ द्वारपा
लंचददृशुःसुबलंललिताकृतिं ॥ नानाभूषणशोभाढ्यंभूषणार्हंमनोहरम् ॥ ३३ ॥ व्रजैर्द्वादशलक्षैश्चसंयुक्तंसुमनोहरम्
तंदंडहस्तंसंभाष्यसुराद्वारांतरंययुः ॥ ३४ ॥ विशिष्टंदशमद्वारंदृष्ट्वातेविस्मयंययुः ॥ सर्वानिर्वचनीयंचाप्यदृष्टमश्रुतंमुने
॥ ३५ ॥ ददृशुर्द्वारपालंचसुदामानंचसुंदरम् ॥ रूपानिर्वचनीयंचकृष्णतुल्यंमनोहरम् ॥ ३६ ॥ गोपैर्विंशतिलक्षाणांस
मूहैःपरिवारितम् ॥ तंदंडहस्तंदृष्ट्वैवजग्मुर्द्वारांतरंसुराः ॥ ३७ ॥ द्वारमेकादशाख्यंचसुचित्रंमहदद्भुतम् ॥ द्वारपालंचतत्र
स्थंश्रीदामानंव्रजेश्वरम् ॥ ३८ ॥ राधिकापुत्रतुल्यंचपीतवस्त्रेणभूषितम् ॥ अमूल्यरत्नरचितरत्नसिंहासनस्थितम् ॥ ३९ ॥

अमूल्यरत्नभूषाभिर्भूषितंसुमनोहरम् ॥ कोटिगोपैःपरिवृतंराजेंद्राधिकमुज्ज्वलम् ॥ ४० ॥ तत्संभाष्ययययुर्द्वारंद्वादशा
ख्यंसुरामुदा ॥ अमूल्यरत्नरचितवेदिकाभिःसमन्वितम् ॥ ४१ ॥ सर्वेषांदुर्लभंचित्रमदृश्यमश्रुतंमुने ॥ वज्रभित्तिस्थि
तंचित्रंसुंदरंसुमनोहरम् ॥ ४२ ॥ द्वारेनियुक्तादद्दशुर्देवागोपांगनावराः ॥ नवयौवनसंपन्नारत्नाभरणभूषिताः ॥ ४३ ॥
पीतवस्त्रपरीधानाःकबरीभारभूषिताः ॥ रत्नकुंडलयुग्मेनगंडस्थलविराजिताः ॥ ४४ ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चि
ताः ॥ पीनश्रोणीभरानम्रानितंबाभारपीडिताः ॥ ४५ ॥ गोपीनांशतकोटीनांश्रेष्ठाःप्रेष्टाहरेरपि ॥ गोपीश्चकोटिशोदृष्ट्वासु
रास्तेविस्मयंययुः ॥ ४६ ॥ संभाष्यतामुदायुक्काययुर्द्वारांतरंमुने ॥ ततश्चक्रमशोविप्रत्रिषुद्वारेषुतत्रवै ॥ ४७ ॥ गोपां
गनानांश्रेष्ठाश्चदद्दशुःसुमनोहराः ॥ वराणांचवरारम्याधन्यामान्याश्चशोभनाः ॥ ४८ ॥ सर्वाःसौभाग्ययुक्ताश्चराधिका
याःप्रियाश्चताः ॥ भूषिताभूषणैरम्यैःप्रोद्भिन्ननवयौवनाः ॥ ४९ ॥ एवंद्वारत्रयंदृष्ट्वास्वप्नज्ञानाद्भुताश्रुतम् ॥ अदृश्यम
तिरम्यंचाप्यनिरूप्यंविचक्षणैः ॥ ५० ॥ तास्ताःसंभाष्यदेवास्तेविस्मितायुरीश्वराः ॥ राधाभ्यंतरितंद्वारंषोडशाख्यं
मनोहरम् ॥ ५१ ॥ सर्वासांचप्रधानंचगोप्यंगोपांगनागणैः ॥ त्रयस्त्रिंशद्वयस्यानांनिकरैर्वेष्टितंमुने ॥ ५२ ॥ तेषांनिर्व
चनीयैश्चनानागुणसमन्वितैः ॥ रूपयौवनसंपन्नैरत्नालंकारभूषितैः ॥ ५३ ॥ रत्नकंकणकेयूररत्ननूपुरभूषितैः ॥ सद्रत्नकिं
किणीजालैर्मध्यदेशविभूषितैः ॥ ५४ ॥ रत्नकुंडलयुग्मेनगंडस्थलविराजितैः ॥ प्रफुल्लमालतीमालाजालैर्वक्षस्थलोज्ज्व
लैः ॥ ५५ ॥ शरत्पार्वणपद्मानांप्रभांमुष्णन्मुखेंदुभिः ॥ पारिजातप्रसूनानांमालाजालेनवेष्टितैः ॥ ५६ ॥ पक्वबिंबाधरोष्ठै
श्चस्मेराननसरोरुहैः ॥ पक्वदाडिमबीजाभिःशोभितैर्दंतपंक्तिभिः ॥ ५७ ॥ चारुचंपकवर्णाभिर्मध्यस्थलकृशैर्मुने ॥ गज

मौक्तिकयुक्ताभिर्नासिकाभिर्विराजितैः ॥ ५८ ॥ खगेंद्रचारुचंचूनांशोभामुष्णाभिरेवच ॥ गजेंद्रगंडकठिणस्तनभार
भरानतैः ॥ ५९ ॥ पीनश्रोणिभरार्तैश्चमुकुंदपदमानसैः ॥ निमेषरहितादेवाद्वारंचददृशुश्चताः ॥ ६० ॥ सद्रत्नमणिरत्नैश्चवे
दिकायुग्मशोभितम् ॥ हरिन्मणीनांस्तंभानांसमूहैःसंयुतंसदा ॥ ६१ ॥ सिंदूराकारमणिभिर्मध्यस्थलविराजितैः ॥ पारि
जातप्रसूनानांमालाजालैर्विभूषितम् ॥ ६२ ॥ तत्संस्पर्शैर्गंधवाहैःसर्वत्रसुरभीकृतम् ॥ दृष्ट्वातत्परमाश्चर्यंराधिकाभ्यं
तरंसुराः ॥ ६३ ॥ श्रीकृष्णचरणांभोजदर्शनैकमनोरथाः ॥ ताःसंभाष्यययुःशीघ्रंपुलकांचितविग्रहाः ॥ ६४ ॥ भक्त्युद्रे
कादश्रुपूर्णाःकिंचिन्नम्रात्मकंधराः ॥ आरात्तेददृशुर्देवाराधिकाभ्यंतरंवरम् ॥ ६५ ॥ मंदिराणांचमध्यस्थंचतुःशालंमनो
हरम् ॥ अमूल्यरत्नसाराणांसारेणरचितंपरम् ॥ ६६ ॥ नानारत्नमणिस्तंभैर्वज्रमुक्तैश्चभूषितम् ॥ पारिजातप्रसूनानां
मालाजालैर्विराजितम् ॥ ६७ ॥ मुक्तासमूहैर्माणिक्यैःश्वेतचामरदर्पणैः ॥ अमूल्यरत्नसाराणांकलशैर्भूषितंमुने ॥ ६८ ॥
पट्टसूत्रग्रंथियुक्तश्रीकृष्णपल्लवान्वितैः ॥ मणिस्तंभसमूहैश्चरम्यप्रांगणभूषितम् ॥ ६९ ॥ शुक्लधान्यशुक्लपुष्पप्रवाल
फलतंडुलैः ॥ पर्णदूर्वाक्षतैर्लाजैर्निर्मंथनविभूषितैः ॥ ७० ॥ फलयुक्तैरत्नकुंभैःसिंदूरकुंकुमान्वितैः ॥ प्रसूनाक्तैर्गंधवाहैः
सर्वत्रसुरभीकृतम् ॥ ७१ ॥ सर्वानिर्वचनीयंचयद्रव्यमनिरूपितम् ॥ ब्रह्मांडेदुर्लभंयद्यद्वस्तुभिस्तैर्विराजितम् ॥ ७२ ॥
पारिजातप्रसूनानांमालाजालैःसुशोभितम् ॥ रत्नशय्यासुललिताःसूक्ष्मवस्त्रपरिच्छदाः ॥ ७४ ॥ कोटिशोरत्नकुंभाश्चर
त्नपात्राणिनारद ॥ अमूल्यानिचचारूणितैस्तैरेवविभूषितम् ॥ ७५ ॥ नानाप्रकारवाद्यानांकलनादैर्निनादितम् ॥ स्वर
यंत्रैश्चवीणाभिर्गोपीसंगीतसुश्रुतम् ॥ ७६ ॥ एवमभ्यंतरंदृष्ट्वाबभूवुर्विस्मिताःसुराः ॥ सुश्राव्यंधरंगीतंददृशुर्नृत्यमुत्त

मम् ॥ ७७ ॥ मोहितावाद्यशब्दैश्च मृदंगानांचनारद ॥ गोपानांकृष्णतुल्यानांसमूहैःपरिवारितम् ॥ ७८ ॥ राधासखीनांगो
पीनांवृंदवृंदैर्विराजितम् ॥ राधाकृष्णगुणोद्रेकपदसंगीतसुश्रुतम् ॥ ७९ ॥ तत्रतस्थुःसुराःसर्वेध्यानैकतानमानसाः ॥
रत्नसिंहासनंरम्यंददृशुस्त्रिदशेश्वराः ॥ ८० ॥ धनुःशतप्रमाणंचपरितोवर्तुलाकृतिम् ॥ समुद्रक्षुद्रकलशसमूहैश्चसमन्वि
तम् ॥ ८१ ॥ चित्रपुत्तलिकापुष्पचित्रकाननभूषितम् ॥ तत्रतेजःसमूहंचसूर्यकोटिसमप्रभम् ॥ ८२ ॥ प्रभयाज्वलितं
ब्रह्मन्नाश्चर्यंमहदद्भुतम् ॥ सप्ततालप्रमाणंतद्व्याप्तमूर्ध्वंसमंततः ॥ ८३ ॥ तेजोमुषंचसर्वेषांमहाश्रमविवर्जितम् ॥ सर्वव्या
पिसर्वबीजंचक्षुरोधकरंपरम् ॥ ८४ ॥ दृष्ट्वातेजःस्वरूपंचतेदेवाध्यानतत्पराः ॥ प्रणेमुःपरयाभक्त्याभक्तिनम्रात्मकंधराः
॥ ८५ ॥ परमानंदसंयोगादश्रुपूर्णविलोचनाः ॥ पुलकांकितसर्वांगावांछापूर्णमनोरथाः ॥ ८६ ॥ नत्वातेजःस्वरूपंचतमी
शंत्रिदशेश्वराः ॥ तत्रोत्थायध्यानयुक्ताःप्रतस्थुस्तेजसःपुरः ॥ ८७ ॥ ध्यात्वैवंजगतांधाताबभूवसंपुटांजलिः ॥ दक्षिणे
शंकरंकृत्वावामेधर्मंचनारद ॥ ८८ ॥ भक्त्युद्रेकात्प्रतुष्टावध्यानैकतानमानसः ॥ परात्परंगुणातीतंपरमात्मानमीश्वरम्
॥ ८९ ॥ ब्रह्मोवाच ॥ ॥ वरंवरेण्यंवरदंवरदानांचकारणम् ॥ कारणंसर्वभूतानांतेजोरूपंनमाम्यहम् ॥ ९० ॥ मंगलंमंग
लानांचमंगलंमंगलप्रदम् ॥ समस्तमंगलाधारंतेजोरूपंनमाम्यहम् ॥ ९१ ॥ स्थितंसर्वत्रनिर्लिप्तमात्मरूपंपरात्परम् ॥
निरीहमवितर्क्यंचतेजोरूपंनमाम्यहम् ॥ ९२ ॥ सगुणंनिर्गुणंब्रह्मज्योतीरूपंसनातनम् ॥ साकारंचनिराकारंतेजोरू
पंनमाम्यहम् ॥ ९३ ॥ तमनिर्वचनीयंचव्यक्तमव्यक्तमेककम् ॥ स्वेच्छामयंसर्वरूपंतेजोरूपंनमाम्यहम् ॥ ९४ ॥ गुण
त्रयविभागायरूपत्रयधरंपरम् ॥ कलयातेकृताःसर्वेकिंजानंतिश्रुतेःपरम् ॥ ९५ ॥ सर्वाधारंसर्वरूपंसर्वबीजमबीजकम्

सर्वांतकमनंतंचतेजोरूपंनमाम्यहम् ॥ ९६ ॥ लक्ष्यंषड्गुणरूपंचवर्णनीयंविचक्षणैः ॥ किंवर्णनीयंनिर्लक्ष्यंतेजोरूपं० ॥ ॥ ९७ ॥ अशरीरंविग्रहवदिंद्रियंवदतींद्रियम् ॥ यदसाक्षिसर्वसाक्षितेजो० ॥ ९८ ॥ गमनार्हमपादंयदचक्षुःसर्वदर्शनम् हस्तास्यहीनंतद्भोक्तृतेजो० ॥ ९९ ॥ वेदेनिरूपितंवस्तुसंतःशक्ताश्चवर्णितुम् ॥ वेदेनिरूपितंयत्तत्तेजो० ॥ १०० ॥ सर्वेशं यदनीशंयत्तथाचादिमनादियत् ॥ सर्वात्मकमनात्मंयत्तेजो० ॥ १०१ ॥ अहंविधाताजगतोवेदानांजनकःस्वयम् ॥ पा ताधर्मोहरोहर्तास्तोतुंशक्तानकेपियत् ॥ २ ॥ सेवयातवधर्मोयंपालनेचनिरूपितः ॥ तवाज्ञयायःसंहर्तात्वयाकालेनिरू पिते ॥ ३ ॥ निःशेषोत्पत्तिकर्ताऽहंत्वत्पादांभोजसेवया ॥ कर्मिणांफलदाताचत्वंभक्तानांचनःप्रभुः ॥ ४ ॥ ब्रह्मांडेविंबस द्दशेभृत्याविषयिणोवयम् ॥ एवंकतिविधाःसंतितेष्वनंतेषुसेवकाः ॥ ५ ॥ यथानसंख्यारेणूनांतथातेषामणीयसाम् ॥ सर्वेषांजनकश्चैषोयस्तंस्तोतुंचकेक्षमाः ॥ ६ ॥ एकैकलोमविवरेब्रह्मांडमेकमेककम् ॥ यस्यैवमहतोविष्णोःषोडशांशस्त वैवसः ॥ ७ ॥ ध्यायंतेयोगिनःसर्वेतवैतद्रूपमीप्सितम् ॥ त्वद्भक्तदास्यनिरताःसेवंतेचरणांबुजम् ॥ ८ ॥ किशोरंसुंदर तरंयद्रूपंकमनीयकम् ॥ मंत्रध्यानानुरूपंचदर्शयास्माकमीश्वर ॥ ९ ॥ नवीनजलदश्यामंपीतांबरधरंवरम् ॥ द्विभुजंमु रलीवक्त्रंसस्मितंसुमनोहरम् ॥ ११० ॥ मयूरपिच्छचूडंचमालतीजालमंडितम् ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चितम् ॥ ११ ॥ अमूल्यरत्नसाराणांसारभूषणभूषितम् ॥ अमूल्यरत्नरचितकिरीटमुकुटोज्ज्वलम् ॥ १२ ॥ शरत्प्रफुल्लपद्मानां प्रभामुट्चारुपंकजम् ॥ पक्वबिंबविनिंद्यैकमोष्ठाधरमनिंदितम् ॥ १३ ॥ पक्वदाडिमबीजाभदंतपंक्तिमनोहरम् ॥ केली कदंबमूलस्थंस्थितंरासरसोन्मुखम् ॥ १४ ॥ गोपीवक्त्रस्मितततनुंराधावक्षस्थलस्थितम् ॥ एवंवांछितरूपंतेद्रष्टुंकोवानचो

त्सुकः ॥ [illegible] ॥ इत्येवमुक्त्वाविश्वसृट्प्रणनामपुनःपुनः ॥ एतत्स्तोत्रेणतुष्टावधर्मोऽपिश [illegible] ॥ १६ ॥ ननामभूयो
भूयश्चसाश्रुपूर्णविलोचनः ॥ तिष्ठंतोऽपिपुनःस्तोत्रंप्रचक्रुस्त्रिदशेश्वराः ॥ १७ ॥ व्याप्तास्तत्राश्रमेसर्वैश्रीकृष्णतेजसामुने
स्तवराजमिमंनित्यंब्रह्मेशधर्मभिःकृतम् ॥ १८ ॥ पूजाकालेहरेरेवंभक्तियुक्तश्चयःपठेत् ॥ सुदुर्लभांदृढांभक्तिंनिश्चलांलभ
तेहरेः ॥ १९ ॥ सुरासुरमनींद्राणांदुर्लभंदास्यमेवच ॥ अणिमादिकसिद्धिंचसालोक्यादिचतुष्टयं ॥ २० ॥ इहैवविष्णुतुल्यश्च
विख्यातःपूजितोध्रुवं ॥ वाक्सिद्धिर्मंत्रसिद्धिश्चभवेत्तस्यसुनिश्चितं ॥ २१ ॥ सर्वसौभाग्यसंयुक्तंयशसापूरितंजगत् ॥ पुत्र
श्चविद्याकवितानिश्चलाकमलान्विता ॥ २२ ॥ पत्नीपतिव्रतासाध्वीसुशीलासुस्थिराःप्रजाः ॥ कीर्तिश्चचिरकालीनात्वंतेकृ
ष्णांतिकेगतिः ॥ १२३ ॥ इतिश्रीब्र० गोलोकवर्णनेश्रीकृष्णस्तोत्रराजपठनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ श्रीनारायण
उवाच ॥ ॥ ध्यात्वास्तुत्वाचतिष्ठंतोदेवास्तेतेजसःपुरः ॥ ददृशुस्तेजसोमध्येशरीरंकमनीयकम् ॥ १ ॥ जलदांभोजव
र्णाभंसस्मितंसुमनोहरम् ॥ परमाल्हादकंरूपंत्रैलोक्यचित्तमोहनम् ॥ २ ॥ गंडस्थलकपोलाभ्यांज्वलन्मकरकुंडलम् ॥
सद्रत्ननूपुराभ्यांचचरणांभोजराजितम् ॥ ३ ॥ वन्हिशुद्धंहरिद्राभामूल्यवस्त्रविराजितम् ॥ मणिरत्नेंद्रसाराणांस्वेच्छा
कौतुकनिर्मितैः ॥ ४ ॥ भूषितंभूषणैरम्यैस्तद्रूपेणैवभूषितैः ॥ विनोदमुरलीयुक्तबिंबाधरमनोहरम् ॥ ५ ॥ प्रसन्नेक्षणप
श्यंतंभक्तानुग्रहकातरम् ॥ सद्रत्नगुटिकायुक्तकवचोरःस्थलोज्ज्वलम् ॥ ६ ॥ कौस्तुभासक्तवक्षस्तुप्रदीप्ततेजसोज्ज्वल
म् ॥ तत्रतेजसिचार्वंगींददृशूराधिकाभिधाम् ॥ ७ ॥ पश्यंतंसस्मितंकांतंपश्यंतींवक्रचक्षुषा ॥ मुक्तापंक्तिविनिंद्यैकदंत
पंक्तिविराजिताम् ॥ ८ ॥ ईषद्धास्यप्रसन्नास्यांशरत्पंकजलोचनाम् ॥ शरत्पार्वणचंद्राभविनिंदास्यमनोहराम् ॥ ९ ॥

बंधुजीवप्रभामुष्टाधरौष्ठरुचिराननाम् ॥ रणन्मंजीरयुक्तेनपादांबुजविराजिताम् ॥ १० ॥ मणींद्राणांप्रभामोषनखरा
जिविराजिताम् ॥ कुंकुमाभासमाच्छाद्यपदाधोरागभूषिताम् ॥ ११ ॥ अमूल्यरत्नसाराणांरशनाश्रोणिभूषिताम् ॥ हुताश
नविशुद्धांशुकामूल्यज्वलितोज्ज्वलाम् ॥ १२ ॥ महामणींद्रसाराणांकिंकिणीमध्यसंस्थिताम् ॥ सद्रत्नहारकेयूरकरकंक
णभूषिताम् ॥ १३ ॥ रत्नेंद्रसाररचितकपोलोज्ज्वलकुंडलाम् ॥ कर्णोपरिमणींद्राणांकर्णभूषणभूषिताम् ॥ १४ ॥ खगें
द्रचंचुनासाग्रगजेंद्रमौक्तिकान्विताम् ॥ मालतीमालयावक्रकबरीभारबिभ्रतीम् ॥ १५ ॥ मालयाकौस्तुभेंद्राणांवक्षस्थ
लसुशोभिताम् ॥ पारिजातप्रसूनानांमालाजालोज्ज्वलांबराम् ॥ १६ ॥ रत्नांगुलीयनिकरैःकरांगुलिविभूषिताम् ॥ दि
व्यशंखविकारैश्चचित्रराग विभूषितैः ॥ १७ ॥ सूक्ष्मसूत्राकृतैरम्यैर्भूषितांशंखभूषणैः ॥ सद्रत्नसारगुटिकाराजिसूत्रसुशो
भिताम् ॥ १८ ॥ प्रतप्तस्वर्णवर्णाभामाच्छाद्यचारुविग्रहाम् ॥ नितंबश्रोणिललितांपीनस्तननतांबराम् ॥ १९ ॥ भूषितांभूष
णैःसर्वैःसौंदर्येणविभूषितैः ॥ विस्मितास्त्रिदशाःसर्वेदृष्ट्वातामीश्वरींवराम् ॥ तुष्टुवुस्तेसुराःसर्वेपूर्णसर्वमनोरथाः ॥ २० ॥
ब्रह्मोवाच ॥ तवचरणसरोजेमन्मनश्चंचरीकोभ्रमतुसततमीशेप्रेमभक्त्यासरोजे ॥ भुवनविभवभोगात्तापशांत्यौषधाय
सुदृढसुपरिपक्वांदेहिभक्तिंचदास्यम् ॥ २१ ॥ शंकरउवाच ॥ भवजलनिधिमग्नश्चित्तमीनोमदीयोभ्रमतिसततमस्मिन्घोर
संसारकूपे ॥ विषयमतिविनिंद्यंसृष्टिसंहाररूपमपनयतवभक्तिंदेहिपादारविंदे ॥ २२ ॥ धर्मउवाच ॥ तवनिजजनसार्द्धंसंगमो
मेमदीशभवतुविषयबंधच्छेदनेतीक्ष्णखड्गः ॥ तवचरणसरोजेस्थानदानैकहेतुर्जनुषिजनुषिभक्तिंदेहिपादारविंदे ॥ २३ ॥
इत्येवंस्तवनंकृत्वापरिपूर्णैकमानसाः ॥ कामपूरस्यपुरतस्तिष्ठंतोराधिकापतेः ॥ २४ ॥ सुराणांस्तवनंश्रुत्वातानुवाचकृपा

निधिः ॥ हितंतथ्यंचवचनंस्मेराननसरोरुहः॥ २५ ॥ श्रीकृष्णउवाच ॥ ॥ तिष्ठतागच्छतसुरामदायानात्रसंशयः ॥ शिवा
श्रयाणांकुशलंप्रष्टुंयुक्तंनसांप्रतम् ॥ २६ ॥ निश्चिंताभवतात्रैवकाचिंतावोमयिस्थिते ॥ स्थितोहंसर्वजीवेषुप्रत्यक्षोऽहं
स्तवेनवै ॥ २७ ॥ युष्माकंयमभिप्रायंसर्वंजानामिनिश्चितम् ॥ शुभाशुभंचयत्कर्मकालेखलुभविष्यति ॥ २८ ॥ महत्क्षु
द्रंचयत्कर्मसर्वंकालकृतंसुराः ॥ स्वेस्वेकालेचतरवःफलिताःपुष्पिणःसदा ॥ २९ ॥ परिपक्वफलाःकालेकालेपक्वफलान्वि
ताः ॥ सुखंदुःखंविपत्संपत्शोकचिंताशुभाशुभं ॥ ३० ॥ स्वकर्मफलनिष्ठंचसर्वकालेप्युपस्थितम् ॥ नहिकस्यप्रियःको
वाविप्रियोवाजगत्त्रये ॥ ३१ ॥ कालेकार्यवशात्सर्वेभवंत्येवाप्रियाप्रियाः ॥ राजानोमनवःपृथ्व्यांदृष्टवायुष्माभिरत्रवै
॥ ३२ ॥ स्वकर्मफलपाकेनसर्वेकालवशंगताः ॥ युष्माकमधुनाचैवगोलोकेयत्क्षणंगतम् ॥ ३३ ॥ पृथिव्यांतत्क्षणेनैवसप्त
मन्वंतरंगतम् ॥ इंद्राःसप्तगतास्तत्रदेवेंद्रश्चाष्टमोऽधुना ॥ ३४ ॥ कालचक्रंभ्रमत्येवमदीयंचदिवानिशम् ॥ इंद्राश्चमानवा
भूपाःसर्वेकालवशंगताः ॥ ३५ ॥ कीर्तिःपृथ्व्यांपुण्यमघकथामात्रावशेषिताः ॥ अधुनाऽपिचराजानोदुष्टाश्चहरिनिंदकाः
॥ ३६ ॥ बभूवुर्बहवोभूमौमहाबलपराक्रमाः ॥ सर्वेयास्यंतिराजानःकलांतरवशंध्रुवम् ॥ ३७ ॥ उपस्थितोपिकालोयंवातो
वातिनिरंतरम् ॥ वन्हिर्दहतिसूर्यश्चतपत्येवममाज्ञया ॥ ३८ ॥ व्याधयःसंतिदेहेषुमृत्युश्चरतिजंतुषु ॥ वर्षंत्येतेजलधराःस
र्वेदेवाममाज्ञया ॥ ३९ ॥ ब्राह्मण्यनिष्ठाविप्राश्चतपोनिष्ठास्तपोधनाः ॥ ब्रह्मर्षयोब्रह्मनिष्ठायोगनिष्ठाश्चयोगिनः ॥ ४० ॥
तेसर्वेमद्भयाद्भीताःस्वकर्मधर्मतत्पराः ॥ मद्भक्ताश्चैवनिःशंकाःकर्मनिर्मूलकारकाः ॥ ४१ ॥ देवाःकालस्यकालोहंविधातु
र्विधिरेवच ॥ संहारकर्तुःसंहर्तापातुःपातापरात्परः ॥ ४२ ॥ ममाज्ञयाऽयंसंहर्तानाम्नातेनहरःस्मृतः ॥ त्वंविश्वसृट्सृष्टिहे

तो:पाताधर्मंश्चरक्षणात् ॥ ४३ ॥ ब्रह्मादितृणपर्यंतंसर्वेषामहमीश्वर: ॥ स्वकर्मफलदाताऽहंकर्मनिर्मूलकारक: ॥ ४४ ॥ अ
हंयान्संहरिष्यामिकस्तेषामपिरक्षिता ॥ यानहंपालयिष्यामितेषांहंतानकोपिवा ॥ ४५ ॥ सर्वेषामपिसंहर्तास्रष्टापाताऽह
मेवच ॥ नाहंशक्तश्चभक्तानांसंहारेनित्यदेहिनाम् ॥ ४६ ॥ भक्तामामानुगानित्यंमत्पादार्चनतत्परा: ॥ अहंभक्तांतिके
शश्वत्तेषांरक्षणहेतवे ॥ ४७ ॥ सर्वेनश्यंतिब्रह्मांडेप्रभवंतिपुन:पुन: ॥ नमेभक्ता:प्रणश्यंतिनि:शंकाश्चनिरापद: ॥ ४८ ॥
अतोविपश्चित:सर्वेदास्यंवांछतिनोवरम् ॥ येमांदास्यंप्रयाचंतेधन्यास्तेऽन्येचवंचिता: ॥ ४९ ॥ जन्ममृत्युजराव्याधि
भयंचयमयातना ॥ अन्येषांकर्मिणामस्तिनभक्तानांचकर्हिचित् ॥ ५० ॥ भक्तानलिप्ता:पापेषुपुण्येषुसर्वकर्मिण: ॥ अ
हंधुनोमितेषांचकर्मभोगान्सुनिश्चितम् ॥ ५१ ॥ अहंप्राणश्चभक्तानांभक्ता:प्राणाममापिच ॥ ध्यायंतेतेचमांनित्यंतान्स्म
रामिदिवानिशम् ॥ ५२ ॥ चक्रंसुदर्शनंनामशोडषारंसुतीक्ष्णकम् ॥ यत्तेज:षोडशांशोऽपिनास्तिसर्वेषुजीविषु ॥ ५३ ॥
भक्तांतिकेतुतच्चक्रंदत्वारक्षार्थमीप्सितम् ॥ नस्वास्थ्यंनचप्रीतिर्मेयामितेषांचसन्निधिम् ॥ ५४ ॥ नमेस्वास्थ्यंचवैकुंठे
गोलोकेराधिकांतिके ॥ यत्रतिष्ठंतिभक्तास्तेतत्रतिष्ठाम्यहर्निशम् ॥ ५५ ॥ प्राणेभ्य:प्रेयसीराधास्थितोरसिदिवानिशम्
यूयंप्राणाधिकालक्ष्मीर्नमेभक्तात्परशप्रिया ॥ ५६ ॥ भक्तदत्तंचयव्द्रव्यंभक्त्याश्नामिसुरेश्वरा: ॥ अभक्तदत्तंनाश्नामिध्रुवं
भुंक्तेबलिंस्वयम् ॥ ५७ ॥ स्त्रीपुत्रस्वजनान्त्यक्त्वाध्यायंतेमामहर्निशम् ॥ युष्मान्विहायतान्नित्यंस्मराम्यहमहर्निशम्
॥ ५८ ॥ दुष्टायदामेभक्तानांब्राह्मणानांगवामपि ॥ क्रतूनांदेवतानांचहिंसांकुर्वंतिनिश्चितम् ॥ ५९ ॥ तथाचिरंतेनश्यंति
यथावन्हौतृणानिच ॥ नकोपिरक्षितातेषांमयिहंतर्युपस्थिते ॥ ६० ॥ यास्यामिपृथिवींदेवायातयूयंस्वमालयम् ॥ यू

यंचैवांशरूपेणशीघ्रंगच्छतभूतलम् ॥ ६१ ॥ इत्युक्काजगतांनाथोगोपानाहूयगोपिकाः ॥ उवाचमधुरंवाक्यंसत्यंयत्स
मयोचितम् ॥ ६२ ॥ गोपागोप्यश्चश्टणुतयातनंदव्रजंपरम् ॥ वृषभानुगृहेक्षिप्रंगच्छत्वमपिराधिके ॥ ६३ ॥ वृषभा
नुप्रियासाध्वीनंदगोपकलावती ॥ सुबलस्यसुतासाचकमलांशसमुद्भवा ॥ ६४ ॥ पितृणांमानसीकन्याधन्यामान्याच
योषिताम् ॥ पुरादुर्वाससःशापाज्जन्मतस्याव्रजेगृहे ॥ ६५ ॥ तस्यागृहेजन्मलभशीघ्रंनंदव्रजंव्रज ॥ त्वामहंबालरूपे
णगृह्णामिकमलानने ॥ ६६ ॥ त्वंमेप्राणाधिकाराधेतवप्राणाधिकोप्यहम् ॥ नकिंचिदावयोर्भिन्नमेकांगंसर्वदैवहि ॥ ६७ ॥
श्रुत्वैवंराधिकातत्ररुरोदप्रेमविह्वला ॥ पपौचक्षुश्चकोराभ्यांमुखचंद्रंहरेर्मुने ॥ ६८ ॥ जनुर्लभतगोपाश्चगोप्यश्चपृथिवी
तले ॥ गोपानामुत्तमानांचमंदिरेमंदिरेशुभे ॥ ६९ ॥ एतस्मिन्नंतरेसर्वेददृशूरथमुत्तमम् ॥ मणिरत्नेंद्रसारेणवन्हिशुद्धेन
भूषितम् ॥ ७० ॥ सद्रत्नकलशानांचसहस्रेणसुशोभितम् ॥ पारिजातप्रसूनानांमालाजालैर्विराजितम् ॥ ७१ ॥ पार्षद
प्रवरैर्युक्तंशातकुंभमयंशुभम् ॥ तेजःस्वरूपमतुलंशतसूर्यसमप्रभम् ॥ ७२ ॥ तत्रस्थंपुरुषंश्यामंसुंदरंकमनीयकम् ॥ शं
खचक्रगदापद्मधरंपीतांबरंवरम् ॥ ७३ ॥ किरीटिनंकुंडलिनंवनमालाविभूषितम् ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चि
तम् ॥ ७४ ॥ चतुर्भुजंस्मेरवक्त्रंभक्तानुग्रहकातरम् ॥ मणिरत्नेंद्रसाराणांसारभूषणभूषितम् ॥ ७५ ॥ देवींतद्वामतोरम्यां
शुक्लवर्णांमनोहराम् ॥ रत्नालंकारशोभाढ्यांशोभितांपीतवाससा ॥ ७६ ॥ शरत्पार्वणचंद्रास्यांशरत्पंकजलोचनाम् ॥
पक्वबिंबाधरोष्ठींचस्मेरयुक्तांमनोहराम् ॥ ७७ ॥ वेणुवीणाग्रंथहस्तांभक्तानुग्रहकातराम् ॥ विद्याधिष्ठातृदेवींचज्ञानरू
पांसरस्वतीम् ॥ ७८ ॥ अपरांदक्षिणेरम्यांशतचंद्रसमप्रभाम् ॥ प्रतप्तस्वर्णवर्णाभांसस्मितांसुमनोहराम् ॥ ७९ ॥ सद्र

त्नकुंडलाभ्यांचसुकपोलविराजिताम् ॥ अमूल्यरत्नखचितामूल्यवस्त्रेणभूषिताम् ॥ ८० ॥ अमूल्यरत्नकेयूरकरकंकणशोभिताम् ॥ सद्रत्नसारमंजीरकलशब्दसमन्विताम् ॥ ८१ ॥ मणींद्रकिंकिणीयुक्तमध्यदेशसमन्विताम् ॥ पारिजातप्रसूनानांमालावक्षःस्थलोज्ज्वलाम् ॥ ८२ ॥ प्रफुल्लमालतीमालासंयुक्तकबरीयुताम् ॥ नाणयणंतांपश्यंतंपश्यंतींवक्रचक्षुषा ॥ ८३ ॥ शरच्चंद्रप्रभामुष्णन्मुखचारुविभूषिताम् ॥ कस्तूरीबिंदुसंयुक्तसिंदूरतिलकान्विताम् ॥ ८४ ॥ सुचारुकज्जलासक्तशरत्पंकजलोचनाम् ॥ सहस्रदलसंसक्तलीलाकमलसंयुताम् ॥ ८५ ॥ अवरुह्यरथात्तूर्णसखीकःसहपार्षदः जगामचसभांरम्यांगोपगोपीसमन्विताम् ॥ ८६ ॥ देवागोप्यश्चगोपाश्चतस्थुःप्रांजलयोमुदा ॥ सामवेदोक्तस्तोत्रेण कृतेनचसुरर्षिभिः ॥ ८७ ॥ गत्वानारायणोदेवोविलीनःकृष्णविग्रहे ॥ दृष्ट्वाचपरमाश्चर्यंतेसर्वेविस्मयंययुः ॥ ८८ ॥ एतस्मिन्नंतरेतत्रशातकुंभमयाद्रथात् ॥ अवरुह्यस्वयंविष्णुःपाताचजगतांपतिः ॥ ८९ ॥ आजगामचतुर्बाहुर्वनमालाविभूषितः ॥ पीतांबरधरःश्रीमान्स्सस्मितःसुमनोहरः ॥ ९० ॥ सर्वालंकारशोभाढ्यःसूर्यकोटिसमप्रभः ॥ उत्तस्थुस्तेचतंदृष्ट्वातुष्टुवुःप्रणतामुने ॥ ९१ ॥ सचापिलीनस्तत्रैवराधिकेशस्यविग्रहे ॥ तेदृष्ट्वामहदाश्चर्यंविस्मयंपरमंययुः ॥ ९२ ॥ संविलीनेहरेरंकेश्वेतद्वीपनिवासिनि ॥ एतस्मिन्नंतरेतूर्णमाजगामत्वरान्वितः ॥ ९३ ॥ शुद्धस्फटिकसंकाशोनाम्नासंकर्षणःस्मृतः ॥ सहस्रशीर्षापुरुषःशतसूर्यसमप्रभः ॥ ९४ ॥ आगतंतुष्टुवुःसर्वेदृष्ट्वातंविष्णुविग्रहम् ॥ सचागत्यनतस्कंधस्तुष्टावराधिकेश्वरम् ॥ ९५ ॥ सहस्रमूर्धाभक्त्याचप्रणनामचनारद ॥ आवांचधर्मपुत्रौद्वौनरनारायणाभिधौ ॥ ९६ ॥ लीनोऽहंकृष्णपादाब्जेबभूवफाल्गुनोनरः ॥ ब्रह्मेशशेषधर्माश्चतस्थुरेकत्रतत्रवै ॥ ९७ ॥ एतस्मिन्नंतरेदेवादद्दशूरथमुत्त

मम् ॥ स्वर्णसारविकारंचनानारत्नपरिच्छदम् ॥ ९८ ॥ मणींद्रसारसंयुक्तंवन्हिशुद्धांशुकान्वितम् ॥ श्वेतचामरसंयुक्तंभू
षितंदर्पणायुतैः ॥ ९९ ॥ सद्रत्नसारकलशसमूहेनविराजितम् ॥ पारिजातप्रसूनानांमालाजालैःसुशोभितम् ॥ १०० ॥
सहस्रचक्रसंयुक्तंमनोयायिमनोहरम् ॥ ग्रीष्ममध्यान्हमार्तंडप्रभामोषकरंवरम् ॥ १ ॥ मुक्तामाणिक्यवज्राणांसमूहे
नसमुज्वलम् ॥ चित्रपुत्तलिकापुष्पसरःकाननचित्रितम् ॥ २ ॥ देवानांदानवानांचरथानांप्रवरंमुने ॥ यत्नेनशंकरप्री
त्यानिर्मितंविश्वकर्मणा ॥ ३ ॥ पंचाशद्योजनोर्ध्वंचचतुर्योजनविस्तृतम् ॥ रतितुल्यवधूयुक्तैःशोभितंरतिमंदिरैः ॥ ४ ॥
तत्रस्थांददृशुर्देवींरत्नालंकारभूषिताम् ॥ प्रदग्धस्वर्णसाराणांप्रभामोषकरद्युतिम् ॥ ५ ॥ तेजःस्वरूपामतुलांमूलप्रकृ
तिमीश्वरीम् ॥ सहस्रभुजसंयुक्तांनानायुधसमन्विताम् ॥ ६ ॥ ईषद्धास्यप्रसन्नास्यांभक्तानुग्रहकातराम् ॥ गंडस्थलक
पोलस्थसद्रत्नकुंडलोज्वलाम् ॥ ७ ॥ रत्नेंद्रसाररचितक्वणन्मंजीररंजिताम् ॥ मणींद्रमेखलायुक्तमध्यदेशसुशोभि
ताम् ॥ ८ ॥ सद्रत्नसारकेयूरकरकंकणभूषिताम् ॥ मंदारपुष्पमालाभिरुरस्थलसमुज्वलाम् ॥ ९ ॥ नितंबकठिनश्रोणीं
पीनोन्नतकुचानताम् ॥ शरत्सुधाकराभासविनिंदास्यमनोहराम् ॥ ११० ॥ कज्जलोज्वलरेखाक्तशरत्पंकजलोचनाम् ॥
चंदनागरुकस्तूरीचित्रपात्रविभूषिताम् ॥ ११ ॥ मुक्तापंक्तिप्रभामुष्टदंतराजिविराजिताम् ॥ प्रफुल्लमालतीमालासंस
क्तकबरींवराम् ॥ १२ ॥ पक्षींद्रचंचुनासाग्रगजेंद्रमौक्तिकान्विताम् ॥ वन्हिशुद्धांशुकेनातिज्वलितेनसमुज्वलाम् ॥ १३ ॥
सिंहपृष्ठसमारूढांसुताभ्यांसहितांमुदा ॥ अवरुह्यरथात्तूर्णंश्रीकृष्णंप्रणनामच ॥ १४ ॥ सुताभ्यांसहितादेवीसमुवासव
रानना ॥ गणेशःकार्तिकेयश्चनत्वाकृष्णंपरात्परम् ॥ १५ ॥ ननामशंकरंधर्ममनंतंकमलोद्भवम् ॥ उत्तस्थुराराद्देवाद्दृष्ट्वा

तौत्रिदशेश्वरौ ॥ १६ ॥ आशिषंचददुर्देवावासयामासुरंतिके ॥ ताभ्यांसहसदालापंचक्रुर्देवामुदान्विताः ॥ १७ ॥ तस्थुर्दे
वाःसभामध्येदेवस्यपुरतोहरेः ॥ गोपागोप्यश्चबहुशोबभूवुर्विस्मयाकुलाः ॥ १८ ॥ उवाचकमलांकृष्णःस्मेराननसरोरुहः
त्वंगच्छभीष्मकगृहंनानारत्नसमन्वितम् ॥ १९ ॥ वैदर्भ्यामुदरेजन्मलभदेविसनातनि ॥ तवपाणिंगृहीष्यामिगत्वाऽहंकुं
डिनंसति ॥ १२० ॥ तादेव्यःपार्वतींदृष्वासमुत्थायत्वरान्विताः ॥ रत्नसिंहासनेरम्येवासयामासुरीश्वरीम् ॥ २१ ॥ विप्रेंद्र
पार्वतीलक्ष्मीर्वागधिष्ठातृदेवताः ॥ तस्थुरेकासनेतत्रसंभाष्यचयथोचितम् ॥ २२ ॥ ताश्चसंभाषयामासुःसंप्रीत्यागोपक
न्यकाः ॥ ऊचुर्गोपालिकाःकाश्चिन्मुदातासांचसन्निधौ ॥ २३ ॥ श्रीकृष्णःपार्वतींतत्रसमुवाचजगत्पतिः ॥ देवित्वामंशरू
पेणजननंदव्रजंशुभे ॥ २४ ॥ उदरेचयशोदायाःकल्याणीनंदरेतसा ॥ लभजन्ममहामायेसृष्टिसंहारकारिणि ॥ २५ ॥ ग्रामे
ग्रामेचपूजांतेकारयिष्यामिभूतले ॥ कृत्स्नेमहीतलेभक्त्यानगरेषुवनेषुच ॥ २६ ॥ तत्राधिष्ठातृदेवींत्वांपूजयिष्यंतिमान
वाः ॥ द्रव्यैर्नानाविधैर्दिव्यैर्बलिभिश्चमुदान्विताः ॥ २७ ॥ त्वद्भूमिस्पर्शमात्रेचसूतिकामंदिरेशिवे ॥ पितामांतत्रसंस्थाप्य
त्वामादायगमिष्यति ॥ २८ ॥ कंसदर्शनमात्रेणगमिष्यसिशिवांतिकं ॥ भारावतरणंकृत्वागमिष्यामिस्वमाश्रमं ॥ २९ ॥
इत्युक्त्वाश्रीहरिस्तूर्णमुवाचचषडाननं ॥ अंशरूपेणवत्सत्वंगमिष्यसिमहीतलं ॥ १३० ॥ जांबवत्याश्चगर्भेचलभजन्मसुरे
श्वर ॥ अंशेनदेवताःसर्वागच्छंतुधरणीतलं ॥ ३१ ॥ भारहारंकरिष्यामिवसुधायाश्चनिश्चितं ॥ इत्युक्त्वाराधिकानाथतस्थौ
सिंहासेनवरे ॥ ३२ ॥ तस्थुर्देवाश्चदेव्यश्चगोपागोप्यश्चनारद ॥ एतस्मिन्नंतरेब्रह्मासमुत्तस्थौहरेःपुरः ॥ ३३ ॥ पुटांजलिर्ज
गत्कांतमुवाचविनयान्वितः ॥ ब्रह्मोवाच ॥ अवधानंकुरुविभोकिंकरस्यनिवेदनं ॥ ३४ ॥ आ[illegible]कुरुमहाभागकस्यकुत्र

स्थलंभुवि ॥ भ्रतोपातोद्धारकर्तासेवकानांप्रभुःसदा ॥ ३५॥ सभृत्यःसर्वदाभक्त ईश्वराज्ञांकरोतिथः ॥ केदेवाःकेनरूपेणदे
व्यश्चकलयाकया ॥ ३६ ॥ कुत्रकस्याभिधेयंचविषयंचमहीतले ॥ ब्रह्मणोवचनंश्रुत्वाप्रत्युवाचजगत्पतिः ॥ ३७ ॥
यत्रयस्यावकाशंचकथयामिविधानतः ॥ श्रीकृष्णउवाच ॥ कामदेवोरौक्मिणेयोरतिर्मायावतीसती ॥ ३८ ॥ शंबरस्य
गृहेयाचछायारूपेणसंस्थिता ॥ त्वंतस्यपुत्रोभवितानाम्नानिरुद्धएवच ॥३९॥ भारतीशोणितपुरेबाणपुत्रीभविष्यति ॥
अनंतोदेवकीगर्भाद्रौहिणेयोजगत्पतिः ॥ १४० ॥ माययागर्भसंकर्षान्नाम्नासंकर्षणःप्रभुः ॥ कालिंदीसूर्यतनयागंगां
शेनमहीतले ॥ ४१ ॥ अर्द्धांशेनैवतुलसीलक्ष्मणाराजकन्यका ॥ सावित्रीवेदमाताचनाम्नानाग्नजितीसती ॥ ४२ ॥ वसुं
धरासत्यभामाशैब्यादेवीसरस्वती ॥ रोहिणीमित्रविंदाचभविताराजकन्यका ॥ ४३ ॥ सूर्यपत्नीरत्नमालाकलयाच
जगत्प्रभोः ॥ स्वाहांशेनसुशीलाचरुक्मिण्याद्याःस्त्रियोनव ॥ ४४ ॥ दुर्गांशाद्धांजांबवतीमहिषीणांदशस्मृताः ॥ अर्द्धां
शेनशैलपुत्रीयातुजांबवतोगृहम् ॥ ४५ ॥ कैलासेशंकराज्ञाचबभूवपार्वतीपुरा ॥ कैलासगामिनंविष्णुंश्वेतद्वीपनिवासि
नम् ॥ आलिंगनंदेहिकांतेनास्तिदोषोममाज्ञया ॥ ४६ ॥ ॥ब्रह्मोवाच ॥ ॥ कथंशिवाज्ञातांदेवींबभूवजगतीपते ॥ वि
ष्णोःसंभाषणेपूर्वंश्वेतद्वीपनिवासिनः ॥ ४७ ॥ श्रीभगवानुवाच ॥ ॥ पुरागणेशंद्रष्टुंचप्रजग्मुःसर्वदेवताः ॥ श्वेतद्वीपात्स्व
यंविष्णुर्जगामशंकरालये ॥ ४८ ॥ दृष्ट्वागणेशंमुदितःसमुवाससुखासने ॥ सुखेनददृशुःसर्वेत्रैलोक्यमोहनंवपुः ॥ ४९ ॥
किरीटिनंकुंडलिनंपीतांबरधरंवरम् ॥ सुंदरंश्यामरूपंचनवयौवनसंयुतम् ॥ १५० ॥ चंदनागरुकस्तूरीकुंकुमद्रवसंयुत
म् ॥ रत्नालंकारशोभाढ्यंस्मेराननसरोरुहम् ॥ ५१ ॥ रत्नसिंहासनस्थंचपार्षदैःपरिवेष्टितम् ॥ वंदितंचसुरैःसर्वैःशिवेनपू

जितंस्तुतम् ॥ ५२ ॥ तंदृष्ट्वापार्वतीविष्णुंप्रसन्नवदनेक्षणा ॥ सुखमाच्छादितंचक्रेवाससाव्रीडयासती ॥ ५३ ॥ अतीव
सुंदररूपंदर्शंदर्शंपुनःपुनः ॥ ददर्शमुखमाच्छाद्यनिमेषरहितासती ॥ ५४ ॥ परमाद्भुतवेषंचसस्मितावक्रचक्षुषा ॥ सुखसा
गरसंमग्नाबभूवपुलकांचिता ॥ ५५ ॥ क्षणंददर्शपंचास्यंशुभ्रवर्णंत्रिलोचनम् ॥ त्रिशूलपरिघधरंकंदर्पकोटिसुंदरम् ॥ ५६
क्षणंददर्शश्यामंतमेकास्यंचद्विलोचनम् ॥ चतुर्भुजंपीतवस्त्रंवनमालाविभूषितम् ॥ ५७ ॥ एकंब्रह्ममूर्तिभेदमभेदंवानिरू
पितम् ॥ दृष्ट्वाबभूवसामायासकामाविष्णुमायया ॥ ५८ ॥ मदंशाश्चत्रयोदेवाब्रह्मविष्णुमहेश्वराः ॥ ताभ्यामौत्कर्षपा
ताच्चश्रेष्ठःसत्वगुणात्मकः ॥ ५९ ॥ दृष्ट्वातंपार्वतीभक्त्यापुलकांचितविग्रहा ॥ मनसापूजयामासपरमात्मानमीश्वरम् ॥
॥ १६० ॥ दुर्गांतराभिप्रायंचबुबुधेशंकरःस्वयम् ॥ सर्वांतरात्माभगवानंतर्यामीजगत्पतिः ॥ ६१ ॥ दुर्गांनिर्जनमाहूयता
मुवाचहरःस्वयम् ॥ बोधयामासर्वविविधंहितंतथ्यमखंडितम् ॥ ६२ ॥ ॥ श्रीशंकरउवाच ॥ ॥ निवेदनंमदीयंचनिबोध
शैलकन्यके ॥ श्रृंगारंदेहिभद्रंतेहरयेपरमात्मने ॥ ६३ ॥ अहंब्रह्माचविष्णुश्चब्रह्मैकंचसनातनम् ॥ वेदैकोवेदरहितोविष
यान्मूर्तिभेदकः ॥ ६४ ॥ एकाप्रकृतिःसर्वेषांमातात्वंसर्वरूपिणी ॥ स्वयंभूरसिवाणीत्वंलक्ष्मीर्नारायणोरसि ॥ ६५ ॥ म
मवक्षसिदुर्गात्वंनिबोधाध्यात्मकंसति ॥ शिवस्यवचनंश्रुत्वातमुवाचसुरेश्वरी ॥ ६६ ॥ ॥ पार्वत्युवाच ॥ ॥ दीनबंधो
कृपासिंधोतवमामकृपाकथम् ॥ सुचिरंतपसालब्धोनाथस्त्वंजगतांमया ॥ ६७ ॥ मादृशींकिंकरींनाथनपरित्यक्तुमर्ह
सि ॥ अयोग्यमीदृशंवाक्यंमामावदमहेश्वर ॥ ६८ ॥ तववाक्यमहादेवकरिष्याम्येवपालनम् ॥ देहांतरेजन्मलब्ध्वाभ
जिष्यामिहरिंहर ॥ ६९ ॥ इत्येवंवचनंश्रुत्वाविररामहेश्वरः ॥ उच्चैर्जहासाभयदःपार्वत्यैचाभयंददौ ॥ १७० ॥ तत्प्रति

ज्ञापालनायपार्वतीजांबवद्गृहे ॥ लभेष्यतिजनुर्धातर्नाम्नाजांबवतीसती ॥ ७१ ॥ ब्रह्मोवाच ॥ ॥ भूमौकतिविधेभू
पेसंस्थितेपार्वतीकथम् ॥ ललाभेभारतेजन्मनिंदितेभालुकेगृहे ॥ ७२ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ रामावतारेत्रेतायां
देवांशाश्चययुर्महीम् ॥ हिमालयांशोभालूकोजांबवान्नामर्किंकरः ॥ ७३ ॥ रामस्यवरदानेनचिरंजीवीश्रियायुतः ॥ को
टिसिंहबलाधानंविधत्तेचमहाबलः ॥ ७४ ॥ पितुरंशगृहेदुर्गाजगामांशेनभूतलम् ॥ पूर्वपूर्वस्यवृत्तांतंकथितंश्टणुमन्मु
खात् ॥ ७५ ॥ सर्वेषांचसुराणांवैवंशागच्छंतुभूतलम् ॥ नृपपुत्रामत्सहायाभविष्यंतिरणेविधे ॥ ७६ ॥ कमलाकलया
सर्वाभवंतुनृपकन्यकाः ॥ मन्महिष्योभविष्यंतिसहस्राणांचषोडश ॥ ७७ ॥ धर्मोऽयमंशरूपेणपांडुपुत्रोयुधिष्ठिरः ॥ वा
योरंशाद्भीमसेनःसवज्रीत्यर्जुनःस्वयम् ॥ ७८ ॥ नकुलःसहदेवश्चस्ववैद्यांशसमुद्भवौ ॥ सूर्यांशःकर्णवीरश्चविदुरःसयमः
स्वयम् ॥ ७९ ॥ दुर्योधनःकलेरंशःसमुद्रांशश्चशंतनुः ॥ अश्वत्थामाशंकरांशोद्रोणोवन्ह्यंशसंभवः ॥ १८० ॥ हुताशनां
शोभगवान्धृष्टद्युम्नोमहाबलः ॥ चंद्रांशोऽप्यभिमन्युश्चभीष्मश्चैववसूद्भवः ॥ ८१ ॥ वसुदेवःकश्यपांशोप्यदित्यंशाचदे
वकी ॥ वस्वंशोनंदगोपश्चयशोदावसुकामिनी ॥ ८२ ॥ द्रौपदीकमलांशाचयज्ञकुंडसमुद्भवा ॥ सुभद्राशतरूपांशादेवकी
गर्भसंभवा ॥ ८३ ॥ देवागच्छंतुपृथिवीमंशेनभारहारकाः ॥ कलयादेवपत्न्यश्चगच्छंतुपृथिवीतलम् ॥ ८४ ॥ इत्येवमु
क्त्वाभगवान्विररामचनारद ॥ सर्वंविवरणंश्रुत्वातत्रोवासप्रजापतिः ॥ ८५ ॥ कृष्णस्यवामेवाग्देवीदक्षिणेकमलालया ॥
पुरतोदेवताःसर्वाःपार्वतीचापिनारद ॥ ८६ ॥ गोप्योगोपाश्चपरितोराधावक्षस्थलस्थिता ॥ एतस्मिन्नंतरेसाचतमुवाच
व्रजेश्वरी ॥ ८७ ॥ ॥ राधिकोवाच ॥ ॥ श्टणुनाथप्रवक्ष्यामिकिंकरीवचनंप्रभो ॥ प्राणादहंतिसततमांदोलयतिमेमनः

॥ ८८ ॥ चक्षुर्निमीलनंकर्तुमशक्तातवदर्शने ॥ त्वयाविनाकथंनाथयास्यामिधरणीतलम् ॥ ८९ ॥ कियत्कालांतरेणैव
मीलनंमेत्वयासह ॥ प्राणेश्वरब्रूहिसत्यंभविष्यत्येवगोकुले ॥ १९० ॥ निमेषंचयुगशतंभवितामेत्वयाविना ॥ कंद्रक्ष्या
मिकयास्यामिकोवामांपालयिष्यति ॥ ९१ ॥ मातरंपितरंबंधुंभ्रातरंभगिनींसुतम् ॥ त्वयाविनाऽहंप्राणेशचिंतयामिन
कंचन ॥ ९२ ॥ करोषिमाययाछन्नांमांचेन्मायेशभूतले ॥ विस्मृतांविभवंदत्वासत्यंमेशपथंकुरु ॥ ९३ ॥ अनुक्षणंमम
मनोमधुपोमधुसूदन ॥ करोतुभ्रमणंनित्यंसमाध्वीकेपदांबुजे ॥ ९४ ॥ यत्रयत्रचयस्यांवायोनौजन्मभवत्विदम् ॥
त्वंस्वस्मरणंदास्यंचमह्यंदास्यसिवांछितम् ॥ ९५ ॥ कृष्णस्त्वंराधिकाहंचप्रेमसौभाग्यमावयोः ॥ नविस्मरामिभूमौचदे
हिमह्यंवरंपरम् ॥ ९६ ॥ यथातन्वासहप्राणाःशरीरंछाययासह ॥ तथावयोर्जन्मयातुदेहिमह्यंवरंमम ॥ ९७ ॥ ममप्रा
णैस्तवतनुःकेनवाकरुणाहरे ॥ आत्मनामुरलीपादौमनसावाविनिर्मितौ ॥ ९८ ॥ स्त्रियःकतिविधाःसंतिपुरुषावापुरुष्टुतः ॥
नास्तिकुत्रापिकांतावाकांत्याशक्त्याचमादृशी ॥ ९९ ॥ तवदेहार्धभागेनकेनवाऽहंविनिर्मिता ॥ इदमेवावयोर्भेदोनास्त्यत
स्त्वयिमेमनः ॥ २०० ॥ प्रदग्धंसततंप्राणादहंतिविरहश्रुतौ ॥ इत्येवमुक्त्वासादेवीतत्रैवसुरसंसदि ॥ १ ॥ भूयोभूयोरुरोदो
च्चैर्धृत्वातच्चरणांबुजम् ॥ क्रोडेकृत्वातुतांकृष्णोमुखंसंमृज्यवाससा ॥ २ ॥ बोधयामासविविधंसत्यंतथ्यंहितंवचः ॥
श्रीकृष्णउवाच ॥ आध्यात्मिकंपरंयोगंशोकच्छेदनकारकम् ॥ ३ ॥ शृणुदेविप्रवक्ष्यामियोगींद्राणांचदुर्लभम् ॥ आ
धाराधेययोःसर्वंब्रह्मांडंपश्यसुंदरि ॥ ४ ॥ आधारव्यतिरेकेणनास्त्याधेयस्यसंभवः ॥ फलाधारंचपुष्पंचपुष्पाधारंच
पल्लवम् ॥ ५ ॥ स्कंधश्चपल्लवाधारःस्कंधाधारस्तरुःस्वयम् ॥ वृक्षाधारोप्यंकुरश्चजीवशक्तिसमन्वितः ॥ ६ ॥ अष्टिरेकां

कुराधारश्चाप्याधारोवसुंधरा ॥ शेषोवसुंधराधारःशेषाधारोहिकच्छपः ॥ ७ ॥ वायुश्चकच्छ[illegible]वाय्वाधारोहमेवच ॥
ममाधारस्वरूपात्वंत्वयितिष्ठामिसांप्रतम् ॥ ८ ॥ त्वंचशक्तिसमूहाचमूलप्रकृतिरीश्वरी ॥ त्वंशरीरस्वरूपाऽसित्रिगुणा
धाररूपिणी ॥ ९ ॥ तवात्माहंनिरीहश्चचेष्टावांश्चत्वयासह ॥ पुरुषाद्वीर्यमुत्पन्नंवीर्यात्संततिरेवच ॥ २१० ॥ तयोराधाररू
पाचकामिनीप्रकृतेःकला ॥ विनादेहेनकात्माचकशरीरंविनात्मना ॥ ११ ॥ प्राधान्यंचतयोर्देविविनात्वाघंकुतोभवः ॥
नकुत्राप्यावयोर्भेदोराधेसंसारबीजयोः ॥ १२ ॥ यत्रात्मातत्रदेहंचनभेदोविनयेनकिम् ॥ यथाक्षीरेचधावल्यंदाहिकाच
हुताशने ॥ १३ ॥ भूमौगंधोजलेशैत्यंतथात्वयिमयिस्थिते ॥ धावल्यदुग्धयोरैक्यंदाहिकानलयोर्यथा ॥ १४ ॥ सुगंधजल
शैत्यानांनास्तिभेदस्तथाऽवयोः ॥ मयाविनात्वंनिर्जीवाचादृश्योऽहंत्वयाविना ॥ १५ ॥ त्वयाविनाभवंकर्तुंनालंसुंदरिनि
श्चितम् ॥ विनामृदाघटंकर्तुंयथानालंकुलालकः ॥ १६ ॥ विनास्वर्णंस्वर्णकारोऽलंकारंकर्तुमक्षमः ॥ स्वयमात्मायथानित्यं
तथात्वंप्रकृतिःस्वयम् ॥ १७ ॥ सर्वशक्तिसमायुक्तासर्वाधारासनातनी ॥ ममप्राणसमालक्ष्मीर्वाणीचसर्वमंगला ॥ १८ ॥
ब्रह्मेशानंतधर्माश्चत्वंचप्राणाधिकाप्रिया ॥ समीपस्थाइमेसर्वेसुरादेव्यश्चराधिके ॥ १९ ॥ एभ्योप्यभ्यधिकानोचेत्क
थंवक्षस्थलस्थिता ॥ त्यजाश्रुमोक्षणंराधेभ्रांतिचनिश्चलांप्रति ॥ २२० ॥ विहायशंकांनिःशंकंवृषभानुगृहंव्रज ॥ कलाव
त्याश्चजठरेमासानांनवसुंदरि ॥ २१ ॥ वायुनापूरयित्वाचगर्भेरोधयमायया ॥ दशमेसमनुप्राप्तेत्वमाविर्भवभूतले ॥ २२ ॥
स्वात्मरूपंपरित्यज्यशिशुरूपंविधायच ॥ वायुनिःसारणेकालेकलावत्याःसमीपतः ॥ २३ ॥ भूमौविवसनीभूत्वापति
त्वारोदिषिध्रुवम् ॥ अयोनिसंभवात्वंचभवितागोकुलेसति ॥ २४ ॥ अयोनिसंभवोऽहंचनावयोर्गर्भसंस्थितिः ॥ भूमिसं

स्पृष्टमात्रंमांगोकुलेप्रापयिष्यति ॥ २५ ॥ तवहेतोर्गमिष्यामिकृत्वाकंसभयंछलम् ॥ यशोदामंदिरेमांचसानंदंनंदनं
दनम् ॥ २६ ॥ नित्यंद्रक्ष्यसिकल्याणिममाश्लेषणपूर्वकम् ॥ स्मृतिस्तेभविताकालेवरेणममराधिके ॥ २७ ॥ स्वच्छं
दंविहरिष्यामिनित्यंवृंदावनेवने ॥ त्रिःसप्तशतकोटीभिर्गोपीभिर्गोकुलंव्रज ॥ २८ ॥ त्रयस्त्रिंशद्वयस्याभिःसुशीलादि
भिरेवच ॥ संस्थाप्यसंख्यारहितागोपीर्गोकुलएवच ॥ २९ ॥ ताआश्वास्यप्रबोधैश्चमितयाचसुधागिरा ॥ अहंगोपा
लसुहृदःसंस्थाप्यात्रैवराधिके ॥ ३० ॥ वसुदेवाश्रमंपश्चाद्यास्यामिमथुरांपुरीम् ॥ व्रजंव्रजंतुक्रीडार्थंममसंगेप्रियात्प्रि
याः ॥ ३१ ॥ वल्लवानांगृहेजन्मलभंतुगोपकोटयः ॥ इत्येवमुक्त्वाश्रीकृष्णोविररामचनारद ॥ ३२ ॥ ऊचुर्देवाश्चदेव्यश्च
गोपागोप्यश्चतत्रवै ॥ ब्रह्मेशशेषधर्माश्चश्रीकृष्णंतंपरात्परम् ॥ ३३ ॥ शिवापद्मासरस्वत्यःस्तुष्टुवुःपरयामुदा ॥ भक्त्यागो
पाश्चगोप्यश्चविरहज्वरकातराः ॥ ३४ ॥ तत्रसंस्तूयश्रीकृष्णंप्रणेमुःप्रेमविह्वलाः ॥ प्राणाधिकंप्रियंकांतंराधापूर्णमनोर
थम् ॥ ३५ ॥ परितुष्टोऽभवद्भक्त्यावि‍रहज्वरकातराम् ॥ साश्रुपूर्णातिदीनांचदृष्ट्वाराधांभयाकुलाम् ॥ ३६ ॥ प्रबोधवच
नंश्रुत्यमुवाचतांहरिःस्वयम् ॥ ॥ श्रीकृष्णउवाच ॥ ॥ प्राणाधिकेमहादेविस्थिराभवभयंत्यज ॥ ३७ ॥ यथात्वंचत
थाऽहंचकाचिंतातेमयिस्थिते ॥ किंतुतेकथयिष्यामिकिंचिदेवास्त्यमंगलम् ॥ ३८ ॥ वर्षाणांशतकंपूर्णंत्वद्विच्छेदोमया
सह ॥ श्रीदामशापजन्येनकर्मभोगेनसुंदरि ॥ ३९ ॥ भविष्यत्येवममचमथुरागमनंततः ॥ तत्रभारावतरणंपित्रोर्बंधन
मोचनम् ॥ ४० ॥ मालाकारंतंतुवायकुब्जिकानांचमोचनम् ॥ घातयित्वाचयवनंमुचुकुंदस्यमोक्षणम् ॥ ४१ ॥ द्वार
कायाश्चनिर्माणंराजसूयस्यदर्शनम् ॥ उद्वाहंराजकन्यानांसहस्राणांचषोडश ॥ ४२ ॥ दशाधिकशतस्यापिशत्रूणांदम

नंतथा ॥ मित्रापकरणंचैववाराणस्याश्चदाहनम् ॥ ४३ ॥ हरस्यजृंभणंतत्रबाणस्यभुजच्छेदनम् ॥ पारिजातस्यहर
णंयद्यत्कर्माणितानिच ॥ ४४ ॥ गमनंतीर्थयात्रायांमुनिसंघप्रदर्शनम् ॥ संभाषणंचबंधूनांयज्ञसंपादनंपितुः ॥ ४५ ॥
शुभक्षणेपुनस्तत्रत्वयासार्द्धंप्रदर्शनम् ॥ करिष्यामिचतत्रैवगोपिकानांचदर्शनम् ॥ ४६ ॥ तुभ्यमाध्यात्मिकंदत्वापुनः
सत्यंत्वयासह ॥ दिवानिशमविच्छेदोमयासार्द्धमतःपरम् ॥ ४७ ॥ भविष्यतित्वयासार्द्धंपुनरागमनंव्रजे ॥ कांतेविच्छे
दसमयेवर्षाणांशतकेसति ॥ ४८ ॥ नित्यंसंमीलनंस्वप्नेभविष्यतित्वयासह ॥ ममनारायणांशोयस्तस्ययानंचद्वारकाम्
॥ २४९ ॥ शतवर्षांतरेसाध्यमेतदेवसुनिश्चितम् ॥ भविष्यतिपुनस्तत्रवनेरासंत्वयासह ॥ २५० ॥ पुनःपित्रोश्चगोपी
नांशोकसंमार्जनंपरम् ॥ कृत्वाभारावतरणंपुनरागमनंमम ॥ २५१ ॥ त्वयासहापिगोलोकंगोपैर्गोपिभिरेवच ॥ मम
नारायणांशस्यवाण्याचपद्मयासह ॥ २५२ ॥ वैकुंठगमनंराधेनित्यस्यपरमात्मनः ॥ श्वेतद्वीपंधर्मगेहमंशानांचभवि
ष्यति ॥ २५३ ॥ देवानांचैवदेवीनामंशायास्यंतिस्वक्षयम् ॥ पुनःसंस्थितिरत्रैवगोलोकेमेत्वयासह ॥ २५४ ॥ इत्ये
वंकथितंसर्वंभविष्यंचशुभाशुभम् ॥ मयानिरूपितंयत्तत्कांतेकेननिवार्यते ॥ २५५ ॥ इत्येवमुक्त्वाश्रीकृष्णःकृत्वाराधां
स्ववक्षसि ॥ तस्थौतस्थुःसुराःसर्वेसुरपत्न्यश्चविस्मिताः ॥ २५६ ॥ उवाचश्रीहरिर्देवान्देवींचसमयोचितम् ॥ देवाग
च्छतकार्यार्थंस्वालयंविषयोचितम् ॥ २५७ ॥ गच्छपार्वतिकैलासंसुताभ्यांस्वामिनासह ॥ मयानियोजितंकर्मसर्वं
कालेभविष्यति ॥ २५८ ॥ भविताकलयाजन्मसर्वेषांचव्रजेश्वरि ॥ क्षुद्राणांचैवमहतांदेवंलंबोदरंविना ॥ २५९ ॥ प्र
णम्यश्रीहरिंदेवाःस्वालयंप्रययुर्मुदा ॥ लक्ष्मींसरस्वतींभक्त्याप्रणम्यपुरुषोत्तमम् ॥ २६० ॥ हरिणायोजितंकर्मक

तुंव्यग्रामर्हीययौ ॥ भत्रानिरूपितंस्थानंदेवानामपिदुर्लभम् ॥ २६१ ॥ उवाचराधिकांकृष्णोवृषभानुगृहंव्रज ॥ गोप
गोपीसमूहैश्चसहपूर्वनिरूपितैः ॥ २६२ ॥ अहंयास्यामिमथुरांवसुदेवालयंप्रिये ॥ पश्चात्कंसभयव्याजाद्गोकुलंतवसन्नि
धिम् ॥ २६३ ॥ राधाप्रणम्यश्रीकृष्णंरक्तपंकजलोचना ॥ भृशंरुरोदपुरतःप्रेमविच्छेदकातरा ॥ २६४॥ स्थायंस्था
यंक्वचिद्यांतीगत्वागत्वापुनःपुनः ॥ पुनःपुनःसमागत्यदर्शंदर्शंहरेर्मुखम् ॥ ६५ ॥ पपौचक्षुश्चकोराभ्यांनिमेषरहितास
ती ॥ शरत्पार्वणचंद्राभसुधापूर्णप्रभोर्मुखम् ॥ ६६ ॥ ततःप्रदक्षिणीकृत्यसप्तधापरमेश्वरी ॥ प्रणम्यसप्तधाचैवपुन
स्तस्थौहरेःपुरः ॥ ६७ ॥ आजग्मुर्गोपिकानांचत्रिःसप्तशतकोटयः ॥ आजगामचगोपानांसमूहःकोटिसंख्यकः ॥ ६८ ॥
गोपानांगोपिकानांचसमूहैःसहराधिका ॥ पुनःप्रणम्यतंराधातत्रतस्थौचनारद ॥ ६९ ॥ ततस्त्रिंशद्वयस्याभिर्गोपीभिः
सहसुंदरी ॥ गोपानांचसमूहैश्चप्रणम्यप्रययौमहीम् ॥ २७० ॥ हरिणायोजितंस्थानंप्रजग्मुर्नंदगोकुलम् ॥ वृषभानु
गृहंराधागोपीगोपगृहंययौ ॥ ७१ ॥ महींगतायांराधायांगोपीभिःसहगोपकैः ॥ बभूवश्रीहरिःसद्यःपृथिवींगमनोत्सुकः ॥
॥ ७२ ॥ संभाष्यगोपान्गोपीश्चनियुज्यस्वीयकर्मणि ॥ मनोयायीजगन्नाथोजगाममथुरांहरिः ॥ ७३ ॥ पूर्वंयद्यदपत्यं
चदेवकीवसुदेवयोः ॥ बभूवसद्यस्तत्कंसःपुत्रषट्कंजघानह ॥ ७४ ॥ शेषांशंसप्तमंगर्भंमाययाकृष्यगोकुले ॥ निधाय
रोहिणीगर्भेजगामचाज्ञयाहरेः ॥ २७५ ॥ ॥ इतिश्रीब्रह्म० कृष्णजन्मखंडेनारायणनारदसंवादेषष्ठोऽध्यायः ॥ ६ ॥
॥ नारदउवाच ॥ ॥ यस्यातिरेकंकृष्णस्यमहत्पुण्यकरंपरम् ॥ वदजन्ममहाभागजन्ममृत्युजरापहम् ॥ १ ॥ वसुदेवः
कस्यपुत्रःकस्यकन्याचदेवकी ॥ कोवसर्देवकीकावाविवाहंचोभयोर्वद ॥ २ ॥ कथंजघानकंसस्तत्पुत्रषट्कंचदारुणः ॥

कस्मिन्दिनेहरेर्जन्मश्रोतुमिच्छामितत्वतः ॥ ३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ कश्यपोवसुदेवश्चदेवमाताचदेवकी ॥ पू
र्वपुण्यफलेनैवप्रापतुःश्रीहरिंसुतम् ॥ ४ ॥ देवमीढान्मारिषायांवसुदेवोमहानभूत् ॥ तस्यजन्मनिदेवाश्चवादयामासुर्दुंदु
भिम् ॥ ५ ॥ आनकंचमहात्दृष्टाःश्रीहरेर्जनकंचतम् ॥ संतःपुरातनास्तेनवदंत्यानकदुंदुभिम् ॥ ६ ॥ आहुकस्यकुतः
श्रीमान्यदुवंशसुमुद्भवः ॥ देवकोज्ञानसिंधुश्चतस्यकन्याचदेवकी ॥ ७ ॥ गर्गोयदुकुलाचार्यःसंबंधंयदुनासह ॥ देवक्याः
कारयामासविधिवच्चयथोदितम् ॥ ८ ॥ महासंभृतसंभारोवसुदेवःशुभेक्षणे ॥ उद्वाहेदेवकीतस्मैदेवकःप्रददौकिल ॥ ९ ॥
अश्वानांचसहस्राणिगजानांचशतानिच ॥ सालंकृतानांदासीनांशतानिसुंदराणिच ॥ १० ॥ नानाविधानिद्रव्याणिरत्ना
निविविधानिच ॥ मणिश्रेष्ठानिवज्राणिस्वर्णपात्राणिनारद ॥ ११ ॥ सद्रत्नभूषितांकन्यांशतचंद्रसमप्रभाम् ॥ त्रैलोक्य
मोहिनींधन्यांमान्यांश्रेष्ठांचयोषिताम् ॥ १२ ॥ रूपाधारांगुणाधारांसुस्मितांवक्रलोचनाम् ॥ नवसंगमयोग्यांचप्रोद्भि
न्ननवयौवनाम् ॥ १३ ॥ तांगृहीत्वारथेकृत्वाप्रस्थानसमयेतदा ॥ कंसोत्दृष्टःसहचरोभगिन्युद्वाहकर्मणि ॥ १४ ॥ तस्या
रथसमीपस्थेकंसेगच्छतितत्क्षणे ॥ कंसंसंबोध्यगगनेवाग्बभूवाशरीरिणी ॥ १५ ॥ कथंत्दृष्टोऽसिराजेंद्रश्टणुसत्यंवचो
हितम् ॥ देवक्याअष्टमोगर्भोमृत्युहेतुस्तवैवहि ॥ १६ ॥ श्रुत्वैवंदेवकींकंसःखड्गहस्तोमहाबलः ॥ देववाक्याद्भयात्क्रोधा
त्पापिष्ठोहंतुमुद्यतः ॥ १७ ॥ तांहंतुमुद्यतंदृष्ट्वावसुदेवःसुपंडितः ॥ बोधयामासनीतिज्ञोनीतिशास्त्रविशारदः ॥ १७ ॥ ॥ व
सुदेवउवाच ॥ ॥ राजनीतिंनजानासिश्टणुमेवचनंहितम् ॥ यशस्करंचदोषघ्नंशास्त्रोक्तंसमयोचितम् ॥ १८ ॥ अस्या
एवाष्टमोगर्भोमृत्युश्चेत्तवभूमिप ॥ इमांचहत्वादुष्कीर्तिंकरोषित्वंनरःकथम् ॥ १९ ॥ वधेचक्षुद्रजंतूनांहिंसकानांचपांड

तः॥ कार्षापणंसमुत्सृज्यमृत्युकालेप्रमुच्यते ॥ २० ॥ अहिंसकानांक्षुद्राणांवधःशतगुणंध्रुवम् ॥ प्रायश्चित्तंमृत्युकालेक
थितंपद्मयोनिना ॥ २१ ॥ वधेविशिष्टजंतूनांपश्वादीनांचकामतः ॥ ततःशतगुणंपापंनिश्चितंमनुरब्रवीत् ॥ २२ ॥ नरा
णांम्लेच्छजातीनांवधेशतगुणंततः ॥ म्लेच्छानांचशतानांचयत्पापंलभतेवधे ॥ २३ ॥ सच्छूद्रैकस्यचवधेतत्पापंलभते
पुमान् ॥ सच्छूद्राणांशतानांचयत्पापंलभतेवधे ॥ २४ ॥ तत्पापंलभतेनूनंगोवधैकेननिश्चितम् ॥ गवांदशगुणंपापंब्राह्म
णस्यवधेभवेत् ॥ २५ ॥ विप्रहत्यासमंपापंस्त्रीवधेलभतेनरः ॥ विशेषतोहिभगिनीपोष्याचशरणागता ॥ २६ ॥ स्त्रीह
त्याशतपापंचभवेदस्यावधेनृप ॥ तपोजपंचदानंचपूजनंतीर्थदर्शनम् ॥ २७ ॥ विप्राणांभोजनंहोमंस्वर्गार्थंकुरुतेबुधः ॥
जलबुद्बुदवत्सर्वंस्वप्नतुल्यसमंभवम् ॥ २८ ॥ पश्यंतिसततंसंतोधर्मंकुर्वंतियत्नतः ॥ भगिनींत्यजधर्मिष्ठस्ववंशपद्मभास्क
र ॥ २९ ॥ बुधाःकातिविधाःसंतिसभायांपृच्छतांनृप ॥ अस्याश्चैवाष्टमोगर्भोयदपत्यंभविष्यति ॥ ३३ ॥ बंधोतुभ्यंप्र
दास्यामितेनमेकिंप्रयोजनम् ॥ अथवायान्यपत्यानिभवंतिज्ञानिनांवर ॥ ३१ ॥ तानिसर्वाणिदास्यामित्वत्तोमेकोवरःप्रि
यः॥ भगिनींत्यजराजेंद्रकन्यातुल्यांप्रियांतव ॥ ३२ ॥ मिष्टान्नपानदानेनवर्धितामनुजांसदा ॥ वसुदेववचःश्रुत्वातत्याज
भगिनींनृपः ॥ ३३ ॥ वसुदेवःप्रियांनीत्वाजगामनिजमंदिरे ॥ क्रमादपत्यषट्कंचयद्यद्भूतंचनारद ॥ ३४ ॥ ददौतस्मैवसुः
सत्यात्संजघानक्रमेणतत् ॥ देवक्याःसप्तमेगर्भेकंसोरक्षांददौभिया ॥ ३५ ॥ रोहिणीजठरेमायातमाकृष्यररक्षच ॥ र
क्षकाःकथयामासुर्गर्भस्रावोबभूवह ॥ ३६ ॥ तस्माद्बभूवभगवानात्मासंकर्षणःप्रभुः ॥ तस्याएवाष्टमोगर्भोवायुपूर्णोब
भूवह ॥ ३७ ॥ गतेचनवमेमासिदशमेसमुपस्थिते ॥ दर्शिंददौचगर्भेचभगवान्सर्वदर्शनः ॥ ३८ ॥ स्वयंरूपवतीदेवीसर्वा

सांयोषिता[illegible] ॥ बभूवदर्शनात्सद्यःसुंदरीसाचतुर्गुणा ॥ ३९ ॥ ददर्शदेवकींकंसःप्रफुल्लव[illegible] ॥ तेजसाप्रज्वलंतीं
चमृत्युबीजंममैवच ॥ ४० ॥ इत्येवमुक्त्वाकंसश्चददौरक्षांप्रयत्नतः ॥ देवकींवसुदेवंचसप्तद्वारंररक्षच ॥ ४१ ॥ पूर्णेचदश
मेमासेगर्भःपूर्णोबभूवह ॥ बभूवसाचलस्पंदाजडरूपाचनारद ॥ ४२ ॥ गर्भेचवायुनापूर्णेनिर्लिप्तोभगवानजित् ॥ त्व
त्पद्मकोशेदेवक्याअधिष्ठानंचकारह ॥ ४३ ॥ साविश्वंभरगर्भाचमंदिराभ्यंतरेसति ॥ उवासजडरूपाचक्लेशयुक्ताबभूवह
॥ ४४ ॥ उवासचक्षणंदेवीक्षणमुत्थायतिष्ठति ॥ क्षणंव्रजतिपादैकंक्षणंस्वपितितत्रवै ॥ ४५ ॥ दृष्ट्वाचदेवकींशीघ्रं
वसुदेवोमहामनाः ॥ प्रसूतिसमयंज्ञात्वासस्मारहरिमीश्वरम् ॥ ४६ ॥ रत्नप्रदीपसंयुक्तेमंदिरेसुमनोहरे ॥ स्थाप
यामासखड्गंचलोहंतोयंहुताशनम् ॥ ४७ ॥ मंत्रज्ञंचनरंचैवत्रस्तोबंधूंश्चसादरम् ॥ एतस्मिन्नंतरेतस्याराात्रेर्द्विप्रहरौ
गतौ ॥ ४८ ॥ व्याप्तंचगगनंमेघैःक्षणद्युतिसमन्वितैः ॥ ववुश्चवायवश्चेष्टाययुर्निद्रांचरक्षकाः ॥ ४९ ॥ अचेष्टिताश्चशयनेमृ
ताइवविचेतनाः ॥ एतस्मिन्नंतरेतत्रचाजग्मुस्त्रिदशेश्वराः ॥ ५० ॥ तुष्टुवुर्धर्मब्रह्मेशागर्भस्थंपरमेश्वरम् ॥ ॥ देवाऊचुः ॥
जगद्योनिरयोनिस्त्वमनंतोऽव्ययएवच ॥ ५१ ॥ ज्योतिःस्वरूपोह्यनघःसगुणोनिर्गुणोमहान् ॥ भक्तानुरोधात्साकारो
निराकारोनिरंकुशः ॥ ५२ ॥ निर्व्यूहोनिखिलाधारोनिःशंकोनिरुपद्रवः ॥ निरुपाधिश्चनिर्लिप्तोनिरीहोनिधनांतकः ॥ ५३ ॥
स्वात्मारामःपूर्णकामोनिमिषोनित्यएवच ॥ स्वेच्छामयःसर्वहेतुःसर्वःसर्वगुणाश्रयः ॥ ५४ ॥ सुखदोदुःखदोदुर्गोदुर्ज
नांतकएवच ॥ सुभगोदुर्भगोवाग्मीदुराराध्योदुरत्ययः ॥ ५५ ॥ वेदहेतुश्चवेदाश्चवेदांगोवेदविद्विभुः ॥ इत्येवमुक्त्वादेवा
श्चप्रणेमुश्चमुहुर्मुहुः ॥ ५६ ॥ हर्षाश्रुलोचनाःसर्वेववृषुःकुसुमानिच ॥ द्विचत्वारिंशन्नामानिप्रातरुत्थाययःपठेत् ॥ ५७ ॥

दृढांभक्तिंहरेर्दास्यंलभतेवांछितंफलम् ॥ इत्येवंस्तवनंकृत्वादेवास्तेस्वालयंययुः ॥ ५८ ॥ बभूवजलवृष्टिश्चनिश्चेष्टाम
थुरापुरी ॥ घोरांधकारनिबिडाबभूवयामिनीमुने ॥ ५९ ॥ गतेसप्तमुहूर्तेतुचाष्टमेसमुपस्थते ॥ वेदातिरिक्तेदुर्ज्ञेयेसर्वोत्कृ
ष्टेशुभेक्षणे ॥ ६० ॥ शुभग्रहेदृष्टियुक्तेप्यदृष्टेचाशुभग्रहे ॥ अर्द्धरात्रेसमुत्पन्नेरोहिण्यामष्टमीतिथौ ॥ ६१ ॥ जयंतीयोग
संयुक्तेचार्धचंद्रोदयेमुने ॥ दृष्ट्वादृष्ट्वाक्षणंलग्नंभीताःसूर्यादयःस्मृताः ॥ ६२ ॥ गगनाक्रममुल्लंघ्यजग्मुर्मीनंशुभावहाः
सुप्रसन्नाग्रहाःसर्वेबभूवुस्तत्रसंस्थिताः ॥ ६३ ॥ एकादशास्तेप्रीत्याचमुहूर्तंधातुराज्ञया ॥ ववर्षुश्चजलधराववुर्वाताःसु
शीतलाः ॥ ६४ ॥ सुप्रसन्नाचपृथिवीप्रसन्नाश्चदिशोदश ॥ ऋषयोमुनयश्चैवयक्षगंधर्वकिन्नराः ॥ ६५ ॥ देवादेव्यश्चमुदि
तानन्नृतुश्चाप्सरोगणाः ॥ जगुर्गंधर्वपतयोविद्याधर्यश्चनारद ॥ ६६ ॥ सुखेनसुस्रुवुर्नद्योजज्वलुश्चाग्नयोमुदा ॥ नेदुर्दुंदुभ
योनाकेचानकाश्चमनोहराः ॥ ६७ ॥ पारिजातप्रसूनानांमहावृष्टिर्बभूवह ॥ जगामसूतिकागेहंनारीरूपंविधायभूः ॥ ६८ ॥
जयशब्दःशंखशब्दोहरिशब्दोबभूवह ॥ एतस्मिन्नंतरेतत्रपपातदेवकीसती ॥ ६९ ॥ निःससारचवायुश्चदेवकीजठरात्ततः
तत्रैवभगवान्कृष्णोदिव्यरूपंविधायच ॥ ७० ॥ हृत्पद्मकोशाद्देवक्याहरिराविर्बभूवह ॥ अतीवकमनीयंचशरीरंसुमनो
हरम् ॥ ७१ ॥ द्विभुजंमुरलीहस्तंस्फुरन्मुकुटकुंडलम् ॥ ईषद्धास्यंप्रसन्नास्यंभक्तानुग्रहकातरम् ॥ ७२ ॥ मणिरत्नेंद्र
साराणांभूषणैश्चविभूषितम् ॥ नवीननीरदश्यामंशोभितंपीतवाससा ॥ ७३ ॥ चंदनागरुकस्तूरीकुंकुमद्रवचर्चितम् ॥
शरत्पार्वणचंद्रास्यंबिंबाधरमनोहरम् ॥ ७४ ॥ मयूरपिच्छचूडंचसद्रत्नमुकुटोज्ज्वलम् ॥ त्रिभंगवक्रमध्यंचवनमालावि
भूषितम् ॥ ७५ ॥ श्रीवत्सवक्षसंचारीकौस्तुभेनविराजितम् ॥ किशोरवयसंशांतंकांतंब्रह्मेशयो[illegible] ॥ ७६ ॥ ददर्शवसुदेवश्च

देवकीपुरतामुन ॥ तुष्टावपरयाभक्त्याविस्मयंपरमंययौ ॥ ७७ ॥ कृतांजलिपुटोभूत्वाभक्तिनम्रात्मकंधरः ॥ साश्रुपूर्णः
सपुलकोदेवक्याचस्त्रियासह ॥ ७८ ॥ वसुदेवउवाच ॥ त्वामतींद्रियमव्यक्तमक्षरंनिर्गुणंविभुम् ॥ ध्यानासाध्यंचसर्वेषांप
रमात्मानमीश्वरम् ॥ ७९ ॥ स्वेच्छामयंसर्वरूपंस्वेच्छारूपधरंपरम् ॥ निर्लिप्तंपरमंब्रह्मबीजरूपंसनातनम् ॥ ८० ॥ स्थूला
त्स्थूलतरंप्राप्तमतिसूक्ष्ममदर्शनम् ॥ स्थितंसर्वशरीरेषुसाक्षिरूपमदृश्यकम् ॥ ८१ ॥ शरीरवंतंसगुणमशरीरंगुणोत्करम् ॥
प्रकृतिंप्रकृतीशंचप्राकृतंप्रकृतेःपरम् ॥ ८२ ॥ सर्वेशंसर्वरूपंचसर्वांतकरमव्ययम् ॥ सर्वाधारंनिराधारंनिर्व्यूहंस्तौमिकिं
विभुम् ॥ ८३ ॥ अनंतःस्तवनेऽशक्तोशक्तादेवीसरस्वती ॥ यंवास्तोतुमशक्तश्चपंचवक्त्रःषडाननः ॥ ८४ ॥ चतुर्मुखोवेदक
र्तायंस्तोतुमक्षमःसदा ॥ गणेशोनसमर्थश्चयोगींद्राणांगुरोर्गुरुः ॥ ८५ ॥ ऋषयोदेवताश्चैवमुनींद्रमनुमानवाः ॥ स्वप्नेते
षामदृश्यंचत्वामेवंकिंस्तुवंतिते ॥ ८६ ॥ श्रुतयःस्तवनेऽशक्ताःकिंस्तुवंतिविपश्चितः ॥ विहायेवंशरीरंचबालोभवितुमर्हसि
॥ ८७ ॥ वसुदेवकृतंस्तोत्रंत्रिसंध्यंयःपठेन्नरः ॥ भक्तिंदास्यमवाप्नोतिश्रीकृष्णचरणांबुजे ॥ ८८ ॥ विशिष्टपुत्रंलभतेह
रिदासंगुणान्वितम् ॥ संकटंनिस्तरेत्तूर्णंशत्रुभीत्याःप्रमुच्यते ॥ ८९ ॥ नारायणउवाच ॥ ॥ वसुदेववचःश्रुत्वातमुवाचह
रिःस्वयम् ॥ प्रसन्नवदनःश्रीमान्भक्तानुग्रहकातरः ॥ ९० ॥ श्रीकृष्णउवाच ॥ ॥ तपसांचफलेनैवपुत्रोऽहंतवसांप्रतम् ॥ व
रंवृणीष्वभद्रंतेभविष्यतिनसंशयः ॥ ९१ ॥ पुरातपस्विनांश्रेष्ठःसुतपास्त्वंप्रजापतिः ॥ पत्नीतेपृश्निनाम्नीचतपसाराधित
स्त्वया ॥ ९२ ॥ पुत्रोमत्सदृशस्तत्रदृष्ट्वामांचवृतोबुधः ॥ मयादत्तोवरस्तुभ्यंमत्समोभवितासुतः ॥ ९३ ॥ दत्वातुभ्यंवरं
तातमनसालोच्यचिंतितः ॥ मत्समोनास्तिभुवनेपुत्रोऽहंतेनहेतुना ॥ ९४ ॥ तपसांचप्रभावेणत्वमेवकश्यपःस्वयम् ॥ सुत

पादेवमातेयमदितिश्चपतिव्रता ॥ १५ ॥ अधुनाकश्यपांशस्त्वंवसुदेवःपितामम ॥ देवकीदेवमातेयमदितेरंशसंभवा ॥ १६ ॥ त्वत्तोदित्यांवामनोऽहंपुत्रस्तेंशेनसंभवः ॥ अधुनापरिपूर्णोऽहंपुत्रस्तेतपसांफलात् ॥ १७ ॥ मांवात्वंपुत्रभावेनब्रह्मभावेनवापुनः ॥ मांप्राप्तोसिमहाप्राज्ञजीवन्मुक्तोभविष्यसि ॥ १८ ॥ यशोदाभवनंशीघ्रंमांगृहीत्वाव्रजंव्रज ॥ संस्थाप्यतत्रमांतातमायामादायस्थापय ॥ ९९ ॥ इत्युक्त्वाश्रीहरिस्तत्रबालरूपोबभूवह ॥ नग्नंभूमौशयानंचददर्शश्यामलंसुतम् ॥ १०० ॥ दृष्ट्वासबालकंतत्रमोहितोविष्णुमायया ॥ किंवाकूटंचतंद्रायामपूर्वंसूतिकागृहम् ॥ १ ॥ इत्युक्त्वावसुदेवश्चसमालोच्यस्त्रियासह ॥ गृहीत्वाबालकंक्रोडेजगामनंदगोकुलम् ॥ २ ॥ गत्वानंदव्रजंशीघ्रंविवेशसूतिकागृहम् ॥ ददर्शशयनाविष्टांयशोदांनिद्रयान्विताम् ॥ ३ ॥ निद्रान्वितंचनंदंचसर्वंतत्रगृहेस्थितम् ॥ ददर्शबालिकांनग्नांतप्तकांचनसन्निभाम् ॥ ४ ॥ ईषद्धास्यांप्रसन्नास्यांपश्यंतींगृहशेखरम् ॥ तांदृष्ट्वावसुदेवश्चविस्मयंपरमंययौ ॥ ५ ॥ संस्थाप्यतत्रपुत्रंचकन्यामादायसत्वरः ॥ जगाममथुरांतुष्टःस्वकांतासूतिकागृहम् ॥ ६ ॥ स्थापयामासतत्रैवमहामायांचबालिकाम् ॥ रोरूयमाणांतामेवदृष्ट्वातुष्टाचदेवकी ॥ ७ ॥ रोदनेनैवसाबालाबोधयामासराक्षसान् ॥ उत्थायरक्षकाःशीघ्रंबालिकांजगृहुस्तदा ॥ ८ ॥ गृहीत्वाबालिकांतेचप्रजग्मुःकंससन्निधिम् ॥ जगामदेवकीपश्चाद्वसुदेवश्चशोकतः ॥ ९ ॥ दृष्ट्वाचबालिकांकंसोनातिदृष्टोमहामुने ॥ रोरूयमाणांकल्याणींतद्दयानबभूवह ॥ ११० ॥ तांगृहीत्वाचपाषाणेहंतुंयांतंसुदारुणम् ॥ उवाचवसुदेवश्चदेवकीपरमादरम् ॥ ११ ॥ भोभोःकंसनृपश्रेष्ठनीतिशास्त्रविशारद ॥ निबोधवाक्यंसत्यंचनीतियुक्तंमनोरमम् ॥ १२ ॥ हत्वाऽवयोःपुत्रषट्कंदयातेनास्तिबांधव ॥ अधुनाचाष्टमेगर्भेबालिकामबलांमम ॥ १३ ॥ हत्वातवकिमैश्वर्यंभविष्य

तिमहीतले ॥ रुरोदपुरतस्तत्रकंसस्यचदुरात्मनः ॥ १४ ॥ कंसस्तयोर्वचःश्रुत्वातामुवाचदुरात्मना ॥ शृणुवाक्यंमदीयंच
निबोधबोधयामिते ॥ १५ ॥ कंसउवाच ॥ तृणेनपर्वतंहंतुंशक्तोधाताचदैवतः ॥ कीटेनसिंहशार्दूलमशकेनगजंतथा ॥ १६ ॥
शिशुनाचमहावीरंमहांतंक्षुद्रजंतुभिः ॥ मूषकेनचमार्जारंमंडूकेनभुजंगमं ॥ १७ ॥ एवंजन्येनजनकंभक्ष्येणैवचभक्षकम्
वन्हिनाचजलंनष्टंवन्हिंशुष्कतृणेनच ॥ १८ ॥ पीताःसप्तसमुद्राश्चद्विजेनैकेनजंतुना ॥ धातुर्गतिर्विचित्रातुदुर्ज्ञेयाभुवन
त्रये॥ १९॥ दैवेनबालिकानष्टुंमांसमर्थाभविष्यति॥बालिकांचवधिष्यामिनात्रकार्याविचारणा॥ २०॥ इत्येवमुक्त्वाकंस
श्चगृहीत्वाबालिकांतदा॥ हंतुमारब्धवान्कंसस्तमुवाचवसुस्तदा॥ २१॥ वृथाहिंसितवान्राजन्देवींबालांकृपानिधे॥ सतच्छ्रु
त्वाविचारज्ञःकंसस्तुष्टोमहामुने ॥ २२॥ संबोधयंतंतत्रैववाग्बभूवाशरीरिणी ॥ हेकंसहंसिकांमूढनविज्ञायहरेर्गतिं ॥ २३॥
कुत्रचित्त्वंनिहंतास्तिकालेव्यक्तोभविष्यति ॥ श्रुत्वैवदेववाणींचतत्याजबालिकांनृपः ॥ २४ ॥ वसुदेवोदेवकीचतामा
दायमुदान्वितौ ॥ जग्मतुःस्वगृहंतौचकन्यांकृत्वास्ववक्षसि ॥ २५ ॥ मृतामिवपुनःप्राप्यब्राह्मणेभ्योददौधनम् ॥ साप
राभगिनीविप्रकृष्णस्यपरमात्मनः ॥ २६ ॥ एकानंशेतिविख्यातापार्वत्यंशसमुद्भवा ॥ वसुस्तांद्वारकायांतुरुक्मिण्युद्वाह
कर्मणि ॥ २७॥ ददौदुर्वाससेभक्त्याशंकरांशायभक्तितः ॥ एवंनिगदितंसर्वंकृष्णजन्मानुकीर्तनम् ॥ जन्ममृत्युजरावि
घ्नंसुखदंपुण्यदंमुने ॥ १२८ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहा० श्रीकृष्णज० सप्तमोऽध्यायः ॥ ७॥ ॥ नारदउवाच ॥ ॥ जन्मा
ष्टमीव्रतंब्रूहिव्रतानांव्रतमुत्तमम् ॥ फलंजयंतीयोगस्यसामान्येनैवसांप्रतम् ॥ १ ॥ कोवादोषोप्यकरणेभोजनेवामहा
मुने ॥ उपवासफलंकिंवाजयंत्यांचसुसंमतम् ॥ २ ॥ व्रतंपूजाविधानंचसंयमस्यचसांप्रतम् ॥ उपवासपारणयोःसुवि

चार्यंवदप्रभो ॥ ३ ॥ ॥ नारायणउवाच ॥ ॥ कृत्वाहविष्यंसप्तम्यांसंयतःपारणेतथा ॥ अरुणोदयवेलायांसमुत्था
यपरेहनि ॥ ४ ॥ प्रातःकृत्यंसंविधायस्नात्वासंकल्पमाचरेत् ॥ व्रतोपवासयोर्ब्रह्मन्श्रीकृष्णप्रीतिहेतुकम् ॥ ५ ॥ मन्वादि
दिवसेप्राप्तेयत्फलंस्नानपूजनैः ॥ फलंभाद्रपदेऽष्टम्यांभवेत्कोटिगुणंद्विज ॥ ६ ॥ तस्यांतिथौवारिमात्रंपितॄणांयःप्रयच्छ
ति ॥ गयाश्राद्धंकृतंतेनशताब्दंनात्रसंशयः ॥ ७ ॥ स्नात्वानित्यक्रियांकृत्वानिर्मायसूतिकागृहं ॥ लोहखंडवन्हिजालै
र्युक्तंरक्षकसंघकैः ॥ ८ ॥ तत्रद्रव्यंबहुविधंनाभिच्छेदनकर्तनम् ॥ धात्रीस्वरूपांनारींचयत्नतःस्थापयेद्बुधः ॥ ९ ॥ पूजाद्र
व्याणिचारूणिसोपचाराणिषोडश ॥ फलान्यष्टौचमिष्टानिद्रव्याण्येवहिनारद ॥ १० ॥ जातीफलंचकंकोलंदाडिमंश्री
फलंतथा ॥ नारिकेरंचजंबीरंकुष्मांडंचसुवाससम् ॥ ११ ॥ आसनंवसनंपाद्यंमधुपर्कंतथैवच ॥ अर्घ्यमाचमनीयंचस्ना
नीयंशयनंतथा ॥ १२ ॥ गंधंपुष्पंचनैवेद्यंतांबूलमनुलेपनम् ॥ धूपदीपौभूषणंवैचोपचारांश्चषोडश ॥ १३ ॥ पादप्रक्षाल
नंकृत्वाधृत्वाधौतेयवाससी ॥ आचम्यचासनेस्थित्वास्वस्तिवाचनपूर्वकम् ॥ १४ ॥ घटमारोपणंकृत्वासंपूज्यपंचदे
वताः ॥ घटेत्वावाहनंकृत्वाश्रीकृष्णंपरमेश्वरम् ॥ १५ ॥ वसुदेवंदेवकींचयशोदांनंदमेवच ॥ रोहिणींबलदेवंचषष्ठीदेवींव
सुंधराम् ॥ १६ ॥ रोहिणींब्राह्मणींचैवअष्टमींस्थानदेवताम् ॥ अश्वत्थाम्नासहबलिंहनुमंतंविभीषणम् ॥ १७ ॥ कृपंप
रशुरामंचव्यासदेवंमृकंडकम् ॥ सर्वमावाहनंकृत्वाध्यानंकुर्याद्धरेस्तदा ॥ १८ ॥ पुष्पकंमस्तकेन्यस्यपुनर्ध्यायेद्विचक्ष
णः ॥ ध्यानंचसामवेदोक्तंशृणुवक्ष्यामिनारद ॥ १९ ॥ ब्रह्मणाकथितंपूर्वंकुमारायमहात्मने ॥ २० ॥ बालंनीलांबुजाभ
मतिशयरुचिरंस्मेरवक्त्रांबुजंतंब्रह्मेशानंतधर्मैःकतिकतिदिवसैःस्तूयमानंपरंयत् ॥ ध्यानासाध्यंऋषींद्रैर्मुनिगणमनुजैः

सिद्धसंघैरसाध्ययोगींद्राणामचिंत्यमतिशयमतुलंसाक्षिरूपंभजेऽहम् ॥ २१ ॥ ध्यात्वापु [illegible] वाचतत्सर्वंचनिवेदये
त् ॥ एवंव्रतीव्रतंकुर्याच्छृणुमंत्रक्रमंमुने ॥२२॥ आसनंसर्वशोभाढ्यंसद्रत्नमणिनिर्मितम् ॥ विचित्रंचविचित्रेणगृह्यतां
शोभनंहरे ॥ २३ ॥ वसनंवन्हिशौचंचनिर्मितंविश्वकर्मणा ॥ प्रतप्तस्वर्णखचितंचित्रितंगृह्यतांहरे ॥ २४ ॥ पादप्रक्षाल
नार्थंचस्वर्णपात्रस्थितंजलम् ॥ पवित्रंनिर्मलंचारुपाद्यंचगृह्यतांहरे ॥२७॥ मधुसर्पिर्दधिक्षीरंशर्करासंयुतंपरम् ॥ स्वर्ण
पात्रस्थितंदेयंस्नानार्थंगृह्यतांहरे ॥ २६ ॥ दूर्वाक्षतंशुक्लपुष्पंस्वच्छतोयसमन्वितं ॥ चंदनागरुकस्तूरीसहितंगृह्यतांहरे ॥
॥ २७ ॥ सुस्वादुस्वच्छतोयंचवासितंगंधवस्तुना ॥ शुद्धमाचमनीयंचगृह्यतांपरमेश्वर ॥ २८ ॥ गंधपुष्पसमायुक्तंवि
ष्णुतैलंसुवासितम् ॥ आमलक्याद्रवंचैवस्नानीयंगृह्यतांहरे ॥ २९ ॥ सद्रत्नमणिसारेणरचितांसुमनोहराम् ॥ छादितांसू
क्ष्मवस्त्रेणशय्यांचगृह्यतांहरे ॥३०॥ चूर्णंचवृक्षभेदानांमूलानांद्रवसंयुतम् ॥ कस्तूरीद्रवसंयुक्तंगंधंचगृह्यतांहरे ॥३१॥
पुष्पंसुगंधियुक्तंचसंयुक्तंकुंकुमेनच ॥ सुप्रियंसर्वदेवानांसांप्रतंगृह्यतांहरे ॥ ३२ ॥ गृह्यतांस्वस्तिकोक्तंचमिष्टद्रव्यसम
न्वितम् ॥ सुपक्वफलसंयुक्तंनैवेद्यंगृतांहरे ॥३३॥ लड्डुकंमोदकंचैवसर्पिःक्षीरंगुडंमधु ॥ नवोत्धृतंदधितक्रंनैवेद्यंगृह्यतांह
रे ॥३४॥ शीतलंशर्करायुक्तंक्षीरस्वादुसुपक्वकम् ॥ तांबूलंभोगसारंचकर्पूरादिसमन्वितम् ॥ ३५ ॥ भक्त्यानिवेदितमिदंगृह्य
तांपरमेश्वर ॥ चंदनागरुकस्तूरीकुंकुमद्रवसंयुतम् ॥३६॥ अबीरचूर्णंरुचिरंगृह्यतांपरमेश्वर ॥ तरुभेदरसोत्कर्षोगंधयुक्तो
ग्निनासह ॥ ३७ ॥ सुप्रियःसर्वदेवानांधूपोयंगृह्यतांहरे ॥ घोरांधकारनाशैकहेतुरेवशुभावहः ॥ ३८ ॥ सुप्रदीपोदीप्तिक
रोदीपोऽयंगृह्यतांहरे ॥ पवित्रंनिर्मलंतोयंकर्पूरादिसमायुतम् ॥ ३९ ॥ जीवनंसर्वबीजानांपानार्थंगृह्यतांहरे ॥ नाना

पुष्पसमायुक्तंग्रथितंसूक्ष्मतंतुना ॥ ४० ॥ शरीरभूषणवरंमाल्यंचप्रतिगृह्यताम् ॥ दत्वादेयानिद्रव्याणिपूजोपयोगिता
निच ॥ ४१ ॥ व्रतस्थानस्थितंद्रव्यंहरयेदेयमेवच ॥ फलानितरुबीजानिस्वादूनिसुंदराणिच ॥ ४२ ॥ वंशवृद्धिकराण्येव
गृह्यंतांपरमेश्वर ॥ आवाहितांश्चदेवांश्चप्रत्येकंपूजयेद्व्रती ॥ ४३ ॥ तान्पूज्यभक्तिभावेनदद्यात्पुष्पांजलित्रयम् ॥ सुनं
दनंदकुमुदान्गोपान्गोपीश्चराधिकाम् ॥ ४४ ॥ गणेशंकार्तिकेयंचब्रह्माणंचशिवंशिवाम् ॥ लक्ष्मींसरस्वतींचैवदिक्पा
लांश्चग्रहांस्तथा ॥ ४५ ॥ संपूज्यसर्वदेवांश्चप्रणम्यदंडवद्भुवि ॥ ब्राह्मणेभ्यश्चनैवेद्यंदत्वादद्याच्चदक्षिणाम् ॥ ४६ ॥ क
थांचजन्माध्यायोक्तांशृणुयाद्भक्तिभावतः ॥ तदाकुशासनेस्थित्वाकुर्याज्जागरणंव्रती ॥ ४७ ॥ प्रभातेचान्हिकंकृत्वा
संपूज्यश्रीहरिंमुदा ॥ ब्राह्मणान्भोजयित्वाचकारयेद्धरिकीर्तनम् ॥ ४८ ॥ ॥ नारदउवाच ॥ ॥ व्रतकालव्यवस्थांचवे
दोक्तांसर्वसंमताम् ॥ वेदार्थंचसमालोच्यसंहितांचपुरातनीम् ॥ ४९ ॥ उपवासेजागरणेव्रतेकिंवाफलंमुने ॥ किंवापापंतत्र
भुक्त्वावदवेदविदांवर ॥ ५० ॥ ॥ श्रीनारायणउवाच ॥ ॥ अष्टमीकर्क्षसंयुक्तारात्र्यर्द्धेयदिदृश्यते ॥ सएवमुख्यकालश्च
तत्रजातःस्वयंहरिः ॥ ५१ ॥ जयंपुण्यस्यकुरुतेजयंतीतेनसंस्मृता ॥ तत्रोपोष्यव्रतंकृत्वाकुर्याज्जागरणंबुधः ॥ ५२ ॥ स
र्वापवादःकालोयंप्रधानःसर्वसंमतः ॥ इतिवेदविदांवाणीचेत्युक्त्वावेधसापुरा ॥ ५३ ॥ तत्रजागरणंकृत्वायश्चोपोष्यव्रतंचरे
त् ॥ कोटिजन्मार्जितात्पापान्मुच्यतेनात्रसंशयः ॥ ५४ ॥ वर्जनीयाप्रयत्नेनसप्तमीसहिताष्टमी ॥ अविद्धायांकर्क्षायां
जातोदेवकिनंदनः ॥ ५५ ॥ वेदवेदांगगुप्तेतिविशिष्टेमंगलक्षणे ॥ व्यतीतेरोहिणीऋक्षेव्रतीकुर्याच्चपारणाम् ॥ ५६ ॥ ति
थ्यंतेचहरिंस्मृत्वाकृत्वादेवार्चनंव्रती ॥ पारणंपावनंपुंसांसर्वपापप्रणाशनम् ॥ ५७ ॥ उपवा[illegible]भूतंचफलदंशुद्धिकार

णम् ॥ सर्वेष्ववापवासेषुदिवापारणमिष्यते ॥ ५८ ॥ अन्यथाफलहानिःस्यात्कृतेधारणपारणे ॥ नरात्रौपारणंकुर्याद्द
तेवैरोहिणीव्रतात् ॥ ५९ ॥ निशायांपारणंकुर्याद्वर्जयित्वामहानिशाम् ॥ पूर्वाह्णेपारणंकृत्वाशस्तंविप्रसुरार्चनम् ॥ ६० ॥
सर्वेषांसंमतंकुर्याद्दतेवैरोहिणीव्रतम् ॥ बुधसोमसमायुक्ताजयंतीयदिलभ्यते ॥ ६१ ॥ नकुर्याद्गर्भवासंचतत्रकृत्वाव्रतं
व्रती ॥ उदयेचाष्टमीकिंचिन्नवमीसकलायदि ॥ ६२ ॥ भवेद्बुधेंदुसंयुक्ताप्राजापत्यर्क्षसंयुता ॥ अपिवर्षशतेनापिलभ्यते
वानलभ्यते ॥ ६३ ॥ व्रतंतत्रव्रतीकुर्यात्पुंसांकोटिसमुद्धरेत् ॥ नृणांविनाव्रतेनापिभक्तानांवित्तवर्जितम् ॥ ६४ ॥ कृतेनै
वोपवासेनप्रीतोभवतिमाधवः ॥ भक्त्यानानोपचारेणरात्रौजागरणेनच ॥ ६५ ॥ फलंददातिदैत्यारिर्जयंतीव्रतसंभ
वम् ॥ वित्तशाठ्यमकुर्वाणःसम्यक्फलमवाप्नुयात् ॥ ६६ ॥ कुर्वाणोवित्तशाठ्यंचलभतेसदृशंफलम् ॥ अष्टम्यामथरो
हिण्यांनकुर्यात्पारणंबुधः ॥ ६७ ॥ हन्यात्पुराकृतंकर्मचोपवासार्जितंफलम् ॥ तिथिरष्टगुणंहंतिनक्षत्रंचचतुर्गुणम् ॥
॥ ६८ ॥ तस्मात्प्रयत्नतःकुर्यात्तिथिभांतेचपारणम् ॥ महानिशायांप्राप्तायांतिथिभांतंयदाभवेत् ॥ ६९ ॥ तृतीयेन्हिमु
निश्रेष्ठपारणंकुरुतेबुधः ॥ षण्मुहूर्तेव्यतीतेतुरात्रावेवमहानिशा ॥ ७० ॥ लभतेब्रह्महत्यांचतत्रभुक्त्वाचनारद ॥ गोमांस
विण्मूत्रसमंतांबूलंचफलंजलम् ॥ ७१ ॥ पुंसामभक्ष्यंशुद्धानामोदनस्यचकाकथा ॥ त्रियामांरजनींप्राहुस्त्यक्त्वाद्यंतच
चतुष्टयम् ॥ ७२ ॥ नाडीनांतदुभेसंध्येदिवसाद्यंतसंज्ञिते ॥ जन्माष्टम्यांचशुद्धायांकृत्वाजागरणंव्रतम् ॥ ७३ ॥ शतज
न्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ जन्माष्टम्यांचशुद्धायामुपोष्यकेवलंनरः ॥ ७४ ॥ अश्वमेधफलंतस्यव्रतंजागर
णंविना ॥ यद्बाल्येयच्चकौमारेवार्द्धकेयच्चयौवने ॥ ७५ ॥ सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ श्रीकृष्णजन्मदिव

सेयश्चभुंक्तेनराधमः ॥ ७६ ॥ सभवेन्मातृगामीचब्रह्महत्याशतंलभेत् ॥ कोटिजन्मार्जितंपुण्यंतस्यनश्यतिनिश्चितम् ॥ ७७ ॥ अनर्हश्चाशुचिःशश्वद्दैवेपित्र्येचकर्मणि ॥ अंतेवसेत्कालसूत्रेयावच्चंद्रदिवाकरौ ॥ ७८ ॥ कृमिभिःशूलतुल्यैश्च तीक्ष्णशृंगैश्चभक्षितः ॥ पापीततःसमुत्थायभारतेजन्मचेल्लभेत् ॥ ७९ ॥ षष्टिर्वर्षसहस्राणिविष्ठायांचक्रिमिर्भवेत् ॥ गृध्रकोटिसहस्राणिशतजन्मानिसूकरः ॥ ८० ॥ श्वापदंशतजन्मानिसृगालःसप्तजन्मच ॥ सप्तजन्मसुसर्पश्चकालश्चसप्तजन्मसु ॥ ८१ ॥ ततोभवेन्नरोमूकोगलत्कुष्ठीसदातुरः ॥ ततोभवेत्पशुघ्नश्चव्यालग्राहीततोभवेत् ॥ ८२ ॥ तदंतेचभवेद्दस्युर्धर्महीनश्चगृध्रुकः ॥ ततोभवेत्सरजकस्तैलकारस्ततोभवेत् ॥ ८३ ॥ ततोभवेद्देवलकोब्राह्मणश्चसदाशुचिः ॥ उपवासासमर्थश्चेदेकंविप्रंचभोजयेत् ॥ ८४ ॥ तावद्धनानिवादद्याद्यद्भुक्तंद्विगुणंभवेत् ॥ सहस्रसंमितांदेवींजपेद्वाप्राणसंयमान् ॥ ८५ ॥ कुर्याद्वादशसंख्याकान्यथार्थंतद्व्रतेनरः ॥ इत्येवंकथितंवत्सश्रुतंयद्धर्मवक्त्रतः ॥ व्रतोपवासपूजानांविधानमकृतेचयत् ॥ ८६ ॥ ॥ इतिश्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे जन्माष्टमीव्रतपूजोपवास निरूपणंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ ७॥ ॥ नारदउवाच ॥ ॥ संस्थाप्यगोकुलेकृष्णंयशोदामंदिरेवसुः ॥ जगामस्वगृहंनंदःकिंचकार महाप्रभुः ॥ १ ॥ किंचकारहरिस्तत्रकतिवर्षस्थितिःप्रभो ॥ बालक्रीडनकंतस्यवर्णयक्रमशोमुने ॥ २ ॥ पुराकृतायाप्रतिज्ञागोलोकेराधयासह ॥ तन्नूनंकेनविधिनाप्रतिज्ञापालनंहरेः ॥ ३ ॥ कीदृग्वृंदावनंनाममंडलंकिंविधंवद ॥ रासक्रीडांजलक्रीडांसंव्यस्यवर्णयप्रभो ॥ ४ ॥ नंदस्तपःकिंचकारयशोदाचाथरोहिणी ॥ हरेःपूर्वंचहलिनःकुत्रजन्मबभूवह ॥ ५ ॥ पीयूषखंडमाख्यानमपूर्वंश्रीहरेःस्मृतम् ॥ विशेषतःकविमुखान्नव्यंनूनंपदेपदे ॥ ६ ॥ स्वरासमंडलक्रीडांवर्णयस्वयमेव

च ॥ परोक्षवर्णनात्काव्यंप्रशस्तंनव्यवर्णनम् ॥ ७ ॥ श्रीकृष्णांशोभवान्साक्षाद्योगींद्राणांगुरोर्गुरुः ॥ योयस्यांशःसच
जनस्तस्यैवसुखतःसुखी ॥ ८ ॥ त्वयैववर्णितःपादेविलीनौतुयुवांहरेः ॥ साक्षाद्गोलोकनाथांशस्त्वमेवतत्समोमहान् ॥
॥ ९ ॥ नारायणउवाच ॥ ॥ ब्रह्मेशशेषविघ्नेशाःकूर्मोधर्मोहमेवच ॥ नरश्चकार्तिकेयश्चश्रीकृष्णांशावयंनर ॥ १० ॥ अ
होगोलोकनाथस्यमहिमाकेनवर्ण्यते ॥ यंस्वयंनविजानीमोनवेदाःकिंविपश्चितः ॥ ११ ॥ सूकरोवामनःकल्कीबौद्धःक
पिलमीनकौ ॥ एतेचांशाःकलाश्चान्येसंत्येवकतिधामुने ॥ १२ ॥ कूर्मोनृसिंहोरामश्चश्वेतद्वीपविराड्विभुः ॥ परिपूर्णत
मःकृष्णोवैकुंठेगोकुलेस्वयम् ॥ १३ ॥ वैकुंठेकमलाकांतोरूपभेदाच्चतुर्भुजः ॥ गोलोकेगोकुलेराधाकांतोयंद्विभुजःस्वयम्
॥ १४ ॥ अस्यैवतेजोनित्यंचचित्तेकुर्वंतियोगिनः ॥ भक्ताःपादांबुजंतेजःकुतस्तेजस्विनंविना ॥ १५ ॥ शृणुविप्रवर्ण
यामियशोदानंदयोस्तपः ॥ रोहिण्याश्चयतोहेतोर्ददृशुस्तेहरेर्मुखम् ॥ १६ ॥ वसूनांप्रवरोनंदोनाम्नाद्रोणस्तपोधनः ॥ त
स्यपत्नीधरासाध्वीयशोदासातपस्विनी ॥ १७ ॥ रोहिणीसर्पमाताचकद्रूश्चसर्पकारिणी ॥ एतेषांजन्मचरितंनिबोधकथ
यामिते ॥ १८ ॥ एकदाचधराद्रोणौपर्वतेगंधमादने ॥ पुण्यदेभारतेवर्षेगौतमाश्रमसन्निधौ ॥ १९ ॥ तपश्चकारतत्रैवव
र्षाणामयुतंमुने ॥ श्रीकृष्णदर्शनार्थंचनिर्जनेसुप्रभातटे ॥ २० ॥ नददर्शहरिंद्रोणोधराचैवतपस्विनी ॥ कृत्वाग्निकुंडंवै
राग्यात्प्रवेष्टुंसमुपस्थितौ ॥ २१ ॥ तौमर्तुकामौदृष्ट्वाचवाग्बभूवाशरीरिणी ॥ द्रक्ष्यथःश्रीहरिंपृथ्व्यांगोकुलेपुत्ररूपिण
म् ॥ २२ ॥ जन्मांतरेवसुश्रेष्ठदुर्दर्शंयोगिनांविभुम् ॥ ध्यानासाध्यंचविदुषांब्रह्मादीनांचवंदितम् ॥ २३ ॥ श्रुत्वैवंतद्धरा
द्रोणौजग्मतुःस्वालयंसुखात् ॥ लब्ध्वातुभारतेजन्मदृष्टंताभ्यांहरेर्मुखम् ॥ २४ ॥ यशोदानंदयोरेवकथितंचरितंतव ॥

सुगोप्यंत्रिदशानांचरोहिणीचरितंश्रृणु ॥ २५ ॥ एकदादेवमाताचपुष्पोत्सवदिनेसती ॥ विज्ञापनंचरद्वाराचकारकश्य
पंमुने ॥ २६ ॥ सुस्नातासुंदरीदेवीरत्नालंकारभूषिता ॥ चकारवेषंविविधंददर्शदर्पणेमुखम् ॥ २७ ॥ कस्तूरीबिंदुनासा
र्द्धंसिंदूरबिंदुसंयुतम् ॥ रत्नकुंडलशोभाढ्यंपत्राभरणभूषितम् ॥ २८ ॥ गजमौक्तिकसंयुक्तंनासाग्रंसुमनोहरम् ॥ शर
त्पार्वणचंद्राभंशरत्पंकजलोचनम् ॥ २९ ॥ वक्रभ्रूभंगिनायुक्तंविचित्रकज्जलोज्ज्वलम् ॥ पक्वदाडिमबीजाभदंतपं
क्तिविराजितम् ॥ ३० ॥ पक्वबिंबाधरौष्ठंचसस्मितंसुंदरंसदा ॥ अतीवकमनीयंचमुनींद्रचित्तमोहनम् ॥ ३१ ॥ एवंभूतं
मुखंदृष्ट्वासुंदरीस्वगृहेस्थिता ॥ पश्यंतीपतिमार्गंचकामबाणप्रपीडिता ॥ ३२ ॥ शुश्राववार्तामदितिःकश्यपंकद्रुसंयुत
म् ॥ रत्नसारसमारंभेतस्यावक्षस्थलेस्थितम् ॥ ३३ ॥ श्रुत्वाचुकोपसाध्वीसाहताशारतिकातरा ॥ नशशापपतिंप्रेम्णाश
शापसर्पमातरम् ॥ ३४ ॥ नदेवालययोग्यासाधर्मिष्ठाधर्मनाशिनी ॥ दूरंगच्छतुस्वर्लोकादात्मयोनिंचमानवीम् ॥ ३५ ॥
श्रुत्वैवंसाचरद्वाराशशापदेवमातरम् ॥ साचैवंमानवींयोनिंयातुमर्त्येजरायुताम् ॥ ३६ ॥ कश्यपोबोधयामासकद्रुंचस
र्पमातरम् ॥ कालेयास्यसिमर्त्येचमयासहशुचिस्मिते ॥ ३७ ॥ त्यजभीतिलभसुखंद्रक्ष्यसिश्रीहरेर्मुखम् ॥ एवमुक्त्वाक
श्यपश्चजगामचादितेर्गृहम् ॥ ३८ ॥ वांछापूर्णाचतस्याश्चचकारभगवान्विभुः ॥ ऋतौतत्रमहेंद्रश्चबभूवचसुरर्षभः ॥ ३९ ॥
अदितिर्देवकीचैवसर्पमाताचरोहिणी ॥ कश्यपोवसुदेवश्चश्रीकृष्णजनकोमहान् ॥ ४० ॥ रहस्यंगोपनीयंचसर्वंनिगदितं
मुने ॥ अधुनाबलदेवस्यजन्माख्यानंमुनेश्रृणु ॥ ४१ ॥ अनंतस्याप्रमेयस्यसहस्रशिरसःप्रभोः ॥ रोहिणीवसुदेवस्य
भार्यारत्नंचप्रेयसी ॥ ४२ ॥ जगामगोकुलंसाध्वीवसुदेवाज्ञयामुने ॥ संकर्षणस्यरक्षार्थंकंसभीतापलायिता ॥ ४३ ॥

देवक्याःसप्तमंगर्भमायाकृष्णाज्ञयातदा ॥ रोहिण्याजठरेतत्रस्थापयामासगोकुले ॥ ४४ ॥ स [illegible] चतदागर्भंकैलासंसा
जगामह ॥ दिनांतरेकतिपयेरोहिणीनंदमंदिरे ॥ ४५ ॥ सुस्रावपुत्रंकृष्णांशंतप्तरौप्याभमीश्वरम् ॥ ईषद्धास्यंप्रसन्नास्यं
ज्वलंतंब्रह्मतेजसा ॥ ४६ ॥ तस्यैवजन्ममात्रेणदेवाःप्रमुदिरेतदा ॥ स्वर्गेदुंदुभयोनेदुरानकामुरजादयः ॥ ४७ ॥ जयश
ब्दंशंखशब्दंचक्रुर्देवामुदान्विताः ॥ नंदोत्हृष्टोब्राह्मणेभ्योधनंबहुविधंददौ ॥ ४८ ॥ चिच्छेदनाडींधात्रींचस्नापयामास
बालकम् ॥ जयशब्दंजगुर्गोप्यःसर्वाभरणभूषिताः ॥ ४९ ॥ परपुत्रोत्सवंनंदश्चकारपरमादरात् ॥ तदायशोदागोपीभ्यो
ब्राह्मणेभ्योददौमुदा ॥ ५० ॥ धनानिनानावस्तूनितैलंसिंदूरमेवच ॥ इत्येवंकथितंवत्सयशोदानंदयोस्तपः ॥ ५१ ॥ ज
न्माख्यानंचहलिनोरोहिणीचरितंतथा ॥ अधुनातेवांछनीयंनंदपुत्रोत्सवंश्टणु ॥ ५२ ॥ सुखदंमोक्षदंसारंजन्ममृत्युज
रापहम् ॥ मंगलंकृष्णचरितंवैष्णवानांचजीवनम् ॥ ५३ ॥ सर्वाशुभविनाशंचभक्तिदास्यप्रदंहरेः ॥ श्रीकृष्णंवसुदेवश्चसं
स्थाप्यनंदमंदिरे ॥ ५४ ॥ गृहीत्वाबालिकांचैवजगामनिजमंदिरम् ॥ कथितंचरितंतस्याःश्रुतंसन्मुखतोमुने ॥ ५५ ॥
अधुनागोकुलेकृष्णचरितंश्टणुमंगलम् ॥ वसुदेवेगृहेयातेयशोदानंदएवच ॥ ५६ ॥ मंगलेसूतिकागारेजयागारेजया
न्विते ॥ ददर्शपुत्रंभूमिस्थंनवीननीरदप्रभम् ॥ ५७ ॥ अतीवसुंदरंनग्नंपश्यंतंगृहशेखरम् ॥ शरत्पार्वणचंद्रास्यंनीलेंदीवर
लोचनम् ॥ ५८ ॥ रुदंतंचहसंतंचवेणुसंसक्तविग्रहम् ॥ हस्तद्वयंसुविन्यस्तंप्रेमवंतंपदांबुजम् ॥ ५९ ॥ दृष्ट्वानंदःस्त्रियासा
र्द्धंहर्षांत्हृष्टोबभूवह ॥ धात्रीतंस्नापयामासशीततोयेनबालकम् ॥ ६० ॥ चिच्छेदनाभिंबालस्यहर्षाद्गोप्योजयंददुः ॥ आज
ग्मुर्गोपिकाःसर्वाबृहच्छ्रोण्यश्चलत्कुचाः ॥ ६१ ॥ बालिकाश्चवयस्याश्चविप्रपत्न्यश्चसूतिकाम् ॥ आशिषंयुयुजुःसर्वादद

शुर्बालकंमुदा ॥ ६२ ॥ क्रोडेचक्रुःप्रशंसंत्यऊषुस्तत्रचकाश्चन ॥ नंदःसचैलःस्नातश्चधृत्वाधौतेयवाससी ॥ ६३ ॥ पारंपर्यं
विधिंतत्रचकारत्दृष्टमानसः ॥ ब्राह्मणान्भोजयामासकारयामासमंगलम् ॥ ६४ ॥ वाद्यानिवादयामासबंदिभ्यश्चददुर्धन
म् ॥ ततोनंदश्चसानंदंब्राह्मणेभ्योददौधनम् ॥ ६५ ॥ सद्रत्नानिप्रवालानिहीरकाणिचसादरम् ॥ तिलानांपर्वतान्सप्तसुव
र्णशतकंमुने ॥ ६६ ॥ रौप्यंधान्याचलंवस्त्रंगोसहस्रंमनोहरम् ॥ दधिदुग्धंशर्करांचनवनीतंघृतंमधु ॥ ६७ ॥ मिष्टान्नंसल्लु
ड्डुकौघंस्वादूनिमोदकानिच ॥ भूमिंचसर्वसस्याढ्यांवायुवेगांस्तुरंगमान् ॥ ६८ ॥ तांबूलानिचतैलानिदत्वात्दृष्टोबभूवह ॥
रक्षितुंमूतिकागारंयोजयामासब्राह्मणान् ॥ ६९ ॥ तत्रमंत्रज्ञमनुजान्स्थविरान्गोपिकागणान् ॥ वेदांश्चपाठयामासह
रेर्नामैकमंगलम् ॥ ७० ॥ भक्त्याचब्राह्मणद्वारापूजयामासदेवताः ॥ गोपालिकाश्चवृद्धाश्चरत्नालंकारभूषिताः ॥ ७१ ॥
सस्मिताःशीघ्रगामिन्यआजग्मुर्नंदमंदिरम् ॥ नानाविधाश्चगणकाज्योतिःशास्त्रविशारदाः ॥ ७२ ॥ वाक्सिद्धाःपुस्तक
कराआजग्मुर्नंदमंदिरम् ॥ सस्मिताविप्रपत्न्यश्चवयस्याःस्थविरावराः ॥ ७३ ॥ बालिकाबालकयुताआजग्मुर्नंदमंदिरम्
॥ तेभ्योपिप्रददौरत्नंधनानिविविधानिच ॥ ७४ ॥ वरवस्त्राणिरौप्याणिगोसहस्राणिसादरम् ॥ नंदस्तेभ्योनमस्कृत्यच
कारविनयंमुदा ॥ ७५ ॥ आशिषंयुयुजुःसर्वेदद्दशुर्बालकंपरम् ॥ एवंसंभृतसंभारोबभूवव्रजपुंगवः ॥ ७६ ॥ गणकैःकार
यामासयद्भविष्यंशुभाशुभम् ॥ एवंववर्द्धबालश्चशुक्लपक्षेयथाशशी ॥ ७७ ॥ नंदालयेहलीचैवभुंक्तेमातुःपयोधरम् ॥
यशोदारोहिणीनंदस्तस्थुर्गेहेमुदान्विताः ॥ ७८ ॥ ॥ इतिश्रीब्रह्म० महापु० श्रीकृष्णजन्मखंडेनंदपुत्रोत्सवोनामनवमो
ऽध्यायः ॥ ९ ॥ ॥ श्रीनारायणउवाच ॥ ॥ अथकंसःसभामध्येस्वर्णसिंहासनस्थितः ॥ शुश्रावावाचंगगनेसूनृतामशरीरि

णीम् ॥ १ ॥ किंकरोषिमहामूढचिंतांस्वःश्रेयसःकुरु ॥ जातःकालोधरण्यांतेतिष्ठोपायेनराधिप ॥ २ ॥ नंदायतनयंदत्वा
वसुदेवस्तवांतकम् ॥ कन्यामादायतुभ्यंचदत्वासंमाययास्थितः ॥ ३ ॥ मायांशाकन्यकेयंचवासुदेवःस्वयंहरिः ॥ तव
हंतागोकुलेचवर्द्धतेनंदमंदिरे ॥ ४ ॥ देवकीसप्तमोगर्भोवर्द्धतेनंदमंदिरे ॥ देवकीसप्तमोगर्भोनसुस्रावामृतंसुतम् ॥ ५ ॥
स्थापयामासमायातंरोहिणीजठरेकिल ॥ तत्रजातश्चशेषांशोबलदेवोमहाबलः ॥ ६ ॥ गोकुलेतौचवर्द्धेतेकालौतेनंदमंदि
रे ॥ श्रुत्वेतिवचनंराजाबभूवानम्रकंधरः ॥ ७ ॥ चिंतामवापसहसातत्याजाहारमुन्मनाः ॥ पूतनांचसमानीयप्राणेभ्यःप्रे
यसींसतीम् ॥ ८ ॥ उवाचभगिनींराजासभामध्येचनीतिवत् ॥ कंसउवाच ॥ पूतनेगोकुलंगच्छकार्यार्थंनंदमंदिरम् ॥ ९ ॥
विषाक्तंचस्तनंकृत्वाशिशवेदेहिसत्वरम् ॥ त्वंमनोयायिनीवत्सेमायाशास्त्रविशारदा ॥ १० ॥ मायामानुषरूपंचविधाय
व्रजयोगिनी ॥ दुर्वाससोमहामंत्रंप्राप्यसर्वत्रगामिनी ॥ ११ ॥ सर्वरूपंविधातुंत्वंशक्तासिसुप्रतिष्ठिते ॥ इत्युक्त्वातांम
हाराजातस्थौसंसदिनारद ॥ १२ ॥ जगामपूतनाकंसंप्रणम्यकामचारिणी ॥ तप्तकांचनवर्णाभानानालंकारभूषिता ॥
॥ १३ ॥ बिभ्रतीकबरीभारंमालतीमाल्यसंयुतम् ॥ कस्तूरीबिंदुनायुक्तंसिंदूरंदधतीमुदा ॥ १४ ॥ मंजीररशनाभ्यांचक
लशब्दंप्रकुर्वती ॥ संप्राप्यगोष्ठंदुर्दर्शंनंदाश्रममनोहरम् ॥ १५ ॥ परिखाभिर्गभीराभिर्दुर्लंघ्याभिश्चवेष्टितम् ॥ रचितंप्र
स्तरैर्दिव्यैर्निर्मितंविश्वकर्मणा ॥ १६ ॥ इंद्रनीलैर्मरकतैःपद्मरागैश्चभूषितम् ॥ सुवर्णकलशैर्दिव्यैश्चित्रितैःशेखरोज्वलैः
॥ १७ ॥ प्राकारैर्गगनस्पर्शैश्चतुर्द्वारसमन्वितैः ॥ युक्तंलोहकपाटैश्चद्वारपालसमन्वितैः ॥ १८ ॥ वेष्टितंसुंदरंरम्यंसुंदरीग
णवेष्टितम् ॥ मुक्तामाणिक्यपरमैःपूर्णंरत्नादिभिर्धनैः ॥ १९ ॥ स्वर्णपात्रघटाकीर्णंगवांकोटिभिरन्वितम् ॥ भरणी

यैःकिंकरैश्चगोपलक्षैःसमन्वितम् ॥ २० ॥ दासीनांचसहस्रैश्चकर्मव्यग्रैःसमन्वितम् ॥ प्रविवेशाश्रमंसाध्वीसस्मितासुम
नोहरा ॥ २१ ॥ दृष्ट्वातांप्रविशंतींचगोप्योदृष्ट्वानुमेनिरे ॥ किंवापद्मालयादुर्गाकृष्णंद्रष्टुंसमागता ॥ २२ ॥ प्रणेमुर्गोपि
कागोपाःपप्रच्छुःकुशलंचताम् ॥ ददौसिंहासनंपाद्यंवासयामासतत्रवै ॥ २३ ॥ पप्रच्छकुशलंसाचगोपानांबालकस्यच ॥
उवाससस्मितासाध्वीपाद्यंजग्राहसादरम् ॥ २४ ॥ तामूचुर्गोपिकाःसर्वाःकात्वमीश्वरिसांप्रतम् ॥ वासस्तेकुत्रकिंनाम
किंवात्रकर्मनोवद ॥ २५ ॥ तासांचवचनंश्रुत्वासाप्युवाचमनोहरम् ॥ मथुरावासिनीगोपीसांप्रतंविप्रकामिनी ॥ २६ ॥
श्रुतंवाचिकवक्त्रेणतत्वंमंगलसूचकम् ॥ बभूवस्थविरेकालेनंदपुत्रोमहानिति ॥ २७ ॥ श्रुत्वागताहंतंद्रष्टुमाशिषंकर्तुमी
प्सितम् ॥ पुत्रमानयतंदृष्ट्वायामिकृत्वातमाशिषम् ॥ २८ ॥ ब्राह्मणीवचनंश्रुत्वायशोदात्हृष्टमानसा ॥ प्रणमय्यसुतं
क्रोडेददौब्राह्मणयोषितः ॥ २९ ॥ कृत्वाक्रोडेतुतंसाध्वीचुचुंबचपुनःपुनः ॥ स्तनंददौसुखासीनाहरिंपुण्यवतीसती ॥ ३० ॥
अहोद्भुतोऽयंबालस्तेसुंदरोगोपसुंदरि ॥ गुणैर्नारायणसमोबालोयमित्युवाचह ॥ ३१ ॥ कृष्णोविषस्तनंपीत्वाजहासवक्ष
सिस्थितः ॥ तस्याःप्राणैःसहपपौविषक्षीरंसुधामिव ॥ ३२ ॥ तत्याजबालकंसाध्वीप्राणांस्त्यक्त्वापपातह ॥ विकृताका
रवदनांचोत्तानवदनंमुने ॥ ३३ ॥ स्थूलदेहंपरित्यज्यसूक्ष्मदेहंविवेशसा ॥ आरुरोहरथंशीघ्रंरत्नसारविनिर्मितम् ॥ ३४ ॥
पार्षदप्रवरैर्दिव्यैर्वेष्टितंसुमनोहरैः ॥ श्वेतचामरलक्षेणशोभितंलक्षदर्पणैः ॥ ३५ ॥ वन्हिशौचेनवस्त्रेणसूक्ष्मेणभूषितंव
रम् ॥ नानाचित्रविचित्रैश्चसद्रत्नकलशैर्युतम् ॥ ३६ ॥ सुंदरंशतचक्रंचज्वलितंरत्नतेजसा ॥ पार्षदास्तांरथेकृत्वाजग्मु
र्गोलोकमुत्तमम् ॥ ३७ ॥ दृष्ट्वातमद्भुतंलोकागोपिकाश्चातिविस्मिताः ॥ कंसःश्रुत्वाचतत्सर्वंविस्मितश्चबभूवह ॥ ३८ ॥

यशोदाबालकंनीत्वाक्रोडेकृत्वास्तनंददौ ॥ मंगलंकारयामासविप्रद्वाराशिशोर्मुने ॥ ३९ ॥ ददाहदेहंतस्याश्चनंदःसानंदपू
र्वकम् ॥ चंदनागरुकस्तूरीसमंसंप्राप्यसौरभम् ॥ ४० ॥ ॥ नारदउवाच ॥ ॥ सावाकाराक्षिसीरूपामुनेपुण्यवतीसती ॥
केनपुण्येनतंदृष्ट्वाजगामकृष्णमंदिरम् ॥ ४१ ॥ ॥ श्रीनारायणउवाच ॥ ॥ बलियज्ञेवामनस्यदृष्ट्वारूपंमनोहरम् ॥ बलि
कन्यारत्नमालापुत्रस्नेहंचकारतम् ॥ ४२ ॥ मनसामानसंचक्रेपुत्रस्यसदृशोमम ॥ पिबेद्यदिस्तनंकृष्णोनपुनाराक्षसीमु
ने ॥ ४३ ॥ भक्त्यामातृगतिंप्रापकंभजामविनाहरिम् ॥ इत्येवंकथितंविप्रश्रीकृष्णगुणकीर्तनम् ॥ ४४ ॥ पदेपदेसुमधु
रंप्रवरंकथयामिते ॥ ४४ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेपूतनामोक्षोनामदशमोऽध्यायः ॥ १० ॥
श्रीनारायणउवाच ॥ ॥ एकदागोकुलेसाध्वीयशोदानंदगेहिनी ॥ गृहकर्मणिसंसक्ताकृत्वाबालंस्ववक्षसि ॥ १ ॥ वा
त्यारूपंतृणावर्तमागच्छंतंचगोकुलम् ॥ श्रीहरिर्मनसाज्ञात्वाभारयुक्तोबभूवह ॥ २ ॥ भाराक्रांतायशोदाचतत्याजबालकं
तदा ॥ शयनंकारयित्वाचजगामयमुनांमुने ॥ ३ ॥ एतस्मिन्नंतरेतत्रवात्यारूपधरोऽसुरः ॥ आदायतंभ्रामयित्वागत्वा
चशतयोजनम् ॥ ४ ॥ बभंजवृक्षशाखाश्चत्वंधीभूतंचगोकुलम् ॥ चकारसद्योमायावीपुनस्तत्रपपातह ॥ ५ ॥ असुरो
पिहरिस्पर्शाज्जगामहरिमंदिरम् ॥ सुंदरंरथमारुह्यकृत्वाकर्मक्षयंस्वकम् ॥ ६ ॥ पांड्यदेशोद्भवोराजाशापाद्दुर्वाससोऽसु
रः ॥ श्रीकृष्णचरणस्पर्शाद्गोकुलंसजगामह ॥ ७ ॥ वात्यारूपेगतेगोपागोप्यश्चभयविव्हलाः ॥ नदृष्ट्वाबालकंतत्रश
यानंशयनेमुने ॥ ८ ॥ सर्वैनिजघ्नुःस्वंवक्षःस्थलंशोकाकुलाभयात् ॥ केचिन्मूर्छामवापुश्चरुरुदुश्चापिकेचन ॥ ९ ॥ अन्वे
षणंप्रकुर्वंतोददृशुर्बालकंव्रजे ॥ धूलिधूसरसर्वांगंपुष्पोद्यानांतरस्थितम् ॥ १० ॥ बात्यैकदेशेसरसस्तीरेनीरसमन्विते ॥

पश्यंतंगगनंशश्वद्रुदंतंभयकातरम् ॥ ११ ॥ गृहीत्वाबालकंनंदःकृत्वावक्षसिसत्वरम् ॥ दर्शंदर्शंमुखंतस्यरुरोदचशुचा न्वितः ॥ १२ ॥ यशोदारोहिणीशीघ्रंदृष्ट्वाबालंरुरोदच ॥ कृत्वावक्षसितद्वक्त्रंचुचुंबचमुहुर्मुहुः ॥ १३ ॥ मंगलंकारयामा सस्नापयामासबालकम् ॥ स्तनंददौयशोदाचप्रसन्नवदनेक्षणा ॥ १४ ॥ ॥ नारदउवाच ॥ ॥ कथंशशापदुर्वासाःपांड्यदे शोद्भवंनृपम् ॥ सुविचार्यवदब्रह्मन्नितिहासंपुरातनम् ॥ १५ ॥ ॥ श्रीनारायणउवाच ॥ ॥ पांड्यदेशाधिपोराजासहस्रा क्षःप्रतापवान् ॥ स्त्रीसहस्रंसमादायकामबाणप्रपीडितः ॥ १६ ॥ मनोहरेनिर्जनेचपर्वतेगंधमादने ॥ विजहारनदीतीरेपु ष्पोद्यानेमनोरमे ॥ १७ ॥ नानाप्रकारशृंगारंविपरीतादिकंनृपः ॥ नखदंतक्षतांगंचयोगींद्रोनृपतीश्वरः ॥ १८ ॥ कृत्वास्थ लविहारंचजलक्रीडांचकारह ॥ नार्योविवसनाःसर्वानग्नाश्चनृपयोषितः ॥ १९ ॥ विजन्हुश्चपुष्पभद्रानदीतीरेमनोहरे ॥ एतस्मिन्नंतरेतत्रसमायातोमहामुनिः ॥ २० ॥ शिष्यलक्षैःपरिवृतोगच्छन्वैशंकरंप्रति ॥ दृष्ट्वामुनिंमहामत्तोनोत्तस्थौनन नामह ॥ २१ ॥ वाचाहस्तेनराजाचसंभाषांनचकारह ॥ दृष्ट्वाचुकोपनृपतिंशशापस्फुरिताधरः ॥ २२ ॥ असुरोभवपापि ष्ठयोगाद्भ्रष्टोभुवंव्रज ॥ भारतेलक्षवर्षंचस्थातव्यंतेनराधम ॥ २३ ॥ ततोहरिपदस्पर्शाद्गोलोकंयास्यसिध्रुवम् ॥ स्थाने स्थानेहेमहिष्योजनिलभतभारते ॥ २४ राजेंद्रगेहेराजेंद्राद्भविष्यथमनोहराः ॥ इत्युक्तातुमुनींद्रस्तुजगामशंकरालय म् ॥ २५ ॥ हाहाशब्दंविचक्रुश्चशिष्यसंघाःकृपालयाः ॥ गतेमुनींद्रेराजेंद्रोरुरोदचसरित्तटे ॥ २६ ॥ रुरुदूरमणीयाश्चरम ण्योविरहातुराः ॥ हेनाथरमणश्रेष्ठेत्युच्चार्यचपुनःपुनः ॥ २७ ॥ त्वांविनावाक्यास्यामोवयंत्वंवाक्ययास्यसि ॥ वयंनो विहरिष्यामस्त्वयासार्द्धंसुनिर्जने ॥ २८ ॥ नकरिष्यसिराज्यंत्वंनयास्यामोगृहंवयम् ॥ शरच्चंद्रप्रभामुष्टंनद्रक्ष्यामोमुखं

तव ॥ २९ ॥ प्रसारिताभ्यांबाहुभ्यांनानयिष्यामस्त्वांपुरः ॥ इत्युक्त्वारुरुदुःसर्वाःपुरस्कृत्यनराधिपम् ॥ ३० ॥ मूर्च्छामवापुस्ताःसर्वाधृत्वाराज्ञःसरित्तटे ॥ राजाऽग्निकुंडमाधायनारीभिःसहनारद ॥ ३१ ॥ स्मृत्वाहरिपदांभोजंज्वलदग्निंविवेशह ॥ हाहाकारंसुराःसर्वेविचक्रुर्गगनेस्थिताः ॥ ३२ ॥ इत्यूचुर्मुनयश्चैवंदैवंचबलवत्तरम् ॥ सचराजातृणावर्तोजगामहरिमंदिरम् ॥ ३३ ॥ महिष्योभारतेवर्षेलेभिरेजन्मवांछितम् ॥ इत्येवंकथितंसर्वंहरेर्माहात्म्यमुत्तमम् ॥ ३४ ॥ मोक्षणंनृपतेश्चैवमुनींद्रशापहेतुकम् ॥ ३५ ॥ इतिश्रीब्रह्मवैवर्तेम०श्रीकृष्णज०तृणावर्तवधोनामैकादशोऽध्यायः ॥ ११ ॥ श्रीनारायणउवाच ॥ ॥ एकदामंदिरेनंदपत्नीसानंदपूर्वकम् ॥ कृत्वावक्षसिगोविंदंक्षुधितंचस्तनंददौ ॥ १ ॥ एतस्मिन्नंतरेगोप्यआजग्मुर्नंदमंदिरम् ॥ स्थविराश्चवयस्याश्चबालिकाबालकान्विताः ॥ २ ॥ अतृप्तंबालकंशीघ्रंसंन्यस्यशयनेसती ॥ प्रणनामसमुत्थायकर्मण्यौत्थानिकेमुदा ॥ ३ ॥ तैलसिंदूरतांबूलंददौताभ्योमुदान्विता ॥ मिष्टवस्तूनिवस्त्राणिभोजनानिचगोपिका ॥ ४ ॥ एतस्मिन्नंतरेकृष्णोरुरोदक्षुधितस्तदा ॥ प्रेरयित्वासचरणंमायेशोमाययाविभुः ॥ ५ ॥ पपातचरणंतस्यप्रवीणेशकटेमुने ॥ विश्वंभरपदाघातात्तच्चचूर्णबभूवह ॥ ६ ॥ बभंजशकटंपेतुर्भग्नकाष्ठानितत्रवै ॥ पपातदधिदुग्धंचनवनीतंघृतंमधु ॥ ७ ॥ दृष्ट्वाश्चर्यंगोपिकाश्चदुद्रुवुर्बालकंभयात् ॥ ददृशुर्भग्नशकटमिंधनाभ्यंतरेशिशुम् ॥ ८ ॥ भग्नभांडसमूहंचपतितंरसगोरसम् ॥ प्रेरयित्वातुकाष्ठानिजग्राहबालकंभिया ॥ ९ ॥ मायारक्षितसर्वांगंरुदितंक्षुधितंक्षुधा ॥ स्तनंददौयशोदातंरुरोदचभृशंशुचा ॥ १० ॥ पप्रच्छबालकान्गोपीबभंजशकटंकथम् ॥ किंचिद्वेतुंनपश्यामिसहसेतिकिमद्भुतम् ॥ ११ ॥ इत्यूचुर्बालकाःसर्वेगोपाःशृणुतमद्वचः ॥ श्रीकृष्णस्यपदाघाताद्बभंजशकटंध्रुवम् ॥ १२ ॥ श्रु

त्वातद्वचनंगोपागोप्यश्चजहसुर्मुदा ॥ नहिजग्मुःप्रतीतिंचमिथ्येत्यूचुर्व्रजेप्रजाः ॥ १३ ॥ शिशोःस्वस्त्ययनंकार्यंचक्रुर्ब्राह्मणपुंगवाः ॥ हस्तंदत्वाशिशोर्गात्रेपपाठकवचंद्विजः ॥ वदामितत्तेविप्रेंद्रकवचंसर्वलक्षणम् ॥ १४ ॥ यद्दत्तंमायया पूर्वंब्रह्मणेनाभिपंकजे ॥ निद्रितेजगतीनाथेजलेचजलशायिनि ॥ १५ ॥ भीतायस्तुतिकर्त्रेचमधुकैटभयोर्भयात् ॥ योगनिद्रोवाच ॥ दूरीभूतंकुरुभयंभयंकिंतेहरौस्थिते ॥ १६ ॥ स्थितायांमयिचब्रह्मन्सुखीतिष्ठजगत्पते ॥ श्रीहरिःपातुतेवक्रंमस्तकेमधुसूदनः ॥ १७ ॥ श्रीकृष्णश्चक्षुषीपातुनासिकांराधिकापतिः ॥ कर्णयुग्मंचकंठंचकपालंपातुमाधवः ॥ १८ ॥ कपोलंपातुगोविंदःकेशांश्चकेशवःस्वयं ॥ अधरोष्ठंहृषीकेशोदंतपङ्क्तिंगदाग्रजः ॥ १९ ॥ रासेश्वरश्चरसनांतालुकंवामनोविभुः ॥ वक्षःपातुमुकुंदश्चजठरंपातुदैत्यहा ॥ २० ॥ जनार्दनःपातुनाभिंपातुविष्णुश्चमेहनम् ॥ नितंबयुग्मंगुह्यंचपातुतेपुरुषोत्तमः ॥ २१ ॥ जानुयुग्मंजानकीशःपातुतेसर्वदाविभुः ॥ हस्तयुग्मंनृसिंहश्चपातुसर्वत्रसंकटे ॥ २२ ॥ पादयुग्मंवराहश्चपातुतेकमलोद्भवः ॥ ऊर्ध्वंनारायणःपातुत्वधस्तात्कमलापतिः ॥ २३ ॥ पूर्वस्यांपातुगोपालःपातुवन्हौदशास्यहा ॥ वनमालीपातुयाम्यांवैकुंठःपातुनैर्ऋतौ ॥ २४ ॥ वारुण्यांवासुदेवश्चसतोरक्षाकरःस्वयम् ॥ पातुतेसंततमजोवायव्यांविष्टरश्रवाः ॥ २५ ॥ उत्तरेचसदापातुतेजसाजलजासनः ॥ ईशान्यामीश्वरःपातुपातुसर्वत्रशत्रुजित् ॥ २६ ॥ जलेस्थलेचांतरिक्षेनिद्रायांपातुराघवः ॥ इत्येवंकथितंब्रह्मन्कवचंपरमाद्भुतम् ॥ २७ ॥ कृष्णेनकृपयादत्तंस्मृतेनैवपुरामया ॥ शुंभेनसहसंग्रामेनिर्लक्ष्येघोरदारुणे ॥ २८ ॥ गगनेस्थितयासद्यःप्राप्तिमात्रेणसोजितः ॥ कवचस्यप्रभावेणधरण्यांपतितोमृतः ॥ २९ ॥ पूर्ववर्षशतंखेचकृत्वायुद्धंभयावहम् ॥ मृतेशुंभेचगोविंदःकृपालुर्गगनस्थितः ॥ ३० ॥ मालांचकवचंदत्वागोलोकंसज

गामह ॥ कल्पांतरस्यवृत्तांतंकृपयाकथितंमुने ॥ ३१ ॥ अभ्यंतरभयंनास्तिकवचस्यप्रभावतः ॥ कोटिशःकोटिशोनष्टा मयादृष्टाचसर्वशः ॥ ३२ ॥ अहंचहरिणासार्द्धंकल्पेकल्पेस्थिरासदा ॥ इत्युक्त्वाकवचंदत्वासांतर्धानंचकारह ॥ ३३ ॥ निःशंकोनाभिकमलेतस्थौसकमलोद्भवः ॥ सुवर्णगुटिकायांचकृत्वेदंकवचंपरम् ॥ ३४ ॥ कंठेवादक्षिणेबाहौबध्नीयाद्यः सुधीःसदा ॥ विषाग्निजलशत्रुभ्योभयंतस्यनजायते ॥ ३५ ॥ जलेस्थलेचांतरिक्षेनिद्रायांरक्षतीश्वरः ॥ संग्रामेवज्रपा तेचविपत्तौप्राणसंकटे ॥ ३६ ॥ कवचस्मरणादेवसद्योनिःशंकतांव्रजेत् ॥ बध्वेदंकवचंकंठेशंकरस्त्रिपुरंपुरा ॥ ३७ ॥ ज घानलीलामात्रेणदुरंतमसुरेश्वरम् ॥ बध्वेदंकवचंकालीरक्तबीजंचखादसा ॥ ३८ ॥ सहस्रशीर्षाधृत्वेदंविश्वंधत्तेतिलं यथा ॥ आवांसनत्कुमारश्चधर्मसाक्षीचकर्मणाम् ॥ ३९ ॥ कवचस्यप्रभावेणसर्वत्रजयिनोवयम् ॥ तस्यनंदशिशोःकंठे चकारकवचंद्विजः ॥ ४० ॥ आत्मनःकवचंकंठेदधारचस्वयंहरिः ॥ प्रभावःकथितःसर्वःकवचस्यहरेस्तथा ॥ अनंतस्या च्युतस्यैवप्रभावमतुलंमुने ॥ ४१ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेशकटभंगकवचन्यासोनामद्वाद शोऽध्यायः ॥ १२ ॥ ॥ श्रीनारायणउवाच ॥ ॥ अपरंकृष्णमाहात्म्यंशृणुकिंचिन्महामुने ॥ विघ्ननिघ्नंपापहरंमहापु ण्यकरंपरम् ॥ १ ॥ एकदानंदपत्नीचकृत्वाकृष्णंस्ववक्षसि ॥ स्वर्णसिंहासनस्थाचक्षुधितंतंस्तनंददौ ॥ २ ॥ एतस्मिन्नंत रेतत्रविप्रेंद्रःकःसमागतः ॥ वृतःशिष्यसमूहैश्चप्रज्वलन्ब्रह्मतेजसा ॥ ३ प्रजपन्परमंब्रह्मशुद्धस्फटिकमालया ॥ दंडीछ त्रीशुक्लवासादंतपंक्तिविराजितः ॥ ४ ॥ ज्योतिर्ग्रंथोमूर्तिमांश्चवेदवेदांगपारगः ॥ परिबिभ्रज्जटाजालंतप्तकांचनसन्निभम् ॥ ५ ॥ शरत्पार्वणचंद्रास्योगौरांगःपद्मलोचनः ॥ योगींद्रोधूर्जटेःशिष्यःशुद्धभक्तोगदाभृतः ॥ ६ ॥ व्याख्यामुद्राकरःश्री

मान्शिष्यानध्यापयन्मुदा ॥ वेदव्याख्यांकतिविधांप्रकुर्वन्निवलीलया ॥ ७॥ एकीभूयचतुर्वेदतेजसामूर्तिमानिव ॥ सा
क्षात्सरस्वतीकंठःसिद्धांतैकविशारदः ॥ ८ ॥ ध्यानैकनिष्ठःश्रीकृष्णपादांभोजेदिवानिशम् ॥ जीवन्मुक्तोहिसिद्धेशःसर्वज्ञः
सर्वदर्शनः ॥ ९ ॥ तंदृष्ट्वासासमुत्तस्थौयशोदाप्रणनामच ॥ पाद्यंगांमधुपर्कंचस्वर्णसिंहासनंददौ ॥ १० ॥ बालकंवंदयामास
मुनींद्रंसस्मितंमुदा ॥ मुनिश्चमनसाचक्रेप्रणामशतकंहरिम् ॥ ११ ॥ आशिषंप्रददौप्रीत्यावेदमंत्रोपयोगिकम् ॥ प्रणनाम
चशिष्यांश्चतेतांयुयुजुराशिषम् ॥ १२ ॥ शिष्यान्पाद्यादिकंभक्त्याप्रददौचपृथक्पृथक् ॥ सशिष्यांघ्रीचप्रक्षाल्यसमुवा
ससुखासने ॥ १३ ॥ समुद्यतासाप्रष्टुंचपुटांजलियुतासती ॥ स्वक्रोडेबालकंकृत्वाभक्तिनम्रात्मकंधरा ॥ १४ ॥ स्वात्मारामंमं
गलंचप्रष्टुंयद्यपिनक्षमा ॥ तथापिभवतोनामशिवंपृच्छामिसांप्रतम् ॥ १५ ॥ अबलाबुद्धिहीनायादोषंक्षंतुंसदार्हसि ॥ मूढस्य
सततंदोषंक्षमांकुर्वंतिसाधवः ॥ १६ ॥ अंगिरावाथवात्रिर्वामरीचिर्गौतमोऽथवा ॥ क्रतुःकिंवाप्रचेतावापुलस्त्यःपुलहोथवा
॥ १७ ॥ दुर्वासाःकर्दमस्त्वंवावसिष्ठोगर्गएवच ॥ जैगीषव्योदेवलोवाकपिलोवास्वयंविभुः ॥ १८ ॥ सनत्कुमारःसनकःसनं
दोवासनातनः ॥ वोढुःपंचशिखोवात्वमासुरिःसौभरिःकिमु ॥ १९ ॥ विश्वामित्रोथवाल्मीकोवामदेवोऽथकश्यपः ॥ संवर्तः
किमुतथ्योवांकिकचोवाबृहस्पतिः ॥ २० ॥ भृगुःशुक्रश्चच्यवनोनरनारायणोथवा ॥ आस्तिकोवाजरत्कारुःऋष्यश्रृंगोविभां
डकः ॥ २१ ॥ पौलस्त्यस्त्वमगस्त्योवाशरद्वान्गिरिरेवच ॥ शमीकोरिष्टनेमिश्चमांडव्यःपैलएवच ॥ २२ ॥ पाणिनिर्वाकणा
दोवाशाकल्यःशाकटायनः ॥ अष्टावक्रोभागुरिर्वासुमंतुर्वत्सएवच ॥ २३ ॥ जाबालोयाज्ञवल्क्यश्चवैशंपायनएवच ॥ अति
हंसीपिप्पदोमैत्रेयःकरुषस्तथा ॥ २४ ॥ उपमन्युर्गौरमुखोऽरुणिरौर्वोथकक्षिवान् ॥ भरद्वाजोवेदशिराःशंकुकर्णोथशौन

कः ॥ २५ ॥ एतेषांपुण्यश्लोकानांकोभवान्वदमेप्रभो ॥ प्रत्युत्तरार्हानाहंचेत्तथापिवक्तुमर्हसि ॥ २६ ॥ किंकरःकिंकरीवा
पिसमर्थाप्रष्टुमीश्वरम् ॥ योयस्यसेवानियतःसकंपृच्छतितंविना ॥ २७ ॥ धन्याहंकृतकृत्याहंसफलंजीवितंमम ॥ त्वत्पा
दाब्जरजःस्पर्शाज्जन्मकोट्यंहसांक्षयः ॥ २८ ॥ त्वत्पादोदकसंस्पर्शात्सद्यःपूतावसुंधरा ॥ तवागमनमात्रेणतीर्थीभूतोम
माश्रमः ॥ २९ ॥ येयेश्रुत्वाश्रुतौब्रह्मन्श्रुतिसारामहाजनाः ॥ तेषामेकोमयादृष्टःपूर्वपुण्यफलोदयात् ॥ ३० ॥ शिष्यावे
दामूर्तिमंतोग्रीष्ममध्यान्हभास्कराः ॥ गोकुलंमत्कुलंसर्वंपुनंतिपादरेणुना ॥ ३१ ॥ आशिषंकर्तुमर्हंतिप्रसन्नमनसाशिशु
म् ॥ पूर्णस्वस्त्ययनंसद्योविप्राशीर्वचनंध्रुवम् ॥ ३२ ॥ इत्येवमुक्त्वानंदस्त्रीभक्त्यातस्थौमुनेःपुरः ॥ नरंप्रस्थापयामास
नंदमानयितुंसती ॥ ३३ ॥ यशोदावचनंश्रुत्वाजहासमुनिपुंगवः ॥ जहसुःशिष्यसंघाश्चभासयंतोदिशोदश ॥ ३४ ॥ हि
तंतथ्यंनीतियुक्तंमहत्पुण्यकरंपरम् ॥ तामुवाचमुदायुक्तःशुद्धबुद्धिर्महामुनिः ॥ ३५ ॥ गर्गउवाच ॥ सुधामयंतेवचनंलौ
किकंचकुलोचितम् ॥ यस्ययत्रकुलेजन्मसएवतादृशोभवेत् ॥ ३६ ॥ सर्वेषांगोपवल्लानांगिरिभानुश्चभास्करः ॥ पत्नी
पद्मासमातस्यनाम्नापद्मावतीसती ॥ ३७ ॥ तस्याःकन्यायशोदात्वंयशोवर्द्धनकारिणी ॥ बल्लवानांचप्रवरोलब्धोनंदश्च
वल्लभः ॥ ३८ ॥ नंदोयस्त्वंचयाभद्रेबालोयोयेनवागतः ॥ जानामिनिर्जनेसर्वंवक्ष्यामिनंदसन्निधिम् ॥ ३९ ॥ गर्गोहंय
दुवंशानांचिरकालंपुरोहितः ॥ प्रस्थापितोहंवसुनानान्यसाध्येचकर्मणि ॥ ४० ॥ एतस्मिन्नंतरेनंदःश्रुतमात्रंजगामह ॥
ननामदंडवद्भूमौमूर्ध्नातंमुनिपुंगवम् ॥ ४१ ॥ शिष्यान्ननाममूर्ध्नाचतेतंयुयुजुराशिषम् ॥ समुत्थायासनात्तूर्णंयशोदानं
दएवच ॥ ४२ ॥ गृहीत्वाभ्यंतरंरम्यंजगामविदुषांवरः ॥ गर्गोनंदोयशोदाचसपुत्रासमुदान्विता ॥ वाक्यंगर्गस्तदोवा

चनिगूढंनिर्जनेमुने ॥ ४३ ॥ ॥ गर्गउवाच ॥ ॥ अयिनंदप्रवक्ष्यामिवचनंतेसुखावहम् ॥ प्रस्थापितोहंवसुनायेनत
त्श्रूयतामिति ॥ ४४ ॥ वसुनासूतिकागारेशिशुःप्रत्यर्पणंकृतः ॥ पुत्रोऽयंवसुदेवस्यज्येष्ठस्यतस्यचध्रुवम् ॥ ४५ ॥ क
न्यातेतेनयानीतामथुरांकंसभीरुणा ॥ अस्यान्नप्राशनायाहंनामानुकरणायच ॥ ४६ ॥ गूढेनप्रेषितस्तेनतस्योद्योगंकु
रुद्विज ॥ पूर्णब्रह्मस्वरूपोयंशिशुस्तेमाययामहीम् ॥ ४७ ॥ आगत्यभारहरणंकर्ताधात्राचसेवितः ॥ गोलोकनाथोभग
वान्श्रीकृष्णोराधिकापतिः ॥ ४८ ॥ नारायणोयोवैकुंठेकमलाकांतएवच ॥ श्वेतद्वीपनिवासीयःपिताविष्णुश्चसोप्यजः ॥
॥ ४९ ॥ कपिलोन्येतदंशाश्चनरनारायणावृषी ॥ सर्वेषांतेजसांराशिर्मूर्तिमानागतःकिमु ॥ ५० ॥ तंवसुंदर्शयित्वाचशि
शुरूपोबभूवह ॥ सांप्रतंसूतिकागारादाजगामतवालयम् ॥ ५१ ॥ अयोनिसंभवश्चायमाविर्भूतोमहीतले ॥ वायुपूर्णं
मातृगर्भंकृत्वाचमाययाहरिः ॥ ५२ ॥ आविर्भूयवसुंमूर्तिंदर्शयित्वाजगामह ॥ युगेयुगेवर्णभेदोनामभेदोस्यबल्लुव ॥
॥ ५३ ॥ शुक्लःपीतस्तथारक्तइदानींकृष्णतांगतः ॥ शुक्लवर्णःसत्ययुगेसुतीव्रतेजसावृतः ॥ ५४ ॥ त्रेतायांरक्तवर्णोयंपीतो
यंद्वापरेविभुः ॥ कृष्णवर्णःकलौश्रीमान्तेजसांराशिरेवच ॥ ५५ ॥ परिपूर्णतमंब्रह्मतेनकृष्णइतिस्मृतः ॥ ब्राह्मणोवाच
कःकोयमृकारोऽनंतवाचकः ॥ ५६ ॥ शिवस्यवाचकःषश्चनकारोधर्मएवच ॥ अकारविष्णुवचनःश्वेतद्वीपनिवासिनः ॥ ५७
नरनारायणार्थस्यविसर्गोवाचकःस्मृतः ॥ सर्वेषांतेजसांराशिःसर्वमूर्तिःस्वरूपकः ॥ ५८ ॥ सर्वाधारःसर्वबीजस्तेनकृष्ण
इतिस्मृतः ॥ कर्मनिर्मूलवचनःकृषिर्नोदास्यवाचकः ॥ ५९ ॥ अकारोदातृवचनस्तेनकृष्णइतिस्मृतः ॥ कृषिर्निश्चेष्टवच
नोनकारोभक्तिवाचकः ॥ ६० ॥ अकारःप्राप्तिवचनस्तेनकृष्णइतिस्मृतः ॥ कृषिर्निर्वाणवचनोनकारोमोक्षवाचकः ॥ ६१ ॥

अकारोदातृवचनस्तेनकृष्णइतिस्मृतः ॥ नाम्नाभगवतोनंदकोटीनांस्मरणेनयत् ॥ ६२ ॥ तत्फललभतेनूनंकृष्णेतिस्मरणे
नरः ॥ यद्विधंस्मरणात्पुण्यंवचनाच्छ्रवणात्तथा ॥ ६३ ॥ कोटिजन्मांहसोनाशोभवेद्यत्स्मरणादिकात् ॥ विष्णोर्नाम्नांच
सर्वेषांसारात्सारंपरात्परम् ॥ ६४ ॥ कृष्णेतिसुंदरंनाममंगलंभक्तिदायकम् ॥ ककारोच्चारणाद्भक्तःकैवल्यंमृत्युजन्महं ॥
॥ ६५ ॥ ऋकाराद्दास्यमतुलंषकाराद्भक्तिमीप्सिताम् ॥ नकारात्सहवासंचतत्समंकालमेवच ॥ ६६ ॥ तत्सारूप्यंविसर्गा
च्चलभतेनात्रसंशयः ॥ ककारोच्चारणादेववेपंतेयमकिंकराः ॥ ६७ ॥ ऋकारोक्तेर्नतिष्ठंतिषकारात्पातकानिच ॥ नकारोच्चा
रणाद्रोगाअकारान्मृत्युरेवच ॥ ६८ ॥ ध्रुवंसर्वेपलायंतेनामोच्चारणभीरवः ॥ स्मृत्युक्तिश्रवणोद्योगात्कृष्णनाम्नोव्रजे
श्वर ॥ ६९ ॥ रथंगृहीत्वाधावंतिगोलोकात्कृष्णकिंकराः ॥ पृथिव्यारजसःसंख्यांकर्तुंशक्ताविपश्चितः ॥ ७० ॥ नाम्नःप्र
भावसंख्यानंसंतोवक्तुंनचक्षमाः ॥ पुराशंकरवक्त्रेणनाम्नोऽस्यमहिमाश्रुतः ॥ ७१ ॥ गुणनामप्रभावंचकिंचिज्जानातिमद्गु
रुः ॥ ब्रह्मानंतश्चधर्मश्चसुरर्षिर्मनुमानवाः ॥ ७२ ॥ वेदाःसंतोनजानंतिमहिम्नःषोडशींकलाम् ॥ इत्येवंकथितंनंदमहिमा
चसुतस्यच ॥ ७३ ॥ यथामतितथाज्ञानंगुरुवक्त्राद्यथाश्रुतम् ॥ कृष्णःपीतांबरःकंसध्वंसीचविष्टरश्रवाः ॥ ७४ ॥ देवकीनं
दनःश्रीशोयशोदानंदनोहरिः ॥ सनातनोऽच्युतोऽनंतःसर्वेशःसर्वरूपधृक् ॥ ७५ ॥ सर्वाधारःसर्वगतिःसर्वकारणकारणम् ॥
राधाबंधूराधिकात्माराधिकाजीवनःस्वयम् ॥ ७६ ॥ राधाप्राणोराधिकेशोराधिकारमणःस्वयम् ॥ राधिकासहचारीच
राधामानसपूरणः ॥ ७७ ॥ राधाधनोराधिकांगोराधिकासक्तमानसः ॥ राधिकाचित्तचोरश्चराधाप्राणाधिकःप्रभुः ॥ ७८ ॥
परिपूर्णतमंब्रह्मगोविंदोगरुडध्वजः ॥ नामान्येतानिकृष्णस्यश्रुतानिमन्मुखात्धृदि ॥ ७९ ॥ जन्ममृत्युहराण्येवरक्ष

नंदशुभेक्षण ॥ कृतंनिरूपणंनाम्नांकनिष्ठस्ययथाश्रुतम् ॥ ८० ॥ ज्येष्ठस्यहलिनोनाम्नःसंकेतंश्टणुमन्मुखात् ॥ गर्भसंक
र्षणादेवनाम्नासंकर्षणःस्मृतः ॥ ८१ ॥ नास्त्यंतोस्यैववेदेषुतेनानंतइतिस्मृतः ॥ बलदेवोबलोद्रेकाद्बलीचहलधारणात् ॥
॥ ८२ ॥ शितिवासोनीलवासान्मुसलीमुसलायुधात् ॥ रेवत्यासहसंभोगाद्रेवतीरमणःस्वयम् ॥ ८३ ॥ रोहिणीगर्भवा
सात्तुरौहिणेयोमहामतिः ॥ इत्येवंज्येष्ठपुत्रस्यश्रुतंनामनिवेदितम् ॥ ८४ ॥ यास्याम्यहंगृहंनंदसुखंतिष्ठस्वमंदिरे ॥ ब्रा
ह्मणस्यवचःश्रुत्वानंदस्तब्धोबभूवह ॥ ८५ ॥ निश्चेष्टानंदपत्नीचजहासबालकःस्वयम् ॥ प्रणम्योवाचनंदस्तंवाक्यंवि
नयपूर्वकम् ॥ ८६ ॥ पुटांजलियुतोभूत्वाभक्तिनम्रात्मकंधरः ॥ ॥ नंदउवाच ॥ ॥ गतश्चेत्त्वंतदाकर्मकरिष्यत्येवको
महान् ॥ ८७ ॥ स्वयंशुभेक्षणंकृत्वाकुरुनाम्नान्नप्राशनम् ॥ यन्नामौघश्चकथितोराधाप्राणादिकोदश ॥ ८८ ॥ तस्यापि
कावाराधेतिकन्यकाकस्यचध्रुवम् ॥ नंदस्यवचनंश्रुत्वाजहासमुनिपुंगवः ॥ ८९ ॥ निगूढंपरमंतत्त्वंरहस्यंकथयामिते ॥
गर्गउवाच ॥ ॥ श्टणुनंदप्रवक्ष्यामिइतिहासंपुरातनम् ॥ ९० ॥ पुरागोलोकवृत्तांतंश्रुतंशंकरवक्रतः ॥ श्रीदाम्नोराधया
सार्द्धंबभूवकलहोमहान् ॥ ९१ ॥ श्रीदामशापाद्दैवेनगोपीराधाचगोकुले ॥ वृषभानुसुतासाचमातातस्याःकलावती ॥ ९२ ॥
कृष्णस्यार्द्धांगसंभूतानाथस्यसदृशीसती ॥ गोलोकवासिनीसेयमत्रकृष्णाज्ञयाधुना ॥ ९३ ॥ अयोनिसंभवादेवीमूल
प्रकृतिरीश्वरी ॥ मातुर्गर्भंवायुपूर्णंकृत्वाचमाययासती ॥ ९४ ॥ वायुनिःसरणेकालेधृत्वाचशिशुविग्रहम् ॥ आविर्ब
भूवमायेयंपृथ्व्यांकृष्णोपदेशतः ॥ ९५ ॥ वर्धतेसाव्रजेराधाशुक्लेचंद्रकलायथा ॥ श्रीकृष्णतेजसोर्द्धेनसाचमूर्तिमतीसती
॥ ९६ ॥ एकामूर्तिर्द्विधाभूताभेदोवेदेनिरूपितः ॥ इयंस्त्रीसापुमान्किंवासावाकांतापुमानयम् ॥ ९७ ॥ द्वेरूपेतेजसातुल्ये

रूपेणचगुणेनच ॥ पराक्रमेणबुद्ध्यावाज्ञानेनसंपदापिच ॥ ९८ ॥ पुरतोगमनेनैवाकिंतुसावयसाधिका ॥ ध्यायतेतामयं
शश्वदिमंसास्मरतिप्रियम् ॥ ९९ ॥ रचितासास्यप्राणैश्चतत्प्राणैर्मूर्तिमानयम् ॥ अस्यराधानुसारेणगोकुलागमनंपरम्
॥ १०० ॥ स्वीकारंसार्थकंकर्तुंगोलोकेयत्कृतंपुरा ॥ कंसभीतिच्छलेनैवगोकुलागमनंहरेः ॥ १ ॥ प्रतिज्ञापालनार्थायभये
शस्यभयंकुतः ॥ राधाशब्दस्यव्युत्पत्तिःसामवेदेनिरूपिता ॥ २ ॥ नारायणस्तामुवाचब्रह्माणंनाभिपंकजे ॥ ब्रह्मातांकथ
यामासब्रह्मलोकेचशंकरम् ॥ ३ ॥ पुराकैलासशिखरेमामुवाचमहेश्वरः ॥ देवानांदुर्लभांनंदनिशामयवदामिते ॥ ४ ॥
सुरासुरमुनींद्राणांवांछितांमुक्तिदांपराम् ॥ रेफोहिकोटिजन्माघंकर्मभोगंशुभाशुभम् ॥ ५ ॥ आकारोगर्भवासंचमृत्युंच
रोगमुत्सृजेत् ॥ धकारआयुषोहानिमाकारोभवबंधनम् ॥ ६ ॥ श्रवणस्मरणोक्तिभ्यःप्रणश्यतिनसंशयः ॥ रेफोहिनिश्च
लांभक्तिदास्यंकृष्णपदांबुजे ॥ ७ ॥ सर्वेप्सितंसदानंदंसर्वसिद्धौघमीश्वरम् ॥ धकारःसहवासंचतत्तुल्यकालमेवच ॥ ८ ॥
ददातिसार्ष्टिसारूप्यंतत्वज्ञानंहरेःसमम् ॥ आकारस्तेजसांराशिंदानशक्तिहरौयथा ॥ ९ ॥ योगशक्तिंयोगमतिंसर्वकालंहरि
स्मृतिम् ॥ श्रुत्युक्तिस्मरणाद्योगान्मोहजालंचकिल्बिषम् ॥ १० ॥ रोगशोकमृत्युयमावेपंतेनात्रसंशयः ॥ राधामाधवयोः
किंचिद्व्याख्यानंचयतःश्रुतम् ॥ ११ ॥ तदुक्तंचयथाज्ञानंसाकल्यंवक्तुमक्षमः ॥ आराद्वृंदावनेनंदविवाहोभवितानयोः ॥ १२
पुरोहितोजगद्धाताकृत्वाग्निसाक्षिणंमुदा ॥ कुबेरपुत्रमोक्षंचगव्यस्यात्हृत्यभक्षणं ॥ १३ ॥ हिंसनंधेनुकस्यैवकाननेतालभो
जनं ॥ बककेशिप्रलंबानांहिंसनंचाथलीलया ॥ १४ ॥ मोक्षणंद्विजपत्नीनांमिष्टान्नपानभोजनं ॥ भंजनंशक्रयागस्यशक्रा
द्गोकुलरक्षणम् ॥ १५ ॥ गोपीनांवस्त्रहरणंव्रतसंपादनंतथा ॥ ताभ्यःपुनर्वस्त्रदानंवरदानंयथेप्सितम् ॥ १६ ॥ चेतसांहर

णंतासामयंवश्याःकरिष्यति ॥ रासोत्सवंमहारम्यंसर्वैषांहर्षवर्द्धनम् ॥ १७ ॥ पूर्णचंद्रोदयेनक्तंवसतेरासमंडले ॥ गो
पीनांनवसंभोगात्कृत्वापूर्णमनोरथम् ॥ १८ ॥ ताभिःसहजलक्रीडांकरिष्यतिकुतूहलात् ॥ विच्छेदोस्यवर्षशतंश्रीदाम
शापहेतुकम् ॥ १९ ॥ गोपालैर्गोपिकाभिश्चभविताराधयासह ॥ मथुरागमनंतत्रगोपीनांशोकवर्द्धनम् ॥१२०॥ पुनःप्रबो
धनंतासांदानमाध्यात्मिकस्यच ॥ स्यंदनाक्रूरयोरक्षांसघस्ताभ्यांकरिष्यति ॥२१॥ रथमारोहणंकृत्वामथुरागमनंपुनः
॥ पितृभ्रातृव्रजैःसार्द्धंविलंघ्ययमुनांव्रजे ॥ २२ ॥ अक्रूरायज्ञानदानंदर्शयित्वास्वकंजले ॥ कौतुकेनचसायान्हेनगरात्स
र्वदर्शनम् ॥ २३ ॥ मालाकारतंतुवायकुब्जानांबंधमोक्षणम् ॥ धनुर्गर्भंशंकरस्ययागस्थानप्रदर्शनम् ॥ २४ ॥ हिंसनंगज
मल्लानांदर्शनंनृपेतःपुरः ॥ कंसस्यहिंसनंसद्यःपित्रोर्निगडमोक्षणम् ॥ २५ ॥ प्रबोधनंचयुष्माकमुग्रसेनाभिषेचनम् ॥
तस्यतस्यवधूनांचज्ञानाच्छोकापनोदनम् ॥ २६ ॥ भ्रातुःस्वस्योपनयनंविद्यादानंगुरोर्मुखात् ॥ गुरुपुत्रप्रदानंचपुनरा
गमनंगृहम् ॥ २७ ॥ छलनंनृपसैन्यानांयवनस्यदुरात्मनः ॥ निर्माणंद्वारकायाश्चमुचुकुंदस्यमोक्षणम् ॥ २८ ॥ द्वारका
गमनंचैवयादवैःसहकौतुकात् ॥ स्त्रीसंघानांविरहणंताभिःसार्द्धंचक्रीडनम् ॥ २९ ॥ सौभाग्यवर्धनंतासांपुत्रपौत्रादिक
स्यच ॥ मणिसंबंधिनोमिथ्याकलंकस्यचमोक्षणम् ॥ १३० ॥ साहाय्यंपांडवानांचभारावतरणादिकम् ॥ निष्पन्नंरा
जसूयस्यधर्मपुत्रस्यलीलया ॥ ३१ ॥ पारिजातस्यहरणंशक्राहंकारमर्दनम् ॥ व्रतपूर्णंचसत्यायाबाणस्यभुजकृंतन
म् ॥ ३२ ॥ मर्दनंशिवसैन्यानांहरस्यजृंभणंपरम् ॥ हरणंबाणपुत्र्याश्चैवानिरुद्धस्यमोक्षणम् ॥ ३३ ॥ वाराणस्याश्चदह
नंविप्रदारिद्र्यभंजनम् ॥ विप्रपुत्रप्रदानंचदुष्टानांदमनादिकम् ॥ ३४ ॥ तीर्थयात्राप्रसंगेनयुष्माभिःसहदर्शनम् ॥ कृ

त्वाचराधयासार्धंव्रजमागमितापुनः ॥ ३५ ॥ प्रस्थापयित्वाद्वारांचपरंनारायणांशकम् ॥ सर्वंनिष्पादनंकृत्वागोलोकं
राधयासह ॥ ३६ ॥ गमिष्यत्येवगोलोकंनाथोयंजगतांपतिः ॥ नारायणश्चवैकुंठंगमितास्मत्वयासह ॥ ३७ ॥ धर्मग्रहं
ऋषीद्वौचविष्णुःक्षीरोदमेवच ॥ इत्येवंकथितंनंदभविष्यंवेदनिर्णयम् ॥ ३८ ॥ श्रूयतांसांप्रतंकर्मयदर्थंगमनंमम ॥ माघ
शुक्लचतुर्दश्यांकुरुकर्मशुभेक्षणे ॥ ३९ ॥ गुरुवारेचरेवत्यांविशुद्धेचंद्रतारके ॥ चंद्रस्थेमीनलग्नेचलग्नेश पूर्णदर्शने ॥ ४०
वणिजेकरणोत्कृष्टेशुभयोगेमनोहरे ॥ सुदुर्लभेदिनेतत्रसर्वोत्कृष्टेपयोगिके ॥ ४१ ॥ आलोच्यपंडितैःसार्द्धंकुरुकर्मंमु
दान्वितः ॥ इत्युक्त्वाबहिरागत्यसमुवासमुनीश्वरः ॥ ४२ ॥ हृष्टोनंदोयशोदाचकर्मोद्योगंचकारह ॥ एतस्मिन्नंतरेद्रष्टुंग
र्गंगोपाश्चगोपिकाः ॥ ४३ ॥ बालकाबालिकाश्चैवआजग्मुर्नंदमंदिरम् ॥ ददृशुस्तेमुनिश्रेष्ठंग्रीष्ममध्यान्हभास्करम् ॥ ४४
शिष्यसंघैःपरिवृतंज्वलंतंब्रह्मतेजसा ॥ गूढयोगंप्रवोचंतंसिद्धायपृच्छतेमुदा ॥ ४५ ॥ पश्यंतंसस्मितंनंदभवनानांपरि
च्छदम् ॥ स्वर्णसिंहासनस्थंचयोगमुद्राधरंवरम् ॥ ४६ ॥ भूतंभव्यंभविष्यंचपश्यंतंज्ञानचक्षुषा ॥ हृदीश्वरंप्रपश्यंतंसि
द्धंमंत्रप्रभावतः ॥ ४७ ॥ बहिर्यशोदाक्रोडस्थंतादृशंसस्मितंशिशुम् ॥ महेशदत्तध्यानेनयद्रूपंचनिरूपितम् ॥ ४८ ॥ तंदृ
ष्ट्वापरमप्रीत्यापूर्णभूतमनोरथम् ॥ साश्रुनेत्रंपुलकितंनिमग्नंभक्तिसागरे ॥ ४९ ॥ हृदिपूजांप्रणामंचकुर्वंतंयोगचर्य
या ॥ मूर्ध्नांप्रणेमुस्तेतंचसचतानाशिषंददौ ॥ १५० ॥ आसनस्थोमुनिस्तस्थौतेजग्मुःस्वालयंमुदा ॥ नंदःस्वानंदयुक्तश्च
बंधून्मंगलपत्रिकाः ॥ ५१ ॥ प्रस्थापयामासशीघ्रमाराद्दूरस्थितान्मुदा ॥ दधिकुल्यांदुग्धकुल्यां घृतकुल्यांप्रपूरिताम् ॥
॥ ५२ ॥ गुडकुल्यांतैलल्यांमधुकुल्यांचविस्तृताम् ॥ नवनीतकुल्यांपूर्णांचतक्रकुल्यांयदृच्छया ॥ १५३ ॥ शर्करोदककु

ल्यांचपरिपूर्णांचलीलया ॥ तंडुलानांचशालीनामुच्चैश्चशतपर्वतान् ॥ ५४ ॥ पृथुकानांशैलशतंलवणानांचसप्तच ॥ सप्त
शैलान्शर्कराणांलड्डूकानांचसप्तच ॥ ५५ ॥ परिपक्कफलानांचतत्रषोडशपर्वतान् ॥ यवगोधूमचूर्णानांपक्कलड्डुकपिंडका
न् ॥ ५६ ॥ मोदकानांचशैलंचस्वस्तिकानांचपर्वतान् ॥ कपर्दकानामत्युच्चैःशैलान्सप्तचनारद ॥ ५७ ॥ कर्पूरादिकयुक्तानां
तांबूलानांचमंदिरं ॥ विस्तृतंद्वारहीनंचवासितोदकसंयुतं ॥ ५८ ॥ चंदनागुरुकस्तूरीकुंकुमेनसमन्वितं ॥ नानाविधानिर
त्नानिस्वर्णानिविविधानिच ॥ ५९ ॥ मुक्ताफलानिरम्याणिप्रवालानिमुदान्वितः ॥ नानाविधानिचारूणिवासांसिभूषणा
निच ॥ ६० ॥ पुत्रान्नप्राशनेनंदःकारयामासकौतुकात् ॥ संस्कारयुक्तंरुचिरंचंदनद्रवचर्चितं ॥ ६१ ॥ प्रांगणंकदलीस्तंभैरसा
लनवपल्लवैः ॥ ग्रथितैःसूक्ष्मवस्त्रेणवेष्टयामासकौतुकात् ॥ ६२ ॥ युक्तंमंगलकुंभैश्चफलपल्लवसंयुतैः ॥ चंदनागुरुकस्तूरीपु
ष्पमालाविराजितैः ॥ ६३ ॥ माल्यानांवरवस्त्राणांराशिभिश्चविराजितं ॥ गवांचमधुपर्काणामासनानांचनारद ॥ ६४ ॥ फला
नांजलकुंभानांसमूहैश्चसमन्वितं ॥ नानाप्रकारैर्वाद्यैश्चदुर्लभैःसुमनोहरैः ॥ ६५ ॥ ढक्कानांदुंदुभीनांचपटहानांतथैवच ॥
मृदंगमुरजादीनामानकानांसमूहकैः ॥ ६६ ॥ वंशीसन्नहनीकांस्यशरयंत्रैश्चशब्दितं ॥ विद्याधरीणांनृत्येनभ्रूंगिमाभ्रम
णेनच ॥ ६७ ॥ गंधर्वनायकानांचसंगीतैर्मूर्च्छनायुतैः ॥ स्वर्णसिंहासनानांचरथानांनिःस्वनैर्युतं ॥ ६८ ॥ एतस्मिन्नंतरेनं
दमुवाचवाचकोमुदा ॥ आजग्मुर्बल्लुवेंद्राश्चबांधवाबल्लुवास्तथा ॥ ६९ ॥ अश्वरथाश्चगजस्थाश्चरथस्थाश्चेतिसत्वरम् ॥
आजग्मूराजपुत्राश्चरत्नालंकारभूषिताः ॥ १७० ॥ आगतोगिरिभानुश्चसस्त्रीकश्चसकिंकरः ॥ रथानांचचतुर्लक्षंगजानां
चतथैवच ॥ ७१ ॥ तुरंगमाणांकोटिश्चशिबिकानांतथैवच ॥ ऋषींद्राणांमुनींद्राणांविप्राणांचविपश्चिताम् ॥ ७२ ॥ बंदि

नांभिक्षुकाणांचैसमूहैश्चसमीपतः ॥ गोपानांगोपिकानांचसंख्यांकर्तुंचकःक्षमः ॥ ७३ ॥ पश्यागत्यबहिर्भूयेत्युवाच
प्रांगणेस्थितः ॥ श्रुत्वैवंतानुपव्रज्यसमानीयव्रजेश्वरः ॥ ७४ ॥ प्रांगणेवासयामासपूजयामाससत्वरम् ॥ ऋष्यादिक
समूहंचप्रणम्यशिरसाभुवि ॥ पाद्यादिकंचतेभ्यश्चप्रददौसुसमाहितः ॥ ७५ ॥ वस्तुभिर्बंधुभिःपूर्णंबभूवनंदगोकुलम् ॥
नकोपिकस्यशब्दंकंश्रोतुंशक्तश्चतत्रवै ॥ ७६ ॥ त्रिमुहूर्तंकुबेरश्चश्रीकृष्णप्रीतयेमुदा ॥ चकारस्वर्णवृष्ट्याचपरिपूर्णंच
गोकुलम् ॥ ७७ ॥ कौतुकापन्हवंचक्रुर्बंधुवर्गाश्चव्रीडया ॥ आनम्रकंधराःसर्वेदृष्ट्वानंदस्यसंपदम् ॥७८॥ नंदःकृतान्हि
कःपूतोधृत्वाधौतेयवाससी ॥ चंदनागुरुकस्तूरीकुंकुमेनैवभूषितः ॥ ७९ ॥ उवासपादौप्रक्षाल्यस्वर्णपीठेमनोहरे ॥ गर्ग
स्यचमुनींद्राणांगृहीत्वाज्ञांव्रजेश्वरः ॥ १८० ॥ संस्मृत्यविष्णुमाचांतःस्वस्तिवाचनपूर्वकम् ॥ कृत्वाकर्मंचवेदोक्तंभो
जयामासबालकम् ॥ ८१ ॥ गर्गवाक्यानुसारेणबालकस्यमुदान्वितः ॥ कृष्णेतिमंगलंनामररक्षचशुभेक्षणे ॥ ८२ ॥ स
घृतंभोजयित्वाचकृत्वानामजगत्पतेः ॥ वाद्यानिवादयामासकारयामासमंगलम् ॥ ८३ ॥ नानाविधानिस्वर्णानिधना
निविविधानिच ॥ भक्ष्यद्रव्याणिवासांसिब्राह्मणेभ्योददौमुदा ॥ ८४ ॥ बंदिभ्योभिक्षुकेभ्यश्चसुवर्णंविपुलंददौ ॥ भा
राक्रांताश्चतेसर्वेनशक्तागंतुमेवच ॥८५॥ ब्राह्मणान्बंधुवर्गांश्चभिक्षुकांश्चविशेषतः ॥ मिष्टान्नंभोजयामासपरिपूर्णंमनोह
रम् ॥ ८६ ॥ दीयतांदीयतांचैवखाद्यतांखाद्यतामिति ॥ बभूवशब्दोत्युच्चैश्चसततंनंदगोकुले ॥ ८७ ॥ रत्नानिपरिपूर्णा
निवासांसिभूषणानिच ॥ प्रवालानिसुवर्णानिमणिसाराणियानिच ॥८८॥ चारूणिस्वर्णपात्राणिकृतानिविश्वकर्मणा ॥
गत्वागर्गायविनयंचकारव्रजपुंगवः ॥ ८९ ॥ शिष्येभ्यःस्वर्णभाराणिप्रददौविनयान्वितः ॥ द्विजेभ्योप्यवशिष्टेभ्यःप

रिपूर्णानिनारद ॥ १९० ॥ श्रीनारायणउवाच ॥ गृहीत्वाश्रीहरिंगर्गोजगाम निभृतंमुदा ॥ तुष्टावपरयाभक्त्याप्रणम्यचत
मीश्वरम् ॥ ९१ ॥ साश्रुनेत्रःसपुलकोभक्तिनम्रात्मकंधरः ॥ पुटांजलियुतोभूत्वोवाचकृष्णपदांबुजे ॥ ९२ ॥ गर्गउवाच ॥ हे
कृष्णजगतांनाथभक्तानांभयभंजन ॥ प्रसन्नोभवमामीश देहिदास्यंपदांबुजे ॥ ९३ ॥ त्वत्पित्रामेधनंदत्तंतेनमेकिंप्रयोज
नम् ॥ देहिमेनिश्चलांभक्तिंभक्तानामभयप्रद ॥ ९४ ॥ अणिमादिकसिद्धीषुयोगेषुमुक्तिषुप्रभो ॥ ज्ञानतत्त्वेऽमरत्वेवाकिंचि
न्नास्तिस्पृहामम ॥ ९५ ॥ इंद्रत्वेवामनुत्वेवास्वर्गलोकफलेचिरम् ॥ नास्तिमेमनसोवांछात्वत्पादसेवनंविना ॥ ९६ ॥ सालो
क्यंसार्ष्टिसारूप्येसामीप्यैकत्वमीप्सितम् ॥ नाहंगृह्णामितेब्रह्मन्त्वत्पादसेवनंविना ॥ ९७ ॥ गोलोकेवापिपातालेवासेना
स्तिमनोरथः ॥ किंतुतेचरणांभोजेसंततंस्मृतिरस्तुमे ॥ ९८ ॥ त्वन्मंत्रंशंकरात्प्राप्यकतिजन्मफलोदयात् ॥ सर्वज्ञोऽहंस
र्वदर्शीसर्वत्रगतिरस्तुमे ॥ ९९ ॥ कृपांकुरुकृपासिंधोदीनबंधोपदांबुजे ॥ रक्षमामभयंदत्वामृत्युर्मेकिंकरिष्यति ॥ २०० ॥
सर्वेषामीश्वरःसर्वस्त्वत्पादांभोजसेवया ॥ मृत्युंजयोंऽतकालश्चबभूवयोगिनांगुरुः ॥ १ ॥ ब्रह्माविधाताजगतांत्वत्पादां
भोजसेवया ॥ यस्यैकदिवसेब्रह्मन्पतंतींद्राश्चतुर्दश ॥ २ ॥ त्वत्पादसेवयाधर्मःसाक्षीचसर्वकर्मणाम् ॥ पाताचफलदाता
चजित्वाकालंसुदुर्जयम् ॥ ३ ॥ सहस्रवदनःशेषोयत्पादांबुजसेवया ॥ धत्तेसिद्धार्थवद्विश्वंशिवःकालेविषंयथा ॥ ४ ॥ सर्वसं
पद्विधात्रीयादेवीनांचपरात्परा ॥ करोतिसततंलक्ष्मीःकेशैस्त्वत्पादमार्जनम् ॥ ५ ॥ प्रकृतिर्बीजरूपासासर्वेषांशक्तिरूपि
णी ॥ स्मारंस्मारंत्वत्पदाब्जंबभूवतत्परावरा ॥ ६ ॥ पार्वतीसर्वरूपासासर्वेषांबुद्धिरूपिणी ॥ त्वत्पादसेवयाकांतंललाभशिव
मीश्वरम् ॥ ७ ॥ विद्याधिष्ठात्रिदेवीयाज्ञानमातासरस्वती ॥ पूज्याबभूवसर्वेषांसंपूज्यत्वत्पदांबुजम् ॥ ८ ॥ सावित्रीवे

दजननीपुनातिभुवनत्रयम् ॥ ब्रह्मणोब्राह्मणानांचगतिस्त्वत्पादसेवया ॥ ९ ॥ क्षमाजगद्विभर्तुंचरत्नगर्भावसुंधरा ॥
प्रसूतिःसर्वसस्यानांत्वत्पादपद्मसेवया ॥ २१० ॥ राधाममांशसंभूतातवतुल्याचतेजसा ॥ स्थित्वावक्षसितेपादंसेवतेऽन्य
स्यकाकथा ॥ ११ ॥ यथाशर्वादयोदेवादेव्यःपद्मादयोयथा ॥ सनाथंकुरुमामीशईश्वरस्यसमाकृपा ॥ १२ ॥ नयास्या
मिगृहंनाथनगृह्णामिधनंतव ॥ कृत्वामांरक्षपादाब्जसेवायांसेवकंरतम् ॥ १३ ॥ इतिस्तुत्वासाश्रुनेत्रःपपातचरणेहरेः ॥ रु
रोदचभृशंभक्त्यापुलकांचितविग्रहः ॥ १४ ॥ गर्गस्यवचनंश्रुत्वाजहासभक्तवत्सलः ॥ उवाचतंस्वयंकृष्णोमयितेभक्ति
रस्त्विति ॥ १५ ॥ इदंगर्गकृतंस्तोत्रंत्रिसंध्यंयःपठेन्नरः ॥ दृढांभक्तिंहरेर्दास्यंस्मृतिंचलभतेध्रुवम् ॥ १६ ॥ जन्ममृत्यु
जरारोगशोकमोहादिसंकटात् ॥ तीर्णोभवतिश्रीकृष्णदाससेवनतत्परः ॥ १७ ॥ कृष्णस्यसहकालंचकृष्णसार्द्धंचमोदते ॥
कदाचिन्नभवेतस्यविच्छेदोहरिणासह ॥ १८ ॥ श्रीनारायणउवाच ॥ ॥ हरिर्मुनिःस्तवंकृत्वाददौनंदायतंमुदा ॥ उवाच
तंगृहंयामिकुर्वाज्ञामितिवल्लव ॥ १९ ॥ अहोविचित्रंसंसारोमोहजालेनवेष्टितः ॥ संमीलनंचविरहोनराणांसिंधुफेनवत्
॥ २२० ॥ गर्गस्यवचनंश्रुत्वारुरोदनंदएवच ॥ सद्विच्छेदोहिसाधूनांमरणादतिरिच्यते ॥ २१ ॥ सर्वशिष्यैःपरिवृतंमुनीं
द्रंगंतुमुद्यतम् ॥ सर्वेनंदादयोगोपारुरुदंतोगोपिकास्तदा ॥ २२ ॥ प्रणेमुःपरमप्रीत्याचक्रुस्तंविनयंमुने ॥ दत्वाऽशिषंमु
निश्रेष्ठोजगाममथुरांमुदा ॥ २३ ॥ ऋषयोमुनयश्चैवबंधुवर्गाश्चवल्लवाः ॥ सर्वेजग्मुर्धनैःपूर्णाःस्वालयंहृष्टमानसाः ॥
॥ २४ ॥ प्रजग्मुर्बंदिनःसर्वेपरिपूर्णमनोरथाः ॥ मिष्टद्रव्यांशुकोत्कृष्टतुरगस्वर्णभूषणैः ॥ २५ ॥ आकंठपूर्णाभुक्त्याचभि
क्षुकागंतुमक्षमाः ॥ स्वर्णवस्त्रभरोद्रेकपरिश्रांतामुदान्विताः ॥ २६ ॥ सुमंदगामिनःकेचित्केचिद्भूमौचशेरते ॥ केचिद्वर्त्म

नितिष्ठंतश्चोत्तिष्ठंतश्चकेचन ॥ २७ ॥ केचिदूषुःप्रमुदिताहसंतस्तत्रकेचन ॥ कपर्दकानांवस्तूनांशेषांश्चोर्वरितान्बहून् ॥२८॥
केचित्तानाददुःस्थित्वादर्शयंतश्चकेचन ॥ केचिन्नृत्यंप्रकुर्वंतोगायंतस्तत्रकेचन ॥ २९ ॥ केचिद्बहुविधागाथाःकथयंतः
पुरातनाः ॥ मरुतश्वेतसगरमांधातॄणांचभूभृताम् ॥ ३० ॥ उत्तानपादनहुषनलादीनांचयाःकथाः ॥ श्रीरामस्याश्वमेध
स्यरंतिदेवस्यकर्मणाम् ॥ २३१ ॥ येषांयेषांनृपाणांचश्रुत्वावृद्धमुखात्कथाः ॥ कथयंतश्चताःकेचित्श्रुतवंतश्चकेचन ॥
॥ ३२ ॥ स्थायंस्थायंगताःकेचित्स्वापंस्वापंचकेचन ॥ एवंसर्वेप्रमुदिताःप्रजग्मुःस्वालयंमुदा ॥ ३३ ॥ हृष्टोनंदोयशोदा
चबालंकृत्वाचवक्षसि ॥ तस्थौस्वमंदिरेरम्येकुबेरभुवनोपमे ॥ ३४ ॥ एवंप्रवर्द्धतौबालौशुक्लचंद्रकलोपमौ ॥ गवांपुच्छंच
भित्तिंचधृत्वाचोत्तस्थतुर्मुदा ॥ ३५ ॥ शब्दार्द्धंवातदर्द्धंवाक्षमौवक्तुंदिनेदिने ॥ पित्रोर्हर्षंचवर्द्धंतौगच्छंतौप्रांगणेमुने ॥३६॥
बालोद्विपादंपादंवागंतुंशक्तोबभूवह ॥ गंतुशक्तोहिजानुभ्यांप्रांगणेवागृहेहरिः ॥ ३७ ॥ वर्षाधिकोहिवयसाकृष्णात्संक
र्षणःस्वयम् ॥ ततोमुदंवर्द्धयंतौवर्द्धितौचदिनेदिने ॥ ३८ ॥ व्रजंतौगोकुलेबालौप्रत्यहष्टगमनेक्षमौ ॥ उक्तवंतौस्फुटंवाक्यं
मायाबालकविग्रहौ ॥ ३९ ॥ गर्गोजगाममथुरांवसुदेवाश्रमंमुने ॥ सतंननामपप्रच्छपुत्रयोःकुशलंतयोः ॥ २४० ॥ मुनि
स्तंकथयामासकुशलंसुमहोत्सवम् ॥ आनंदाश्रुनिमग्नश्चश्रुतमात्राद्बभूवह ॥ ४१ ॥ देवकीपरमप्रीत्यापप्रच्छचपुनःपु
नः ॥ आनंदाश्रुनिमग्नासारुरोदचमुहुर्मुहुः ॥ ४२ ॥ गर्गस्तावाशिषंदत्वाजगामस्वालयंमुदा ॥ स्वगृहेतस्थतुस्तौचकुबेरभ
वनोपमे ॥ ४३ ॥ यत्रकल्पेकथाचेयंतत्रत्वमुपबर्हणः ॥ पंचाशत्कामिनीनांचपतिर्गंधर्वपुंगवः ॥ ४४ ॥ तासांप्राणाधिक
स्त्वंचश्रृंगारनिपुणोयुवा ॥ ततोऽभद्ब्रह्मणःशापाद्दासीपुत्रोद्विजस्यच ॥४५॥ ततोऽधुनाब्रह्मपुत्रोवैष्णवोच्छिष्टभोजनात्

सर्वदर्शीचसर्वज्ञःस्मारकोहरिसेवया ॥ ४६ ॥ कथितंकृष्णचरितंनामान्नप्राशनादिकम् ॥ जन्ममृत्युजरानिघ्नमपरंकथया
मिते ॥ २४७ ॥ ॥ इतिश्रीब्रह्म०कृष्णजन्मखंडेकृष्णान्नप्राशनंनामकरणप्रस्तावोनामत्रयोदशोऽध्यायः ॥ १३ ॥ श्रीना
रायणउवाच ॥ ॥ एकदानंदपत्नीचस्नानार्थंयमुनांययौ ॥ गव्यपूर्णंगृहंदृष्ट्वाजहासमधुसूदनः ॥ १ ॥ दधिदुग्धाज्यतक्रं
चनवनीतंमनोरमम् ॥ गृहस्थितंचयत्किंचिच्चखादमधुसूदनः ॥ २ ॥ मधुहय्यंगवीनंयत्स्वस्तिकंशकटस्थितम् ॥ भु
क्त्वापीत्वांशुकैर्वस्त्रसंस्कारंकर्तुमुद्यतम् ॥ ३ ॥ ददर्शबालकंगोपीस्नात्वागत्यस्वमंदिरम् ॥ गव्यशून्यंभग्नभांडंमध्वादि
रिक्तभाजनम् ॥ ४ ॥ दृष्ट्वापप्रच्छबालांश्चअहोकर्मेदमद्भुतम् ॥ यूयंवदतसत्यंचकृतंकेनसुदारुणम् ॥ ५ ॥ यशोदाव
चनंश्रुत्वासर्वमूचुश्चबालकाः ॥ चखादसत्यंबालस्तेनास्मभ्यंदत्तमेवच ॥ ६ ॥ बालानांवचनंश्रुत्वाचुकोपनंदगेहिनी ॥
वेत्रंगृहीत्वादुद्रावरक्तपंकजलोचना ॥ ७ ॥ पलायमानंगोविंदंगृहीतुंनशशाकह ॥ ध्यानासाध्यंशिवादीनांदुरापमपि
योगिनाम् ॥ ८ ॥ यशोदाभ्रमणंकृत्वाविश्रांतासर्वसंयुता ॥ तस्थौकोपपरीतात्माशुष्ककंठोष्ठतालुका ॥ ९ ॥ विश्रांतांमा
तरंदृष्ट्वाकृपालुःपुरुषोत्तमः ॥ संतस्थौपुरतोमातुःसस्मितोजगदीश्वरः ॥ १० ॥ करेधृत्वाचतंदेवीसमानीयस्वमालयम् ॥
बध्वावस्त्रेणवृक्षेचतताडमधुसूदनम् ॥ ११ ॥ बध्वाकृष्णंयशोदासाजगामस्वालयंप्रति ॥ हरिस्तस्थौवृक्षमूलेजगतांज
गतीश्वरः ॥ १२ ॥ श्रीकृष्णस्पर्शमात्रेणसहसातत्रनारद ॥ पपातवृक्षःशैलाभःशब्दंकृत्वाभयानकम् ॥ १३ ॥ सुवेषःपुरुषो
दिव्योवृक्षादाविर्बभूवह ॥ दिव्यस्यंदनमारुह्यजगामस्वालयंपुरः ॥ १४ ॥ प्रणम्यजगतीनाथंशातकुंभपरिच्छदम् ॥ कि
शोरःसस्मितोगौरोरत्नालंकारभूषितः ॥ १५ ॥ सावृक्षपतनंदृष्ट्वाभियात्रस्ताव्रजेश्वरी ॥ क्रोडेचकारबालंतंरुदंतंश्यामसुंद

रम् ॥ १६ ॥ आजग्मुर्गोकुलस्थाश्चगोपागोप्यश्चतद्गृहम् ॥ यशोदांभर्त्सयामासुःशांतिंचक्रुःशिशोर्मुदा ॥ १७ ॥ अत्यंत
स्थविरेकालेतनयोऽयंबभूवह ॥ धनंधान्यंचरत्नंवातत्सर्वंपुत्रहेतुकम् ॥ १८ ॥ सुमतिर्नास्तितेसत्यंज्ञातानंदव्रजेश्वरी ॥
नभक्षितंयत्पुत्रेणतत्सर्वंनिष्फलंभुवि ॥ १९ ॥ पुत्रंबध्वागव्यहेतोर्वृक्षमूलेचनिष्ठुरे ॥ गृहकर्मणिव्यग्रायांदैवाद्वृक्षःपपातह
॥ २० ॥ वृक्षस्यपतनाद्बोपीभाग्याद्बालोपिजीवितः ॥ प्रनष्टेबालकेमूढवस्तूनांकिंप्रयोजनम् ॥ २१ ॥ आशिषंयुयुजु
र्विप्रावंदिनश्चशुभावहाम् ॥ द्विजेनकारयामासुर्नामसंकीर्तनंहरेः ॥ २२ ॥ एवंकृत्वाजनाःसर्वेप्रययुर्निजमंदिरम् ॥ उवा
चपत्नींनंदश्चरक्तपंकजलोचनः ॥ २३ ॥ ॥ नंदउवाच ॥ ॥ यास्यामितीर्थमद्यैवकंठेकृत्वातुबालकम् ॥ अथवात्वंगृ
हाद्गच्छत्वयामेकिंप्रयोजनम् ॥ २४ ॥ शतकूपाधिकावापीशतवापीसमंसरः ॥ सरःशताधिकोयज्ञःपुत्रोयज्ञशताधिकः॥
॥ २५ ॥ तपोदानोद्भवंपुण्यंजन्मांतरसुखप्रदम् ॥ सुखप्रदोऽपिसत्पुत्रइहैवचपरत्रच ॥ पुत्रादपिपरोबंधुर्नभूतोनभवि
ष्यति ॥ २६ ॥ एवमुक्त्वास्वभार्यांचतस्थौनंदःस्वमंदिरे ॥ यशोदारोहिणीचैवनियुक्तेगृहकर्मणि ॥ २७ ॥ नारदउवाच ॥
सुवेषःपुरुषःकोवावृक्षरूपीचगोकुले ॥ भगवन्हेतुनाकेनवृक्षत्वंसमवापह ॥ २८ ॥ ॥ नारायणउवाच ॥ ॥ कुबेरतनयः
श्रीमान्नाम्नायोनलकूबरः ॥ जगामनंदनवनंक्रीडार्थंसहरंभया ॥ २९ ॥ निर्जनेसरसस्तीरेपुष्पोद्यानेमनोहरे ॥ वटवृक्षस
मीपेचसौरभेपुष्पवायुना ॥ ३० ॥ विधायपुष्पशयनंरत्नदीपैश्चदीपितम् ॥ चंदनागुरुकस्तूरीकुंकुमद्रवसंयुतम् ॥ ३१ ॥
परितःपुष्पमाल्यैश्चक्षौमवस्त्रैश्चवेष्टितम् ॥ तत्ररंभांसमानीयविजहारयथेच्छया ॥ ३२ ॥ शृंगाराष्टप्रकारंचविपरीतादिकं
सुखम् ॥ चुंबनंषट्प्रकारंचयथास्थानंनिरूपितम् ॥ ३३ ॥ अंगप्रत्यंगसंयोगत्रिविधाश्लेषणंमुदा ॥ नखदंतकरक्रीडांच

काररसिकेश्वरः ॥ ३४ ॥ जलास्थलेस्थलात्तोयेकामशास्त्रविशारदः ॥ रतिभोगंप्रकुर्वंतंददर्शदेवलोमुनिः ॥ ३५ ॥ नग्नां
रंभांमुक्तकेशींपीनश्रोणिपयोधराम् ॥ नखदंतक्षतांगींचपुलकांचितविग्रहाम् ॥ ३६ ॥ पश्यंतींप्राणनाथंचपश्यंतंसस्मि
तंमुदा ॥ वक्रभ्रूभंगयुक्तांचकामुकींचददर्शताम् ॥ ३७ ॥ रत्नकुंडलयुग्मेनगंडस्थलविराजिताम् ॥ विचित्ररत्नमाल्यैश्च
पुष्पमाल्यैश्चभूषिताम् ॥ ३८ ॥ किंकिणीजालसंयुक्तांसिंदूरबिंदुसंयुताम् ॥ तयामुक्तंपुलकितंनोच्चिष्ठंतंस्मरान्वितम् ॥
॥ ३९ ॥ वृक्षत्वंयाहिपापिष्ठेत्युवाचमुनिपुंगवः ॥ शशापरंभांकामार्तांमानुषीत्वंभवेतिच ॥ ४० ॥ जन्मेजयस्यसौभा
ग्याभविताकामिनीतिच ॥ त्वमेवगोकुलंगच्छवृक्षरूपीभवेतिच ॥ ४१ ॥ श्रीकृष्णस्पर्शमात्रेणपुनरायास्यसिगृहम् ॥
रंभेत्वमिंद्रसंयोगात्पुनरायास्यसिध्रुवम् ॥ ४२ ॥ इत्येवमुक्त्वासमुनिर्जगामनिजमंदिरम् ॥ कुबेरतनयःश्रीमान्सजगा
मनिजालयम् ॥ ४३ ॥ इत्येवंकथितंविप्ररंभाख्यानंवदामिते ॥ सुचंद्रस्यगृहेरंभाललाभजन्मभारते ॥ ४४ ॥ कन्या
लक्ष्मीस्वरूपाचबभूवसुंदरीवरा ॥ तांचसालंकृतांकृत्वासुचंद्रोनृपतीश्वरः ॥ ४५ ॥ नानाकौतुकसंयुक्तांददौजन्मेजयाय
च ॥ जनमेजयस्यसुभगाबभूवमहिषीवरा ॥ ४६ ॥ स्थानेस्थानेनिर्जनेचराजारेमेतयासह ॥ एकदानृपतिश्रेष्ठअश्वमे
धेनदीक्षितः ॥ ४७ ॥ अश्वसंगोपनंकृत्वातस्थौशक्रश्चमंदिरे ॥ यज्ञाश्वंरुचिरंमत्वाकौतुकेनचसुंदरी ॥ ४८ ॥ द्रष्टुंजगामसा
साध्वीचाश्वमेकाकिनीमुदा ॥ शक्रोऽश्वनिकटेभूत्वाधर्षयामासतांसतीम् ॥ ४९ ॥ तयानिवार्यमाणश्चरेमेतत्रतयासह ॥
मूर्छामवापशक्रश्चबुबुधेनदिवानिशम् ॥ ५० ॥ साचसंभोगमात्रेणदेहंतत्याजयोगतः ॥ नृपस्यलज्जयाभीत्याशक्रः
स्वर्गंजगामह ॥ ५१ ॥ राजाश्रुत्वामृतांदृष्ट्वाविललापभृशंमुहुः ॥ यज्ञंसमाप्यविप्रेभ्योददौपूर्णांचदक्षिणाम् ॥ ५२ ॥

रंभाचमानवंदेहंत्यक्त्वास्वर्गंजगामह ॥ इत्येवंकथितंसर्वंवृक्षार्जुनविभंजनम् ॥ ५३ ॥ नलकूबरमोक्षश्चरंभायाश्चमहा
मुने ॥ पुण्यदंकृष्णचरितंजन्ममृत्युजरापहम् ॥ इत्येवंकथितंसर्वमपरंकथयामिते ॥ ५४ ॥ ॥ इतिश्रीब्रह्मवै० श्रीकृष्ण
जन्मखंडेवृक्षार्जुनभंजनोनामचतुर्दशोऽध्यायः ॥ १४ ॥ श्रीनारायणउवाच ॥ एकदाकृष्णसहितोनंदोवृंदावनंययौ ॥
तत्रोपवनभांडीरेचारयामासगोधनम् ॥ १ ॥ सरःसुस्वादुतोयंचपाययामासतत्पपौ ॥ उवासवृक्षमूलेचबालंकृत्वास्वव
क्षसि ॥ २ ॥ एतस्मिन्नंतरेकृष्णोमायामानुषविग्रहः ॥ चकारमाययाकस्मान्मेघाच्छन्नंनभोमुने ॥ ३ ॥ मेघावृतंनभोदृ
ष्ट्वाश्यामलंकाननांतरम् ॥ झंझावातंमहाशब्दंवज्रशब्दंचदारुणम् ॥ ४ ॥ वृष्टिधारामतिस्थूलांकंपमानांश्चपादपान् ॥ दृ
ष्ट्वैवंपतितस्कंधान्नंदोभयमवापह ॥ ५ ॥ कथंयास्यामिगोवत्सान्विहायस्वाश्रमंव्रत ॥ गृहंयदिनयास्यामिभविताबाल
कस्यकिम् ॥ ६ ॥ एवंनंदेप्रवदतिरुरोदश्रीहरिस्तदा ॥ पयोभियाहरिश्चैवपितुःकंठंदधारसः ॥ ७ ॥ एतस्मिन्नंतरेराधाज
गामकृष्णसन्निधिम् ॥ गमनंकुर्वतीराजहंसखंजनगंजनम् ॥ ८ ॥ शरत्पार्वणचंद्राभामुष्टवक्त्रामनोहरा ॥ शरन्मध्या
न्हपद्मानांशोभामोचनलोचना ॥ ९ ॥ परितस्तारकापक्ष्मविचित्रकज्जलोज्ज्वला ॥ खगेंद्रचंचुचारुश्रीशंसानाशकना
सिका ॥ १० ॥ तन्मध्यस्थलशोभार्हस्थूलमुक्ताफलोज्ज्वला ॥ कबरीवेशसंयुक्तामालतीमाल्यवेष्टिता ॥ ११ ॥ ग्रीष्मम
ध्यान्हमार्तंडप्रभामुष्टककुंडला ॥ पक्वबिंबफलानांचश्रीमुष्टाधरयुग्मका ॥ १२ ॥ मुक्तापंक्तिप्रभातैकदंतपंक्तिसमुज्ज्वला ॥
ईषत्प्रफुल्लकुंदानांसुप्रभानाशकस्मिता ॥ १३ ॥ कस्तूरींबिंदुसंयुक्तसिंदूरबिंदुभूषिता ॥ कपालंमल्लिकायुक्तंबिभ्रतीश्री
युतंसती ॥ १४ ॥ सुचारुवर्तुलाकारकपोलपलकान्विता ॥ मणिरत्नेंद्रसाराणांहारोरःस्थलभूषिता ॥ १५ ॥ सुचारुश्री

फलयुगकठिनस्तनसगता ॥ पत्रावलीश्रियायुक्तादीप्तासद्रत्नतेजसा ॥ १६ ॥ सुचारुवर्तुलाकारमुदरंसुमनोहरम् ॥ वि
चित्रत्रिवलीयुक्तंनिम्ननाभिंचबिभ्रती ॥ १७ ॥ सद्रत्नसाररचितमेखलाजालभूषिता ॥ कामास्त्रसारभ्रूभंगयोगींद्रचि
त्तमोहिनी ॥ १८ ॥ कठिनश्रोणियुगलंधरणीधरनिंदितम् ॥ स्थलपद्मप्रभामुष्टचरणंदधतीमुदा ॥ १९ ॥ रत्नभूषणसंयु
क्तंयावकद्रवसंयुतम् ॥ मणींद्रशोभासंमुष्टसालक्तकपुनर्भवम् ॥ २० ॥ सद्रत्नसाररचितक्कणन्मंजीररंजितम् ॥ रत्नकं
कणकेयूरचारुशंखविभूषिता ॥ २१ ॥ रत्नांगुलीयनिकरवन्हिशुद्धांशुकोज्वला ॥ चारुचंपकपुष्पाणांप्रभामुष्टकलेव
रा ॥ २२ ॥ सहस्रदलसंयुक्तक्रीडाकमलमुज्वलम् ॥ श्रीमुखश्रीदर्शनार्थंबिभ्रतीरत्नदर्पणम् ॥ २३ ॥ दृष्ट्वातांनिर्जने
नंदोविस्मयंपरमंययौ ॥ चंद्रकोटिप्रभामुष्टांभासयंतींदिशोदश ॥ २४ ॥ ननामतांसाश्रुनेत्रोभक्तिनम्रात्मकंधरः ॥ जा
नामित्वांगर्गमुखात्पद्माधिकप्रियांहरेः ॥ २५ ॥ जानामीमंमहाविष्णोःपरंनिर्गुणमच्युतम् ॥ तथापिमोहितोहंचमानवो
विष्णुमायया ॥ २६ ॥ गृहाणप्राणनाथंचगच्छभद्रेयथासुखम् ॥ पश्चाद्दास्यसिमत्पुत्रंकृत्वापूर्णमनोरथम् ॥ २७ ॥ इ
त्युक्त्वाप्रददौतस्यैरुदंतंबालकंभिया ॥ जग्राहबालकंराधाजहासमधुरंसुखात् ॥ २८ ॥ उवाचनंदंसायत्नान्नप्रकाश्यं
रहस्यकम् ॥ अहंदृष्टात्वयानंदकतिजन्मफलोदयात् ॥ २९ ॥ प्राज्ञस्त्वंगर्गवचनात्सर्वंजानासिकारणम् ॥ अकथ्यमा
वयोर्गोप्यंचरित्रंगोकुलेव्रज ॥ ३० ॥ वरंवृणुव्रजेशत्वंयत्तेमनसिवांछितम् ॥ ददामिलीलयातुभ्यंदेवानामपिदुर्लभम् ॥
॥ ३१ ॥ राधिकावचनंश्रुत्वातामुवाचव्रजेश्वरः ॥ युवयोश्चरणेभक्तिंदेहिनान्यत्रमेस्पृहा ॥ ३२ ॥ युवयोःसन्निधौवासं
दास्यसित्वंसुदुर्लभम् ॥ आवाभ्यांदेहिजगतामंबिकेपरमेश्वरि ॥ ३३ ॥ श्रुत्वानंदस्यवचनमुवाचपरमेश्वरी ॥ दास्या

मिदास्यमतुलमिदानींभक्तिरस्तुते ॥ ३४ ॥ आवयोश्चरणांभोजे युवयोश्चदिवानिशम् ॥ प्रफुल्लत्हृदयेशश्वत्स्मृतिरस्तुसु
दुर्लभा ॥ ३५ ॥ मायायुवांचप्रच्छन्नौनकरिष्यतिमद्वरात् ॥ गोलोकेयास्यथांतेचविहायमानवींतनुम् ॥ ३६ ॥ एवमुक्त्का
तुसानंदंकृत्वाकृष्णंस्ववक्षसि ॥ दूरंनिनायश्रीकृष्णंबाहुभ्यांचयथेप्सितं ॥ ३७ ॥ कृत्वावक्षसितंकामात्श्लेषंश्लेषंचुचुंबच ॥
पुलकांकितसर्वांगीसस्माररासमंडलं ॥ ३८ ॥ एतस्मिन्नंतरेराधामायासद्रत्नमंडपम् ॥ ददर्शरत्नकलशशतेनचसमन्वितम् ॥
॥ ३९ ॥ नानाविचित्रचित्राढ्यंचित्रकाननशोभितम् ॥ सिंदूराकारमणिभिःस्तंभसंघैर्विराजितम् ॥ ४० ॥ चंदनागुरुकस्तू
रीकुंकुमद्रवयुक्तया ॥ संयुक्तंमालतीमालासमूहपुष्पशय्यया ॥ ४१ ॥ नानाभोगसमायुक्तंदिव्यदर्पणसंयुतम् ॥ मणीं
द्रमुक्तामाणिक्यमालाजालैर्विभूषितम् ॥ ४२ ॥ मणींद्रसाररचितकपाटेनसमन्वितम् ॥ भूषितंभूषितैर्वस्त्रैःपताकानिक
रैर्वरैः ॥ कुंकुमाकारमणिभिःसप्तसोपानसंयुतम् ॥ ४३ ॥ युक्तंषट्पदसंयुक्तैःपुष्पोद्यानंचपुष्पितैः ॥ सादेवीमंडपंदृष्ट्वा
जगामाभ्यंतरंमुदा ॥ ४४ ॥ ददर्शतत्रतांबूलंकर्पूरादिसमन्वितम् ॥ जलंचरत्नकुंभस्थंस्वच्छंशीतंमनोहरम् ॥ ४५ ॥ सु
धामधुभ्यांपूर्णानिरत्नकुंभानिनारद ॥ पुरुषंकमनीयंचकिशोरश्यामसुंदरम् ॥ ४६ ॥ कोटिकंदर्पलीलाभंचंदनेनविभू
षितम् ॥ शयानंपुष्पशय्यायांसस्मितंसुमनोहरम् ॥ ४७ ॥ पीतवस्त्रपरीधानंप्रसन्नवदनेक्षणम् ॥ मणींद्रसारनिर्माणंक्व
णन्मंजीररंजितम् ॥ ४८ ॥ सद्रत्नसारनिर्माणकेयूरवलयान्वितम् ॥ मणींद्रकुंडलाभ्यांचगंडस्थलविराजितम् ॥ ४९ ॥
कौस्तुभेनमणींद्रेणवक्षःस्थलसमुज्ज्वलम् ॥ शरत्पार्वणचंद्रास्यप्रभामुष्टमुखोज्ज्वलम् ॥ ५० ॥ शरत्प्रफुल्लकमलप्रभा
मोचनलोचनम् ॥ मालतीमाल्यसंश्लिष्टशिखिपिच्छसुशोभितम् ॥ ५१ ॥ त्रिवंकचूडांबिभ्रंतंपश्यंतंरत्नमंदिरम् ॥ क्रो

डंबालकशून्यंचदृष्ट्वातंनवयौवनम् ॥ ५२ ॥ सर्वस्मृतिस्वरूपासातथापिविस्मयंययौ ॥ रूपंरासेश्वरीदृष्ट्वामुमोहसुम
नोहरम् ॥ ५३ ॥ कामाच्चक्षुश्चकोराभ्यांमुखचंद्रंपपौमुदा ॥ निमेषरहिताराधानवसंगमलालसा ॥ ५४ ॥ पुलकांकितस
र्वांगीसस्मितामदनातुरा ॥ तामुवाचहरिस्तत्रस्मेराननसरोरुहाम् ॥ ५५ ॥ नवसंगमयोग्यांचपश्यंतींवक्रचक्षुषा ॥ श्रीकृ
ष्णउवाच ॥ ॥ राधेस्मरसिगोलोकवृत्तांतंसुरसंसदि ॥ ५६ ॥ अद्यपूर्णंकरिष्यामिस्वीकृतंयत्पुराप्रिये ॥ त्वंमेप्राणाधि
काराधेप्रेयसीचवरानने ॥ ५७ ॥ यथात्वंचतथाहंचभेदोहिनावयोर्ध्रुवम् ॥ यथाक्षीरेचधावल्यंयथाग्नौदाहिकासती ॥
॥ ५८ ॥ यथापृथिव्यांगंधश्चतथाहंत्वयिसंततम् ॥ विनाम्टदाघटंकर्तुंविनास्वर्णेनकुंडलम् ॥ ५९ ॥ कुलालःस्वर्णकारश्च
नहिशक्तःकदाचन ॥ तथात्वयाविनासृष्टिमहंकर्तुंनचक्षमः ॥ ६० ॥ सृष्टेराधारभूतात्वंबीजरूपोहमच्युतः ॥ आगच्छश
यनेसाध्विकुरुवक्षःस्थलेहिमाम् ॥ ६१ ॥ त्वंमेशोभास्वरूपासिदेहस्यभूषणंयथा ॥ कृष्णंवदंतिमांलोकास्त्वयैवरहितंयदा
॥ ६२ ॥ श्रीकृष्णंचतदातेपित्वयैवसहितंपरम् ॥ त्वंचश्रीस्त्वंचसंपत्तिस्त्वमाधारस्वरूपिणी ॥ ६३ ॥ सर्वशक्तिस्वरूपासि
सर्वरूपोहमक्षरः ॥ यदातेजःस्वरूपोहंतेजोरूपासित्वंतदा ॥ ६४ ॥ नशरीरीयदाहंचतदात्वमशरीरिणी ॥ सर्वबीजस्व
रूपोहंसदायोगेनसुंदरि ॥ ६५ ॥ त्वंचशक्तिस्वरूपाचसर्वस्त्रीरूपधारिणी ॥ ममांगांशस्वरूपात्वंमूलप्रकृतिरीश्वरी ॥
॥ ६६ ॥ शक्त्याबुद्ध्याचज्ञानेनमयातुल्यावरानने ॥ आवयोर्भेदबुद्धिंचयःकरोतिनराधमः ॥ ६७ ॥ तस्यवासःकालसूत्रे
यावच्चंद्रदिवाकरौ ॥ पूर्वान्सप्तपरान्सप्तपुरुषान्पातयत्यधः ॥ ६८ ॥ कोटिजन्मार्जितंपुण्यंतस्यनश्यतिनिश्चितम् ॥ अ
ज्ञानादावयोर्निंदांयेकुर्वंतिनराधमाः ॥ ६९ ॥ पच्यंतेनरकेघोरेयावच्चंद्रदिवाकरौ ॥ राशब्दंकुर्वतस्त्रस्तोददामिभक्तिमुत्त

माम् ॥ ७० ॥ धाशब्दंकुर्वतःपश्चाद्यामिश्रवणलोभतः ॥ येसेवंतेचदत्वामामुपचाराणिषोडश ॥ यावज्जीवनपर्यंतंयाप्री
तिर्जायतेमम ॥ ७१ ॥ साप्रीतिर्ममजायेतराधाशब्दात्ततोधिका ॥ प्रियानमेतथाराधेराधावक्तातततोधिकः ॥ ७२ ॥ ब्र
ह्मानंतःशिवोधर्मोनरनारायणावृषी ॥ कपिलश्चगणेशश्चकार्तिकेयश्चमत्प्रियः ॥ ७३ ॥ लक्ष्मीःसरस्वतीदुर्गासावित्रीप्र
कृतिस्तथा ॥ ममप्रियाश्चदेवाश्चतास्तथापिनतत्समाः ॥ ७४ ॥ तेसर्वेप्राणतुल्यामेत्वंमेप्राणाधिकासती ॥ भिन्नस्थान
स्थितास्तेचत्वंचवक्षस्थलेस्थिता ॥ ७५ ॥ यामेचतुर्भुजामूर्तिर्बिभर्त्तिवक्षसिप्रियाम् ॥ सोहंकृष्णस्वरूपस्त्वांविवहामि
स्वयंसदा ॥ ७६ ॥ इत्येवमुक्त्वाश्रीकृष्णस्तस्थौतल्पेमनोरमे ॥ उवाचराधिकानाथंभक्तिनम्रात्मकंधरा ॥ ७७ ॥ ॥ रा
धिकोवाच ॥ ॥ स्मरामिसर्वंजानामिविस्मरामिकथंविभो ॥ यत्त्वंवदसिसर्वाहंत्वत्पादाब्जप्रसादतः ॥ ७८ ॥ ईश्वरस्या
प्रियाःकेचित्प्रियाश्चकुत्रकेचन ॥ येयथामांनस्मरंतितथातेषुतवाकृपा ॥ ७९ ॥ तृणंचपर्वतंकर्तुंसमर्थःपर्वतंतृणम् ॥ त
थापियोग्यायोग्येचसंपत्तौचसमाकृपा ॥ ८० ॥ तिष्ठत्यहंशयानस्त्वंकथाभिर्यत्क्षणंगतं ॥ तत्क्षणंचयुगसमंनाहंप्राप
यितुंक्षमा ॥ ८१ ॥ वक्षस्थलेचशिरसिदेहितेचरणांबुजम् ॥ दुनोतिमन्मनःसद्यस्त्वदीयविरहानलात् ॥ ८२ ॥ पुरःपपातमे
दृष्टिस्त्वदीयचरणांबुजे ॥ नीतामयानहिक्लेशाद्द्रष्टुमन्यत्कलेवरं ॥ ८३ ॥ प्रत्येकमंगंदृष्ट्वैवदत्ताशांतेमुखांबुजे ॥ दृष्ट्वामुखार
विंदंचनान्यंगंतुंनसाक्षमा ॥ ८४ ॥ राधिकावचनंश्रुत्वाजहासपुरुषोत्तमः ॥ तामुवाचहितंतथ्यंश्रुतिस्मृतिनिरूपितं ॥ ८५ ॥
॥ श्रीकृष्णउवाच ॥ ॥ नखंडनीयंतत्तत्रमयापूर्वंनिरूपितम् ॥ तिष्ठभद्रेक्षणंभद्रंकरिष्यामितवप्रिये ॥ ८६ ॥ त्वन्मनोर
थपूर्णस्यस्वयंकालःसमागतः ॥ यस्ययल्लिखितंपूर्वंयत्रकालेनिरूपितम् ॥ ८७ ॥ तदेवखंडितुंराधेक्षमोनाहंचकोवि

धिः ॥ विधातुश्चावधाताहंयेषायल्लखनंकृतं ॥ ८८ ॥ ब्रह्मादीनांचक्षुद्राणांनतत्खंड्यंकदाचन ॥ एतस्मिन्नंतरेब्रह्माजगा
मपुरतोहरेः ॥ ८९ ॥ मालाकमंडलुकरईषत्स्मेरचतुर्मुखः ॥ गत्वाननामतंकृष्णंप्रतुष्टावयथागमं ॥ ९० ॥ साश्रुनेत्रःपुलकितो
भक्तिनम्रात्मकंधरः ॥ स्तुत्वानत्वाजगद्धाताजगामहरिसन्निधिम् ॥ ९१ ॥ पुनर्नत्वाप्रभुंभक्त्याजगामराधिकांतिकम् ॥ मू
र्ध्नाननामभक्त्याचमातुस्तच्चरणांबुजे ॥ ९२ ॥ चकारसंभ्रमेणैवजटाजालेनवेष्टितम् ॥ कमंडलुजलेनैवशीघ्रंप्रक्षालितंमु
दा ॥ ९३ ॥ यथागमंप्रतुष्टावपुटांजलियुतःपुनः ॥ ब्रह्मो० ॥ हेमातस्त्वत्पदांभोजंदृष्टंकृष्णप्रसादतः ॥ ९४ ॥ सुदुर्लभंचसर्वे
षांभारतेचविशेषतः ॥ षष्टिर्वर्षसहस्राणितपस्तप्तंपुरामया ॥ ९५ ॥ भास्करेपुष्करेतीर्थेकृष्णस्यपरमात्मनः ॥ आजगामवरं
दातुंवरदाताहरिःस्वयम् ॥ ९६ ॥ वरंवृणीष्वेत्युक्तेचस्वाभीष्टंचवृतंमुदा ॥ राधिकाचरणांभोजंसर्वेषामपिदुर्लभम् ॥ ९७ ॥
हेगुणातीतमेशीघ्रमधुनैवप्रदर्शय ॥ मयेत्युक्तोहरिरयमुवाचमांतपस्विनम् ॥ ९८ ॥ दर्शयिष्यामिकालेचवत्सेदानींक्षमे
तिच ॥ नहीश्वराज्ञाविफलातेनदृष्टंपदांबुजम् ॥ ९९ ॥ सर्वेषांवांछितंमातर्गोलोकेभारतेधुना ॥ सर्वादेव्यःप्रकृत्यंशाजन्याः
प्राकृतिकाध्रुवम् ॥ १०० ॥ त्वंकृष्णांगार्धसंभूतातुल्याकृष्णेनसर्वतः ॥ श्रीकृष्णस्त्वमयंराधात्वंराधावाहरिःस्वयम् ॥ १ ॥
नहिवेदेषुमेदृष्टइतिकेननिरूपितम् ॥ ब्रह्मांडाद्बहिरूर्ध्वंचगोलोकोस्तियथांबिके ॥ २ ॥ वैकुंठश्चाप्यजन्यश्चत्वमजन्यात
थांबिके ॥ यथासमस्तब्रह्मांडेश्रीकृष्णांशांशजीविनः ॥ ३ ॥ तथाशक्तिस्वरूपात्वंतेषुसर्वेस्थितासदा ॥ पुरुषाश्चहरेरंशा
स्त्वदंशानिखिलाःस्त्रियः ॥ ४ ॥ आत्मनादेहरूपात्वमस्याधारस्त्वमेवहि ॥ अस्यानुप्राणैस्त्वंमातस्त्वत्प्राणैरयमीश्वरः
॥ ५ ॥ किमहोनिर्मितःकेनहेतुनाशिल्पकारिणा ॥ नित्योयंचतथाकृष्णस्त्वंचनित्यातथांबिके ॥ ३ ॥ अस्यांशात्वंत्वदंशो

वाप्ययंकेननिरूपितः ॥ अहंविधाताजगतांवेदानांजनकःस्वयम् ॥ ७ ॥ तंपठित्वागुरुमुखाद्भवंत्येवबुधाजनाः ॥ गुणा
नांवास्तवानांतेशतांशंवक्तुमाक्षमः ॥ ८ ॥ वेदोवापंडितोवान्यःकोवात्वांस्तोतुमीश्वरः ॥ स्तवानांजनकंज्ञानंबुद्धिर्ज्ञानांबि
कासदा ॥ ९ ॥ त्वंबुद्धेर्जननीमातःकोवात्वांस्तोतुमक्षमः ॥ यद्वस्तुदृष्टंसर्वैषांतद्विवक्तुंबुधःक्षमः ॥ १० ॥ यददृष्टाश्रुतंव
स्तुतन्निर्वक्तुंचकःक्षमः ॥ अहंमहेशोनंतश्चस्तोतुंत्वांकोपिनक्षमः ॥ ११ ॥ सरस्वतीनवेदाश्चक्षमःकःस्तोतुमीश्वरः ॥ य
थागमंयथोक्तंचनमांनिंदितुमर्हसि ॥ १२ ॥ ईश्वराणामीश्वरस्ययोग्यायोग्येसमाकृपा ॥ जनस्यप्रतिपाल्यस्यक्षणेदोषःक्ष
णेगुणः ॥ १३ ॥ जननीजनकोयोवासर्वंक्षमतिस्नेहतः ॥ इत्युक्त्वाजगतांधातातस्थौचपुरतस्तयोः ॥ १४ ॥ प्रणम्यचरणां
भोजंसर्वैषांवंघमीप्सिम् ॥ ब्रह्मणाचकृतंस्तोत्रंत्रिसंध्यंयःपठेन्नरः ॥ १५ ॥ राधामाधवयोःपादेभक्तिर्दास्यंलभेत्ध्रुवम् ॥
कर्मनिर्मूलनंकृत्वामृत्युंजित्वासुदुर्जयम् ॥ १६ ॥ विलंघ्यसर्वलोकांश्चयातिगोलोकमुत्तमम् ॥ ॥ श्रीनारायणउवाच ॥
ब्रह्मणस्तवनंश्रुत्वातमुवाचहराधिका ॥ १७ ॥ वरंवृणुविधातस्त्वंयत्तेमनसिवर्ततें ॥ राधिकावचनंश्रुत्वातामुवाचजग
द्विधिः ॥ १८ ॥ वरचयुवयोःपादपद्मभक्तिंचेदहिमे ॥ इत्युक्तेविधिनाराधातूर्णमोमित्युवाचह ॥ १९ ॥ पुनर्नमामतांभ
क्त्याविधाताजगतांपतिः ॥ तदाब्रह्मातयोर्मध्येप्रज्वाल्यचहुताशनम् ॥ २० ॥ हरिंसंस्मृत्यहवनंचकारविधिनाविधिः ॥ उ
त्थायशयनात्कृष्णउवासवन्हिसन्निधौ ॥ २१ ॥ ब्रह्मणोक्तेनविधिनाचकारहवनंस्वयम् ॥ प्रणमय्यपुनःकृष्णंराधांतांजन
कःस्वयम् ॥ २२ ॥ कौतुकंकारयामाससप्तधाचप्रदक्षिणाम् ॥ पुनःप्रदक्षिणांराधांकारयित्वाहुताशनम् ॥ २३ ॥ प्रणमय्यत
तःकृष्णंवासयामासतंविधिः ॥ तस्याहस्तंचश्रीकृष्णंग्राहयामासतंविधिः ॥ २४ ॥ वेदोक्तसप्तमंत्रांश्चपाठयामासमाधवम् ॥

संस्थाप्यराधिकाहस्तंहरेर्वक्षसिवेदवित् ॥२५॥ श्रीकृष्णहस्तंराधायाःपृष्ठदेशेप्रजापतिः॥ स्थापयामासमंत्रांस्त्रीन्पाठया
मासराधिकाम् ॥२६॥ पारिजातप्रसूनानांमालांजानुविलंबिताम् ॥ श्रीकृष्णस्यगलेब्रह्माराधाद्वाराददौमुदा ॥२७॥ प्रण
मय्यपुनःकृष्णंराधांचकमलोद्भवः॥ राधागलेहरिद्वाराददौमालांमनोहरां ॥ पुनश्चवासयामासश्रीकृष्णंकमलोद्भवः ॥ २८
तद्वामपार्श्वेराधांचसस्मितांकृष्णचेतसम् ॥ पुटांजलिंकारयित्वामाधवंराधिकांविधिः ॥ २९॥ पाठयामासवेदोक्तान्पंचमं
त्रांश्चनारद॥ प्रणमय्यपुनःकृष्णंसमर्प्यराधिकांविधिः ॥ ३० ॥ कन्यकांचयथाताताेभक्त्यातस्थौहरेःपुरः ॥ एतस्मिन्नंतरेदे
वासानंदपुलकोद्गमाः ॥३१॥ दुंदुभिंवादयामासुश्चानकंमुरजादिकम् ॥ पारिजातप्रसूनानांपुष्पवृष्टिर्बभूवह ॥ ३२॥ ज
गुर्गंधर्वप्रवरान्नृतुश्चाप्सरोगणाः ॥ तुष्टावश्रीहरिंब्रह्मातमुवाचहसस्मितः ॥ ३३ ॥ युवयोश्चरणांभोजेभक्तिंमेदेहिदक्षि
णाम् ॥ ब्रह्मणोवचनंश्रुत्वातमुवाचहरिःस्वयम् ॥ ३४ ॥ मदीयचरणांभोजेसुदृढाभक्तिरस्तुते ॥ स्वस्थानंगच्छभद्रंते
भवितानात्रसंशयः ॥ ३५ ॥ मयानियोजितंकर्मकुरुवत्सममाज्ञया ॥ श्रीकृष्णस्यवचःश्रुत्वाविधाताजगतांमुने ॥३६॥
प्रणम्यराधांकृष्णंचजगामस्वालयंमुदा ॥ गतेब्रह्मणिसादेवीसस्मितावक्रचक्षुषा ॥ ३७ ॥ साददर्शहरेर्वक्त्रंचच्छादव्री
डयामुखम् ॥ पुलकांकितसर्वांगीकामबाणप्रपीडिता ॥ ३८ ॥ प्रणम्यश्रीहरिंभक्त्याजगामशयनंहरेः ॥ चंदनागुरुपंकं
चकस्तूरीकुंकुमान्वितम् ॥ ३९ ॥ ललाटेतिलकंकृत्वाददौकृष्णस्यवक्षसि ॥ सुधापूर्णरत्नपात्रंमधुपूर्णमनोहरम् ॥४०॥
प्रददौहरयेभक्त्याबुभुजेजगतीपतिः ॥ तांबूलंचवरंरम्यंकर्पूरादिसुवासितम् ॥ ४१ ॥ ददौकृष्णायसाराधासादरंबुभुजेह
रिः ॥ चखादसस्मिताराधाहरिदत्तंसुधारसम् ॥ ४२ ॥ तांबूलंतेनदत्तंचबुभुजेपुरतोहरेः ॥ कृष्णश्चर्विततांबूलंराधिकायैमु

दाददौ ॥ ४३ ॥ चखादपरयाभक्त्यापपौतन्मुखपंकजम् ॥ राधाचर्वितताम्बूलंययाचेमधुसूदनः ॥ ४४ ॥ जहासनददौ
राधाक्षमेत्युक्तंतयामुदा ॥ चंदनागुरुकस्तूरीकुंकुमद्रवमुत्तमम् ॥ राधिकायाश्चसर्वांगेप्रददौमाधवःस्वयम् ॥ ४५ ॥ यः
कामोध्यायतेनित्यंयस्यैकचरणांबुजम् ॥ बभूवतस्यसवशोराधासंतोषकारणात् ॥ ४६ ॥ यद्भृत्यभृत्यैर्मदनोजितःसर्व
क्षणंमुने ॥ स्वेच्छामयोहिभगवान्जितस्तेनकुतूहलात् ॥ ४७ ॥ करेधृत्वाचतांकृष्णःस्थापयामासवक्षसि ॥ चकारशि
थिलंवस्त्रंचुंबनंचचतुर्विधम् ॥ ४८ ॥ बभूवरतियुद्धेनविच्छिन्नाक्षुद्रघंटिका ॥ चुंबनेनौष्ठरागश्चत्वाश्लेषेणचपत्रकम् ॥
॥ ४९ ॥ शृंगारेणैवकबरीसिंदूरतिलकंमुने ॥ जगामालक्तकंकश्चविपरीतादिकेनच ॥ १५० ॥ पुलकांकितसर्वांगीबभूव
नवसंगमात् ॥ मूर्छामवापसाराधाबुबुधेनदिवानिशम् ॥ ५१ ॥ प्रत्यंगेनैवप्रत्यंगमंगेनांगंसमाश्लिषत् ॥ शृंगाराष्टविधं
कृष्णश्चकारकामशास्त्रवित् ॥ ५२ ॥ पुनस्तांचसमाश्लिष्यसस्मितांवक्रलोचनाम् ॥ क्षतविक्षतसर्वांगींनखदंतैश्चकार
ह ॥ ५३ ॥ कंकणानांकिंकिणीनांमंजीराणांमनोहरः ॥ बभूवशब्दस्तत्रैवश्शृंगारसमरोद्भवः ॥ १५४ ॥ पुनस्तांचसमाकृ
ष्यशय्यायांचनिवेश्यच ॥ चकाररहितांराधांकबरीबंधवाससा ॥ ५५ ॥ निर्जनेकौतुकात्कृष्णःकामशास्त्रविशारदः ॥ चू
डावेषांशुकैर्हीनंचकारतंचराधिका ॥ ५६ ॥ नकस्यकस्माद्धानिश्चतौद्वौकार्यविशारदौ ॥ जग्राहराधाहस्तात्तुमाधवोरत्न
दर्पणम् ॥ ५७ ॥ मुरलींमाधवकराज्जग्राहराधिकाबलात् ॥ चित्तापहारंराधायाश्चकारमाधवोबलात् ॥ ५८ ॥ जहाररा
धिकारासान्माधवस्यापिमानसम् ॥ निवृत्तेकामयुद्धेचसस्मितावक्रलोचना ॥ ५९ ॥ प्रददौमुरलींप्रीत्याश्रीकृष्णायम
हात्मने ॥ प्रददौदर्पणंकृष्णःक्रीडाकमलमुज्ज्वलम् ॥ १६० ॥ चकारकबरींरम्यांसिंदूरतिलकंददौ ॥ विचित्रपत्रकंवेषंच

कारैवंविधंहरिः ॥ ६१ ॥ विश्वकर्मानजानातिसखीनामपिकाकथा ॥ वेषंविधातुंकृष्णस्ययदाराधासमुद्यता ॥ ६२ ॥ ब
भवशिशुरूपंचकैशोरंचविहायच ॥ ददर्शबालरूपंतंरुदंतंपीडितंक्षुधा ॥ ६३ ॥ यादृशंप्रददौनंदोभीतंतादृशमच्युतम् ॥
विनिश्वस्यचसाराधात्हृदयेनविदूयता ॥ ६४ ॥ इतस्ततस्तंपश्यंतीशोकार्ताविरहातुरा ॥ उवाचकृष्णमुद्दिश्यकाकूक्तिमि
तिकातरा ॥ ६५ ॥ मायांकरोषिमायेशकिंकरींकथमीदृशीम् ॥ इत्येवमुक्त्वासाराधापपातचरुरोदच ॥ ६६ ॥ रुरोदकृष्ण
स्तत्रैववाग्वभूवाशरीरिणी ॥ कथंरोदिषिराधेत्वंस्मरकृष्णपदांबुजम् ॥ ६७ ॥ आरासमंडलंयावन्नक्तमत्रागमिष्यति ॥
करिष्यसिरतिर्नित्यंहरिणासार्द्धमीप्सिताम् ॥ ६८ ॥ छायांविधायस्वगृहेस्वयमागत्यमारुद ॥ कृत्वाक्रोडेचप्राणेशमा
येशंबालरूपिणम् ॥ ६९ ॥ त्यजशोकंगृहंगच्छसुंदरीत्थंप्रबोधिता ॥ श्रुत्वैवंवचनंराधाकृत्वाक्रोडेचबालकम् ॥ १७० ॥ द
दर्शपुष्पोद्यानंचवनंसद्रत्नमंडपम् ॥ तूर्णंवृंदावनाद्राधाजगामनंदमंदिरम् ॥ ७१ ॥ सामनोयायिनीदेवीनिमिषार्धेननार
द ॥ संसिक्तस्निग्धमधुररसनारक्तलोचना ॥ ७२ ॥ यशोदायैशिशुंदातुमुद्यतासेत्युवाचह ॥ गृहीत्वैवंशिशुंस्थूलंरुदंतंच
क्षुधातुरम् ॥ ७३ ॥ गोष्ठेत्वत्स्वामिनादत्तंप्राप्नोतियातनांपथि ॥ संसिक्तंवसनंवत्सेमेघाच्छन्नेतिदुर्दिने ॥ ७४ ॥ पिच्छले
कर्दमोद्रेकेयशोदावोढुमक्षमा ॥ गृहाणबालकंभद्रेस्तनंदत्वाप्रबोधय ॥ १७५॥ गृहंचिरंपरित्यक्तंयामितिष्ठसुखंसति ॥
इत्युक्त्वाबालकंदत्वाजगामस्वगृहंप्रति ॥ ७६ ॥ यशोदाबालकंनीत्वाचुचुंबचस्तनंददौ ॥ बहिर्निविष्टासाराधास्वगृहेगृह
कर्मणि ॥ ७७॥ तित्यंनक्तंरतिंतत्रचकारहरिणासह ॥ इत्येवंकथितंवत्सश्रीकृष्णचरितंशुभम् ॥ सुखदंमोक्षदंपुण्यमपरं
कथयामिते ॥ ७८ ॥ ॥ इतिश्रीब्रह्मवैवर्तेम० श्रीकृष्णज० राधाकृष्णविवाहनवसंगमप्रस्तावःपंचदशोऽध्यायः ॥ १५॥

श्रीनारायणउवाच ॥ ॥ माधवोबालकैःसार्द्धमेकदाहलिनासह ॥ भुक्त्वापीत्वाचक्रीडार्थंजगामश्रीवनंमुने ॥ १ ॥ तत्रना
नाविधांक्रीडांचकारमधुसूदनः ॥ कृत्वातांशिशुभिःसार्द्धंचालयामासगोधनम् ॥ २ ॥ ययौमधुवनंतस्माच्छ्रीकृष्णोगोध
नैःसह ॥ तत्रस्वादुजलंपीत्वावनेचसमहाबलः ॥ ३ ॥ तत्रैकदैत्योबलवान्श्वेतवर्णोभयंकरः ॥ विकृताकारवदनोबका
कारश्चशैलवत् ॥ ४ ॥ दृष्ट्वाचगोकुलंगोष्ठेशिशुभिर्बलकेशवौ ॥ यथात्यगस्त्योवातापिंसर्वंजग्रासलीलया ॥ ५ ॥ बक
ग्रस्तंहरिंदृष्ट्वासर्वेदेवाभयान्विताः ॥ चक्रुर्हाहेतिसंत्रस्ताधावंतःशस्त्रपाणयः ॥ ६ ॥ शक्रश्चिक्षेपवज्रंचमुनेरस्थिविनिर्मि
तम् ॥ नममारबकस्तस्मात्पक्षमेकंददाहच ॥ ७ ॥ नीहारास्त्रंशशधरःशीतार्तस्तेनदानवः ॥ यमदंडंसूर्यपुत्रस्तेनकुंठोबभू
वह ॥ ८ ॥ वायव्यास्त्रंचवायुश्चतेनस्थानांतरंययौ ॥ वरुणश्चशिलावृष्टिंचकारतेनपीडितः ॥ ९ ॥ हुताशनश्चवान्हेनपक्षां
श्चैवददाहसः ॥ कुबेरस्यार्धचंद्रेणछिन्नपादोबभूवह ॥ १० ॥ ईशानस्यचशूलेनबभूवमूर्च्छितोसुरः ॥ ऋषयोमुनयश्चैवकृ
ष्णंचक्रुर्भियाशिषम् ॥ ११ ॥ एतस्मिन्नंतरेकृष्णःप्रज्वलन्ब्रह्मतेजसा ॥ ददाहदैत्यसर्वांगंबाह्याभ्यंतरमीश्वरः ॥ १२ ॥
तत्सर्वंवमनंकृत्वाप्राणांस्तत्याजदानवः ॥ बकंनिहत्यबलवान्शिशुभिर्गोधनैःसह ॥ १३ ॥ ययौकेलिकदंबानांकाननं
सुमनोहरम् ॥ एतस्मिन्नंतरेतत्रवृषरूपधरोसुरः ॥ १४ ॥ नाम्नाप्रलंबोबलवान्महाधूर्तश्चशैलवत् ॥ शृंगाभ्यांचहरिंधृत्वा
भ्रामयामासतत्रवै ॥ १५ ॥ दुद्रुवुर्बालकाःसर्वेरुरुदुश्चभयातुराः ॥ बलोजहासबलवान्ज्ञात्वाभ्रातरमीश्वरम् ॥ १६ ॥ बाल
कान्बोधयामासभयंकिमित्युवाचह ॥ तद्विषाणंगृहीत्वाचस्वयंश्रीमधुसूदनः ॥ १७ ॥ भ्रामयित्वाचगगनेपातयामास
भूतले ॥ प्राणांस्तत्याजदैत्येंद्रोनिपत्यचमहीतलम् ॥ १८ ॥ जहसुर्बालकाःसर्वेननृतुश्चजगुर्मुदा ॥ हत्वाप्रलंबंश्रीकृष्णो

बलेनसहसत्वरम् ॥ १९ ॥ गोधनकालयामासययौभांडीरमीश्वरः ॥ गच्छंतंमाधवंदृष्ट्वाकेशीदैत्येश्वरोबली ॥ २० ॥ वेष्ट
यामासतंशीघ्रंखुरेणविलिखन्महीम् ॥ मूर्ध्निकृत्वाहरिंतुष्टेगगनंशतयोजनम् ॥ २१ ॥ उत्पात्यभ्रामयामासपपातचम
हीतले ॥ जग्राहसहरिंपापीचर्वयामासकोपतः ॥ २२ ॥ सभग्नदंतोदैत्यश्चवज्रांगचर्वणादहो ॥ श्रीकृष्णतेजसादग्धःप्रा
णांस्तत्याजभूतले ॥ २३ ॥ स्वर्गेदुंदुभयोनेदुःपुष्पवृष्टिर्बभूवह ॥ एतस्मिन्नंतरेतत्रपार्षदादिव्यरूपिणः ॥ २४ ॥ तत्राज
ग्मुःस्यंदनस्थाद्विभुजाःपीतवाससः ॥ किरीटिनःकुंडलिनोवनमालाविभूषिताः ॥ २५ ॥ विनोदमुरलीहस्ताःक्वणन्मंजीररं
जिताः ॥ चंदनोक्षितसर्वांगागोपवेषधरावराः ॥ २६ ॥ ईषद्धास्यप्रसन्नास्याभक्तानुग्रहकातराः ॥ प्रदीप्तंरथमास्थायरत्न
सारविनिर्मितं ॥ २७ ॥ भांडीरवनमाजग्मुर्यत्रसन्निहितोहरिः ॥ दिव्यवस्त्रपरीधानारत्नालंकारभूषिताः ॥ २८ ॥ प्रणमय्य
हरिंस्तुत्वाजग्मुर्गोलोकमुत्तमम् ॥ मुक्त्वादेहंपरित्यज्यवैष्णवाःपुरुषास्त्रयः ॥ २९ ॥ संप्राप्यदानवींयोनिंबभूवुःकृष्णपा
र्षदाः ॥ नारदउ० ॥ केतेचदिव्यपुरुषावैष्णवादैत्यरूपिणः ॥ ३० ॥ कथयस्वमहाभागश्रुतंकिंपरमाद्भुतम् ॥ नारायणउ० ॥
शृणुब्रह्मन्प्रवक्ष्येहमितिहासंपुरातनम् ॥ ३१ ॥ श्रुतंमहेशवदनात्सूर्यपर्वणिपुष्करे ॥ हरेर्गुणप्रसंगेनकथयामासशंकरः ॥
॥ ३२ ॥ संपृष्टोमुनिसंघैश्चमयाधर्मेणब्रह्मणा ॥ ब्रह्मपुत्रमहाभागकथांभुवनपावनीं ॥ ३३ ॥ कथयामासविस्तार्यसावधा
नंनिशामय ॥ गंधर्वेशोगंधवाहःपर्वतेगंधमादने ॥ ३४ ॥ महांस्तपस्वीप्रवरोहरिसेवनतत्परः ॥ बभूवुश्चतुरःपुत्रागंधर्वप्रवरा
मुने ॥ ३५ ॥ सस्मरुःकृष्णपादाब्जंस्वप्नेज्ञानेदिवानिशम् ॥ तेचदुर्वाससःशिष्याःश्रीकृष्णार्चनतत्पराः ॥ ३६ ॥ नित्यंदत्वा
चकमलंसंपूज्यतंपपुर्जलं ॥ वसुदेवःसुहोत्रश्चसुदर्शनसुपार्श्वकौ ॥ ३७ ॥ चत्वारोवैष्णवश्रेष्ठास्तेपुस्तेपुष्करेतपः ॥ चिर

कालंतपस्तप्त्वाबभूवुःसिद्धमंत्रिणः ॥ ३८ ॥ ज्येष्ठोदुर्वाससोयोगंसंप्राप्ययोगिनांवरः॥ सिद्धश्चाकृतदारश्चप्रज्वलन्ब्रह्मतेजसा ॥ ३९॥ सद्योदेहंपरित्यज्यबभूवकृष्णपार्षदः॥ एकदाभ्रातरस्तेचजग्मुश्चित्रसरोवरं ॥ ४०॥ पद्मानिकृष्णपूजार्थमाहर्तुमुदयेरवेः ॥ पद्मानांचयनंकृत्वागच्छतोवैष्णवान्मुने ॥ ४१ ॥ दृष्ट्वानिबद्धयसंजग्मुःसर्वेशंकरकिंकराः ॥ बलिष्ठादुर्बलान्धृत्वाजग्मुःशंकरसन्निधिम् ॥ ४२॥ तेसर्वेशंकरंदृष्ट्वाप्रणेमुःशिरसाभुवि॥ तानुवाचशिवःशीघ्रंप्रयुज्याशिषमुत्तमाम् ॥ ४३ ॥ ईषद्धास्यप्रसन्नास्योभक्तानुग्रहकातरः ॥ शिवउवाच ॥ केयूयंपद्महर्तारःपार्वत्याश्चसरोवरे ॥ ४४ ॥ लक्षयक्षैरक्षणीयंपार्वतीव्रतहेतवे ॥ नित्यंसहस्रकमलंददातिहरयेसती ॥ ४५ ॥ व्रतेत्रैमासिकेभक्त्यापतिसौभाग्यवर्द्धने ॥ शिवस्यवचनंश्रुत्वातमूचुर्वैष्णवाभिया ॥४६ ॥ पुटांजलियुताःसर्वेभक्तिनम्रात्मकंधराः॥ गंधर्वाऊचुः ॥ वयंगंधर्वप्रवरागंधवाहसुताविभो ॥ ४७ ॥ हरयेकमलंदत्वापिबामोजलमीश्वर ॥ वयंनविघ्नोहेनाथपार्वत्यारक्षितंसरः ॥४८ ॥ गृहाणकमलंसर्वंयुष्माकंचफलंकुरु ॥ नदास्यामोऽद्यकमलंपास्यामोद्यजलंहर ॥४९ ॥ किंवाकथंनपास्यामस्तुभ्यंदत्तानितानिच ॥ नित्यंध्यात्वायत्पदाब्जंपद्मेनपूजयामहे ॥ ५० ॥ साक्षात्तस्मैप्रदत्ताचपद्मंपूतावयंप्रभो ॥ एकंब्रह्मत्वद्वितीयंकदेहःकचरूपवान् ॥ ५१ ॥ भक्तानुग्रहतोदेहोरूपभेदश्चमायया ॥ किंतुगृहाणपद्मानित्वमेवमत्प्रभुःप्रभो ॥ ५२ ॥ यतोनोमानसंपूर्णंतद्रूपंदर्शयाच्युत ॥ द्विभुजंकमनीयंचकिशोरंश्यामसुंदरम् ॥ ५३ ॥ विनोदमुरलीहस्तंपीतांबरधरंपरम् ॥ एकवक्त्रंद्विनयनंचंदनागुरुचर्चितम् ॥ ५४ ॥ ईषद्धास्यप्रसन्नास्यंरत्नालंकारभूषितम् ॥ कौस्तुभेनमणींद्रेणवक्षस्स्थलसमुज्ज्वलम् ॥ ५५ ॥ मयूरपिच्छचूडंचमालतीमाल्यभूषितम् ॥ पारिजातप्रसूनानांमालाराजिविभूषितम् ॥ ५६ ॥ कोटिकंद

अद्यप्रभृतिनागेशेभूताकन्याचत्वंमम ॥ ५६ ॥ त्वत्प्राणाधिकयेवायंजामाताचनसंशयः ॥ मत्पादपद्मचिन्हेनगरुडस्त्व
त्पतिंसुते ॥ ५७ ॥ कृत्वाचस्तवनंभक्त्याप्रणमस्यतिमत्पदम् ॥ त्यजत्वंगरुडाद्भीतिंशीघ्रंरमणकंव्रज ॥ ५८ ॥ न्हदा
न्निर्गच्छवत्सेत्वंवरंवृणुयथेप्सितम् ॥ श्रीकृष्णस्यवचःश्रुत्वाप्रसन्नवदनेक्षणा ॥ ५९ ॥ उवाचसाश्रुनेत्रासाभक्तिनम्रात्म
कंधरा ॥ सुरसोवाच ॥ वरंदास्यसिचेदानींवरदेश्वरमेपिच ॥ ६० ॥ त्वत्पादाब्जेदृढांभक्तिंनिश्चलांदातुमर्हसि ॥ मन्मन
स्त्वत्पदांभोजेप्रमत्तभ्रमरोयथा ॥ ६१ ॥ तवस्मृतेर्विस्मृतिर्मेकदापिनभविष्यति ॥ त्वत्कांतेममसौभाग्यंकांतोयंज्ञानि
नांवरः ॥ ६२ ॥ इत्येवंप्रार्थनीयंचपरिपूर्णंकुरुप्रभो ॥ इत्येवमुक्त्वासर्पस्त्रीप्रतस्थौपुरतोहरेः ॥ ६३ ॥ शरत्पार्वणचंद्रा
स्यंददर्शश्रीहरेर्मुखम् ॥ लोचनाभ्यांपपौवक्त्रंनिमेषरहितंसती ॥ ६४ ॥ सर्वांगपुलकोद्भिन्नासानंदाश्रुपरिप्लुता ॥ सुंदरंबा
लकंदृष्ट्वापुत्रस्नेहंप्रकुर्वती ॥ ६५ ॥ उवाचपुनरेवेदंभक्त्युद्रेकपरिप्लुता ॥ नयास्यामिरमणकंतत्रनास्तिप्रयोजनम् ॥ ६६
श्रीकृष्णउवाच ॥ ॥ मत्प्रमाणाःकीटसंघानतंशिष्यतिसंततम् ॥ भोगांतेजन्मलब्ध्वाचतन्मृत्युस्तस्यदर्शनात् ॥ ६७ ॥
तस्यवंशोद्भवानांचत्वद्वंशाद्भविताभयम् ॥ येचत्वद्वंशजान्दृष्ट्वासुपदांकंमदीयकम् ॥ ६८ ॥ प्रणमिष्यंतिभक्त्यातेमुच्यते
सर्वपातकात् ॥ गच्छशीघ्रंरमणकंत्यजभीतिंखगाधिपात् ॥ ६९ ॥ मत्पदांकंमूर्ध्निदृष्ट्वात्वांभक्त्याप्रणमिष्यति ॥ तवत्व
द्वंशजानांचगरुडान्नभयंक्वचित् ॥ ७० ॥ सर्वेषांज्ञातिसर्पाणांवरोधभवमद्वरात् ॥ वरंकिंपरमंवत्सवांछितंवरयाधुना ॥ ७१
भयंत्यक्त्वाकथयमांत्वदीयंदुःखभंजनम् ॥ श्रीकृष्णवचनंश्रुत्वाकालीयःकंपितोभिया ॥ ७२ ॥ पुटांजलियुतोभूत्वातमु
वाचभुजंगमः ॥ ॥ कालीयउवाच ॥ ॥ वरेन्यस्मिन्ममविभोवांछानास्तिवरप्रद ॥ ७३ ॥ भक्तिंस्मृतिंत्वत्पदाब्जेदेहिजन्म

निजन्मनि ॥ जन्मब्रह्मकुलेवापितिर्यग्योनिषुवासमम् ॥ ७४ ॥ तद्भवेत्सफलंतच्च स्मृतिस्त्वच्चरणांबुजे ॥ तन्निष्फलःस्व
र्गवासोनास्तिचेत्त्वत्पदस्मृतिः ॥ ७५ ॥ त्वत्पादध्यानयुक्तस्ययत्तत्स्थानंचतत्परम् ॥ क्षणंवाकोटिकल्पंवापुरुषायुःक्षयो
स्तुवा ॥ ७६ ॥ यदित्वत्सेवयायातिसफलोनिष्फलोथवा ॥ तेषांचायुर्व्ययोनास्तियेत्वत्पादाब्जसेवकाः ॥ ७७ ॥ नसंतिज
न्ममरणरोगशोकार्तिभीतयः ॥ इंद्रत्वेवामरत्वेवाब्रह्मत्वेचातिदुर्लभे ॥ ७८ ॥ वांछानास्त्येवभक्तानांत्वत्पादसेवनंविना ॥
सुजीर्णपटखंडस्यसमंनूतनमेवच ॥ ७९ ॥ पश्यंतिभक्ताःकिंचान्यत्सालोक्यादिचतुष्टयम् ॥ संप्राप्तस्त्वन्मनुर्ब्रह्मन्न
नंताद्यावदेवहि ॥ ८० ॥ तावत्त्वद्भावनेनैवत्वद्वर्णोहमनुग्रहात् ॥ मांचभक्तमपक्कंवाविज्ञायगरुडःस्वयम् ॥ ८१ ॥ देशाद्दू
रंचन्यक्कारंचकारदृढभक्तिमान् ॥ भवताचदृढांभक्तिंदत्वामेवरदेश्वर ॥ ८२ ॥ सचउक्तश्चभक्तोहंनमांत्यक्तुंक्षमोधुना ॥
त्वत्पादपद्मचिह्नाब्जंदृष्ट्वाश्रीमस्तकंमम ॥ ८३ ॥ सदोषंगुणयुक्तंमांसोधुनात्यक्तुमक्षमः ॥ ममाराध्याश्चराजेंद्रानतद्वा
ध्योहमीश्वर ॥ ८४ ॥ भयंनकेभ्यःसर्वत्रमनंतंचगुरुंविना ॥ यंदेवेंद्राश्चदेवाश्चमुनयोमनवोनराः ॥ ८५ ॥ स्वप्नेध्यानेनपश्यं
तिचक्षुषोर्गोचरःसमे ॥ भक्तानुरोधात्साकारःकुतस्तेविग्रहोविभो ॥ ८६ ॥ सगुणस्त्वंचसाकारोनिराकारश्चनिर्गुणः ॥ स्वे
च्छामयःसर्वधामसर्वबीजंसनातनम् ॥ ८७ ॥ सर्वेषामीश्वरःसाक्षीसर्वात्मासर्वरूपधृक् ॥ ब्रह्मेशशेषधर्मेंद्रवेदवेदांगपार
गाः ॥ ८८ ॥ स्तोतुंयमीशंतेजाड्याःसर्पस्तोष्यतितंविभुम् ॥ हेनाथकरुणासिंधोदीनबंधोक्षमाधमम् ॥ ८९ ॥ खलस्व
भावादज्ञायकृष्णत्वंचर्वितोमया ॥ नास्त्रलक्ष्योयथाकाशोनदृश्यांतोनलंघ्यकः ॥ ९० ॥ नस्पृश्योहिनचावर्यस्तथातेज
स्त्वमेवच ॥ इत्येवमुक्त्वानागेंद्रःपपातचरणांबुजे ॥ ९१ ॥ ओमित्युक्त्वाहरिस्तुष्टःसर्वंतस्मैवरंददौ ॥ नागराजकृतंस्तोत्रं

प्रातरुत्थाययः पठेत् ॥ १२ ॥ तद्वंशानांचतस्यैवनागेभ्योनभयंभवेत् ॥ सनागशय्यांकृत्वैवस्वपुंशक्तःसदाभुवि ॥ १३ ॥
विषपीयूषयोर्भेदोनास्त्येवतस्यभक्षणे ॥ नागग्रस्तेनागघातेप्राणांतेविषभोजनात् ॥ १४ ॥ स्तोत्रस्मरणमात्रेणसुस्थो
भवतिमानवः ॥ भूर्जेकृत्वास्तोत्रमिदंकंठेवादक्षिणेकरे ॥ १५ ॥ बिभर्तियोभक्तियुक्तोनागेभ्योपिनतद्भयम् ॥ यत्रगेहेस्तो
त्रमिदंनागस्तत्रनतिष्ठति ॥ १६ ॥ विषाग्निवज्रभीतिश्चनभवेत्तत्रनिश्चितम् ॥ इहलोकेहरेर्भक्तिंस्मृतिंचसततंलभेत् ॥ १७ ॥
अंतेचस्वकुलंपूत्वादास्यंचलभतेध्रुवम् ॥ श्रीनारायणउवाच ॥ नागेंद्रायवरंदत्वापुनस्तंजगदीश्वरः ॥ १८ ॥ उवाचमधुरं
वाक्यंपरिणामसुखावहम् ॥ ॥ श्रीकृष्णउवाच ॥ ॥ गच्छत्वंचरमणकंयथेंद्रनगरंपरम् ॥ ९९ ॥ सार्द्धंस्वगोष्ठ्यानाना
गेंद्रयमुनाजलवर्त्मना ॥ श्रुत्वानागोहरेराज्ञांरुरोदप्रेमविव्हलः ॥ १०० ॥ कदाद्रक्ष्यामित्वत्पादपद्मंनाथेत्युवाचह ॥ प्र
णम्यशतकृत्वश्चस्त्रियागोष्ठ्यासहेश्वरम् ॥ १ ॥ जगामजलमार्गेणनागेंद्रोविरहातुरः ॥ यमुनाव्हदतोयंचबभूवामृतक
ल्पकम् ॥ २ ॥ प्रसन्नाजंतवःसर्वेबभूवुस्तेननारद ॥ गत्वाददर्शभवनंयथेंद्रंनगरंपरम् ॥ ३ ॥ आज्ञयाचकृपासिंधोर्निर्मि
तंविश्वकर्मणा ॥ तत्रतस्थौचनागेंद्रःस्त्रियापुत्रगणैःसह ॥ ४ ॥ निःशंकोहर्षयुक्तश्चहरिभावनतत्परः ॥ इत्येवंकथितंसर्वंह
रेश्चरितमद्भुतम् ॥ ५ ॥ सुखदंमोक्षदंसारंपरंकिंश्रोतुमिच्छसि ॥ ॥ सूतउवाच ॥ ॥ महर्षेर्वचनंश्रुत्वानारदोहर्षविव्हलः ॥
॥ ६ ॥ ऋषिंपप्रच्छसंदेहंसर्वसंदेहभंजनम् ॥ ॥ नारदउवाच ॥ ॥ कथंविहायकालीयाःसपूर्वंभवनंपरम् ॥ ७ ॥ जगा
मयमुनातीरंतन्मेब्रूहिजगद्गुरो ॥ ॥ श्रीनारायणउवाच ॥ ॥ शृणुनारदवक्ष्येहमितिहासंपुरातनम् ॥ यच्छ्रुतंधर्मवक्त्रा
न्मेमलयेसूर्यपर्वणि ॥ कृष्णाख्यानप्रसंगेनसुप्रभापश्चिमेतटे ॥ ९ ॥ पप्रच्छधर्मंपुलहःकथितंमुनिसंसदि ॥ इदमाख्यान

माश्चर्यमुवाचतंकृपानिधिः ॥ १० ॥ तत्रश्रुतंमयाविप्रनिबोधकथयामिते ॥ शेषाज्ञयानागगणाःप्रतिसंवत्सरंभिया ॥
॥ ११ ॥ कार्तिकीपूर्णिमायांतुकुर्वंतिगरुडार्चनं ॥ पुष्पैर्धूपैश्चदीपैश्चनैवेद्यैर्बलिभिर्मुदा ॥ १२ ॥ पुष्करेचमहातीर्थेसुस्नातो
भक्तिसंयुतः ॥ तस्यपूजांचकालीयोनचकारात्यहंकृतः ॥ १३ ॥ नागपूजोपकरणंबलाद्भक्षितुमुद्यतः ॥ चक्रुर्निवारणंना
गानीतिमूचुर्मदोद्धतम् ॥ १४ ॥ नशक्तावारणेतेचेत्याविर्भूतःखगेश्वरः ॥ दृष्ट्वाखगेश्वरंनागाःकालीयप्राणरक्षया ॥ १५ ॥
प्राणशक्त्याचयुयुधुर्यावत्सूर्योदयंमुने ॥ पक्षींद्रतेजसासर्वेसमुद्विग्नाःपलायिताः ॥ १६ ॥ अनंतंशरणंजग्मुःसर्वेषामभ
यप्रदम् ॥ पलायनपरान्दृष्ट्वानागांश्चकरुणानिधिः ॥ १७ ॥ तत्रतस्थौचनिःशंकःकालीयस्तंददर्शह ॥ स्मृत्वाहरिपदांभो
जंकालीयोयुयुधेमुने ॥ १८ ॥ मुहूर्तंचतयोर्युद्धंबभूवातीवदारुणम् ॥ पराजितश्चनागेंद्रस्तेजसागरुडस्यच ॥ १९ ॥ भि
यापलायनंकृत्वाजगामयमुनान्हदम् ॥ नतंसौभरिशापेनखगेंद्रोगंतुमीश्वरः ॥ २० ॥ तत्रतस्थौभियानागोजग्मुःप
श्चाच्चतद्गणाः ॥ ॥ नारदउवाच ॥ ॥ कथंतुसौभरेःशापोबभूवगरुडायवै ॥ २१ ॥ कथंनशक्तोगंतुंतंन्हदमीश्वरवाहनः ॥
॥ श्रीनारायणउवाच ॥ ॥ दिव्यंवर्षसहस्रंचवर्षाणांतत्रसौभरिः ॥ २२ ॥ तपस्तप्त्वामहासिद्धोदध्यौकृष्णपदांबुजम् ॥ स
मीपेध्यायमानस्यकूलेचयमुनाजले ॥ २३ ॥ गणेनसार्धंनिःशंकःकरोतिभ्रमणंमुदा ॥ पुच्छमुत्फाल्यबहुधापरितःपर
मेच्छया ॥ २४ ॥ मुनिप्रदक्षिणीकृत्ययात्यायातिमुदान्विताः ॥ सकुलंसुमहात्मानंदर्शंदर्शंखगाधिपः ॥ २५ ॥ जग्राह
चंचुनातूर्णंमुनींद्रस्यसमीपतः ॥ गच्छंतंतंमीनमुखंददर्शकोपचक्षुषा ॥ २६ ॥ प्रकोपतोमुनेर्दृष्ट्वामीनस्तोयेपपातह ॥ तमु
वाचमुनींद्रश्चपुनरादातुमुद्यतम् ॥ २७ ॥ मीनश्चगरुडत्रासात्तस्थौमुनिसमीपतः ॥ ॥ सौभरिरुवाच ॥ ॥ गच्छदूरंगच्छदू

रंखगेंद्रमत्समीपतः ॥ २८ ॥ कायोग्यतामत्पुरस्तेगृहीतुंजीवमुल्बणम् ॥ श्रीकृष्णवाहनंज्ञात्वाचात्मानंबहुमन्यसे ॥ २९ ॥
त्वद्विधान्कोटिशःकृष्णःस्रष्टुंशक्तश्चवाहकान् ॥ करोमिभस्मसात्तूर्णंत्वांचभ्रूभंगलीलया ॥ ३० ॥ वाहनंचत्वमीशस्यनव
यंतस्यकिंकराः ॥ अद्यप्रभृतिपक्षींद्रयद्यागच्छसिमेऽन्हदम् ॥ ३१ ॥ मदीयशापात्तूर्णंचभस्मसाद्भविताध्रुवम् ॥ मुनींद्र
स्यवचःश्रुत्वाप्रचचालखगेश्वरः ॥ ३२ ॥ स्मारंस्मारंकृष्णपादंतंप्रणम्यजगामह ॥ अद्यप्रभृतिविप्रेंद्रपतगेंद्रस्यसंतत
म् ॥ ३३ ॥ ऽन्हदस्यश्रुतिमात्रेणकंपोभवतिनिश्चितम् ॥ इतिहासश्चकथितोयःश्रुतोधर्मवक्त्रतः ॥ ३४ ॥ सरहस्यंश्रुतिश्रुतं
प्राक्तंश्शृणुमंगलम् ॥ विज्ञायसुचिरंबालोनोत्तस्थौतज्जलाद्धरिः ॥ ३५ ॥ चक्रुर्विषादंमोहाच्चरुरुदुर्यमुनातटे ॥ स्ववक्षो
घातनंचक्रुःकेचिद्बालाःशुचाकुलाः ॥ ३६ ॥ केचिन्निपत्यभूमौचमूर्छांप्रापुर्हरिंविना ॥ ऽन्हदंप्रविष्टुंकेचिच्चविरहेणसमन्वि
ताः ॥ ३७ ॥ केचिद्गोपालबालाश्चकुर्वतस्तन्निवारणं ॥ कृत्वाविलापंकेचिच्चप्राणांस्त्यक्तुंसमुद्यताः ॥ ३८ ॥ तान्केचिज्ज्ञानवं
तश्चरक्षांचक्रुःप्रयत्नतः ॥ केचिदूचुश्चहाहेतिकृष्णकृष्णेतिकेचन ॥ ३९ ॥ केचिद्वक्तुंप्रवृत्तिंचप्रययुर्नंदसन्निधिं ॥ केचित्संमी
लितास्तत्रशोकमोहभयातुराः ॥ ४० ॥ इत्यूचुःकिंकरिष्यामःकुतोस्माकंगतोहरिः ॥ हेनंदसूनोहेकृष्णप्राणेभ्योप्यधिक
प्रिय ॥ ४१ ॥ हेबंधोदर्शनंदेहीत्यूचुःप्राणाःप्रयांतिहि ॥ एतस्मिन्नंतरेकेचिद्बालकानंदसन्निधिम् ॥ ४२ ॥ संप्रापुरति
लोभाच्चरुरुदंतःशोकविह्वलाः ॥ प्रवृत्तिमूचुस्तंशीघ्रंयशोदांमूलतोबलम् ॥ ४३ ॥ गोपान्गोपालिकाश्चैवरक्तपंकजलोच
नाः ॥ श्रुत्वावार्तांचतेसर्वेशीघ्रंजग्मुःशुचान्विताः ॥ ४४ ॥ कालिंदनंदिनीतीरंरुरुदुर्बालकैर्युताः ॥ गत्वासंमीलिताःसर्वेरु
रुदुःशोकमूर्छिताः ॥ ४५ ॥ ऽन्हदंविशंतीमंबांतांकेचिच्चक्रुर्निवारणम् ॥ गोपागोपालिकाश्चैवजघ्नुरंगानिशोकतः ॥ ४६ ॥

केचिद्विललपुस्तत्रमूर्छांप्रापुश्चकेचन ॥ न्हदंविशंतींतांराधांवारयामासकाश्चन ॥ ४७ ॥ मूर्छांचप्रापसाशोकान्मृतेवचस
रित्तटे ॥ विलप्यातिभृशंनंदोमूर्छांप्रापपुनःपुनः ॥ ४८ ॥ भूयोपिरोदनंकृत्वाभूयोमूर्छामवापह ॥ विलपंतंभृशंनंदंयशोदां
शोककर्शिताम् ॥ ४९ ॥ गोपांश्चगोपिकांश्चैवराधिकामतिमूर्छिताम् ॥ रुदंतोबालकान्सर्वान्बालिकाश्चशुचान्विताः॥ १५०
सर्वांश्चबोधयामासबलश्चज्ञानिनांवरः ॥ श्रीबलदेवउवाच ॥ गोपागोपालिकाबालाःसर्वेश्टणुतमद्वचः ॥ ५१ ॥ हेनंदज्ञानि
नांश्रेष्ठगर्गवाक्यस्मृतिंकुरु ॥ जगद्विभर्तुःशेषस्यसंहर्तुःशंकरस्यच ॥ ५२ ॥ विधातुःसंविधातुश्चभुविकस्मात्पराजयः ॥
परमाणुःपरोनूहःस्थूलात्स्थूलःपरात्परः ॥ ५३ ॥ विद्यमानोप्यविदृश्यःसंयोगोयोगिनामपि ॥ दिशांनास्तिसमाहारःस्पृ
श्योनाकाशएवच ॥ ५४॥ अपिसर्वेश्वरोबाध्यइत्यूचुःश्रुतयःस्फुटं ॥ नात्मादृश्योनाख्यलक्ष्योनवध्योनहिदृश्यकः॥ ५५
नाग्निग्रस्तोनहिंस्यश्चापीदमाध्यात्मिकाविदुः ॥ विग्रहोस्यैवकृष्णस्यभक्तध्यानार्थमेवच ॥ ५६ ॥ ज्योतिःस्वरूपस्य
विभोर्नाद्यंतमध्यमात्मनः ॥ जलप्लुतेचब्रह्मांडेजलशायीजनार्दनः ॥ ५७॥ यन्नाभिपद्मजोब्रह्मातस्येशस्यन्हदेविप
त् ॥ मशकश्चेत्क्षमोग्रस्तुंब्रह्मांडमखिलंपितः ॥ ५८ ॥ नतथापितदीशंतंग्रस्तंसर्पःक्षमोभवेत् ॥ इत्येवंकथितंसर्वमाध्या
त्मिकमनुत्तमं ॥ ५९ ॥ निगूढंयोगिनांसारंसंशयच्छेदकारणम् ॥ बलदेववचःश्रुत्वागर्गवाक्यमनुस्मरन् ॥ ६० ॥ तत्या
जशोकंनंदश्चव्रजश्चव्रजयोषितः ॥ प्रबोधंमेनिरेसर्वेनयशोदानराधिका ॥ ६१ ॥ बंधुविच्छेदविषयेप्रबोधेनस्थितंमनः ॥ ए
तस्मिन्नंतरेकृष्णमुत्पतंतंजलान्मुने ॥ ६२ ॥ ददृशुस्तंसुप्रसन्नाव्रजाश्चव्रजयोषिताः ॥ शरत्पार्वणचंद्रास्यंसस्मितंसुमनो
हरम् ॥ ६३ ॥ अस्निग्धवस्त्रमस्निग्धमलुप्तचंदनांजनम् ॥ सर्वाभरणसंयुक्तंज्वलंतंब्रह्मतेजसा ॥ ६४ ॥ मयूरपिच्छचूडंच

वंशीवदनमच्युतम् ॥ यशोदाबालकंदृष्ट्वाकृत्वावक्षसिसस्मिता ॥ ६५ ॥ चुचुंबवदनांभोजंप्रसन्नवदनेक्षणा ॥ क्रोडेचका
रनंदश्चबलश्चरोहिणीमुदा ॥ ६६ ॥ निमेषरहिताःसर्वेददृशुःश्रीमुखंहरेः ॥ प्रेमांधाबालकाःसर्वेचक्रुरालिंगनंहरिम् ॥ ६७॥
पपौचक्षुश्चकोरैश्चमुखचंद्रंचगोपिका: ॥ एतस्मिन्नंतरेतत्रसहसाकाननांतरं ॥ ६८ ॥ दावाग्निर्वेष्टयामासतैःसर्वैःसहगोकु
लं ॥ दृष्ट्वाशैलप्रमाणाग्निंपरितःकाननांतरे ॥ ६९ ॥ प्रणाशंमेनिरेसर्वेभयमापुश्चसंकटे ॥ श्रीकृष्णंतुष्टुवुःसर्वेसंपुटांजलयो
व्रताः ॥ ७० ॥ बालागोप्यश्चसंत्रस्ताभक्तिनम्रात्मकंधराः ॥ बालाऊचुः ॥ यथासंरक्षितंब्रह्मन्सर्वापस्त्वेवनःकुलम् ॥ ७१ ॥
तथारक्षांकुरुपुनर्दावाग्नेर्मधुसूदन ॥ त्वमिष्टदेवतास्माकंत्वमेवकुलदेवता ॥ ७२ ॥ स्रष्टापाताचसंहर्ताजगतांचजगत्प
ते ॥ वन्हिर्वावरुणोवापिचंद्रोवासूर्यएवच ॥ ७३ ॥ यमःकुबेरःपवनईशानाद्याश्चदेवताः ॥ ब्रह्मेशशेषधर्मेंद्रामुनींद्रामन
वःस्मृताः ॥ ७४ ॥ मानवाश्चतथादैत्यायक्षराक्षसकिंनराः ॥ येयेचराचराश्चैवसर्वेतवविभूतयः ॥ ७५ ॥ आविर्भावस्ति
रोभावःसर्वेषांचतवेच्छया ॥ अभयंदेहिगोविंदवन्हिसंहरणंकुरु ॥ ७६ ॥ वयंत्वांशरणंयामोरक्षनःशरणागतान् ॥ इत्ये
वमुक्त्वातेसर्वेतुस्थुर्ध्यात्वापदांबुजम् ॥ १७७ ॥ दूरीभूतस्तुदावाग्निःश्रीकृष्णामृतदृष्टितः ॥ दूरीभूतेचदावाग्नौनन्नृतुस्ते
मुदान्विताः ॥ ७८ ॥ सर्वापदःप्रणश्यंतिहरिस्मरणमात्रतः ॥ इदंस्तोत्रंमहापुण्यंप्रातरुत्थाययःपठेत् ॥ ७९ ॥ वन्हितो
नभवेत्तस्यभयंजन्मनिजन्मनि ॥ शत्रुग्रस्तेचदावाग्नौविपत्तौप्राणसंकटे ॥ ८० ॥ स्तोत्रमेतत्पठित्वातुमुच्यतेनात्रसं
शयः ॥ शत्रुसैन्यंक्षयंयातिसर्वत्रविजयीभवेत् ॥ इहलोकेहरेर्भक्तिमंतेदास्यंलभेत्ध्रुवम् ॥ ८१ ॥ श्रीनारायणउवाच ॥
दावाग्निमोक्षणंकृत्वातैःसार्धंश्टणुनारद ॥ जगामश्रीहरेर्गेहंकुबेरभवनोपमम् ॥ १८२ ॥ ब्राह्मणेभ्योधनंनंदःपरिपूर्णंद

दौमुदा ॥ भोजनंकारयामासज्ज्ञातिवर्गांश्चबांधवान् ॥ १८३ ॥ नानाविधंमंगलंचहरेर्नामानुकीर्तनं ॥ वेदांश्चपाठयामास
विप्रद्वारामुदान्वितः ॥ ५४ ॥ एवंमुमुदिरेसर्वेवृंदारण्येगृहेगृहे ॥ श्रीकृष्णचरणांभोजध्यानैकतानमानसाः ॥ ८५ ॥ इत्येवं
कथितंसर्वंहरेश्चरितमंगलं॥ कलिकिल्बिषकाष्ठानांदहनेदहनोपमं॥१८६॥ इतिश्रीब्रह्म० नरनारायणसंवादेकालीयदमन
दावाग्निमोक्षणंनामैकोनविंशोऽध्यायः ॥ १९॥ श्रीनारायण०॥ एकदाबालकैःसार्धंबलेनसहमाधवः ॥ भुक्त्वापीत्वानुलि
प्तश्चवृंदारण्यंजगामह ॥१॥ क्रीडांचकारभगवान्कौतुकेनचतैःसह ॥ क्रीडानिमग्नचित्तानांदूरंतद्गोकुलंययौ ॥ २॥ तस्यप्र
भावविज्ञातुंविधाताजगतांपतिः ॥ चकारनिन्हुतिंगाश्चवत्सांश्चबालकानपि ॥ ३ ॥ विज्ञायतदभिप्रायंसर्वज्ञःसर्वकारकः॥
पुनश्चकारतत्सर्वंयोगींद्रोयोगमायया ॥ ४॥ जगामश्रीहरिर्गेहंकालयित्वाचगोकुलम्॥ बलेनबालकैःसार्धंक्रीडाकौतुक
मानसः॥ ५ ॥ एवंचकारभगवान्वर्षमेकंचप्रत्यहं ॥ यमुनागमनंगोभिर्बलेनसहबालकैः ॥६॥ ब्रह्माप्रभावंविज्ञायलज्जा
नम्रात्मकंधरः ॥ आजगामहरेःस्थानंभांडीरवटमूलके॥ ७॥ ददर्शकृष्णंतत्रैवगोपालगणवेष्टितम् ॥ यथापार्वणचंद्रंचवि
भांतंस्वगणैःसह ॥ ८ ॥ रत्नसिंहासनस्थंचहसंतंसस्मितंमुदा ॥ पीतवस्त्रपरीधानंज्वलंतंब्रह्मतेजसा ॥ ९ ॥ रत्नकेयूरव
लयरत्नमंजीररंजितम् ॥ रत्नकुंडलयुग्माभ्यांस्वकपोलस्थलोज्ज्वलम् ॥१०॥ कोटिकंदर्पलावण्यंलीलाधाममनोहरम् ॥
चंदनागुरुकस्तूरीकुंकुमार्चितविग्रहम् ॥ ११ ॥ पारिजातप्रसूनानांमालाजालैर्विभूषितम् ॥ नवीननीरदश्यामंप्रोद्भिन्न
नवयौवनं ॥ १२ ॥ मालतीमाल्यसंयुक्तंमयूरपिच्छचूडकम् ॥ स्वांगसौंदर्यदीप्त्याचकृतभूषणभूषितम् ॥ १३ ॥ शरत्पा
र्वणचंद्रस्यप्रभामुष्टास्यसुंदरम् ॥ पक्वबिंबाधरौष्ठंचखगेंद्रचंचुनासिकम् ॥ १४ ॥ शरन्मध्यान्हपद्मानांप्रभामोचनलो

चनम् ॥ मुक्तापंक्तिविनिंद्यैकदंतपंक्तिमनोहरम् ॥ १५॥ कौस्तुभेनमणींद्रेणवक्षस्थलसमुज्वलम् ॥ शांतंचराधिकाकां
तंपरिपूर्णतमंपरम् ॥ १६ ॥ एवंभूतंप्रभुंदृष्ट्वाप्रणनामातिविस्मितः ॥ दर्शंदर्शमीश्वरंतंप्रणनामपुनःपुनः ॥ १७॥ यद्दृष्टंत्द्द
दयांभोजेतद्रूपंबहिरेवच ॥ यामूर्तिःपुरतोदृष्ट्वासापश्चात्परितस्ततः ॥ १८ ॥ तत्रवृंदावनेसर्वंदृष्ट्वाकृष्णसमंमुने ॥ ध्यायं
ध्यायंचतद्रूपंतत्रतस्थौजगद्गुरुः ॥ १९ ॥ गावोवत्साश्चबालाश्चलतागुल्माश्चवीरुधः ॥ सर्ववृंदावनंब्रह्माश्यामरूपंददर्श
ह ॥ २० ॥ दृष्ट्वैवंपरमाश्चर्यंपुनर्ध्यानंचकारह ॥ ददर्शत्रिजगद्ब्रह्मानान्यत्कृष्णंविनामुने ॥ २१ ॥ क्वचवृक्षःक्ववाशैलःक्व
महीक्वचसागराः ॥ क्वदेवाःक्वचगंधर्वामुनींद्राःक्वचमानवाः ॥ २२ ॥ क्वचात्माक्वजगद्बीजंक्वस्वर्गःक्वायमेवच ॥ सर्वंचस्व
दृशाब्रह्मादद‍र्शमाययाहरेः ॥ २३ ॥ क्वकृष्णोजगतांनाथःक्ववामायाविभूतयः ॥ सर्वंकृष्णमयंदृष्ट्वाकिंचिन्निर्वक्तुमक्ष
मः ॥ २४ ॥ किंस्तौमिकिंकरोमीतिमनसैवंप्रगृह्यच ॥ तत्रस्थित्वाजगद्धाताजपंकर्तुंसमुद्यतः ॥ २५ ॥ सुखंयोगासनंकृ
त्वाबभूवसंपुटांजलिः ॥ पुलकांकितसर्वांगःसाश्रुनेत्रोतिदीनवत् ॥ २६ ॥ इडांसुषुम्नांमध्यांचापिंगलांनलिनींधुराम् ॥ नाडी
षट्कंचयोगेननिबद्धयचप्रयत्नतः ॥ २७ ॥ मूलाधारंस्वाधिष्ठानंमणिपूरमनोहरम् ॥ विशुद्धंपरमाज्ञाख्यंषट्चक्रंचनि
बद्धयच ॥ २८ ॥ लंघनंकारयित्वाचतंषट्चक्रंक्रमाद्विधिः ॥ ब्रह्मरंध्रंसमानीयवायुबंधंचकारह ॥ २९॥ निबध्यवायुंम
ध्यांतामानीयत्द्दयांबुजम् ॥ तंवायुंभ्रामयित्वाचयोजयामासमध्यया ॥ ३० ॥ एवंकृत्वातुनिष्पंदोयोदत्तोहरिणा
पुरा ॥ जजापपरमंमंत्रंतस्यैवचदशाक्षरम् ॥ ३१ ॥ मुहूर्तंचजपंकृत्वाध्यायंध्यायंपदांबुजम् ॥ ददर्शत्द्दयांभोजेसर्वंते
जोमयंमुने ॥ ३२ ॥ तत्तेजसोंतरेरूपमतीवसुमनोहरम् ॥ द्विभुजंमुरलीहस्तंभूषितंपीतवाससा ॥ ३३ ॥ श्रुतिमूलस्थलन्य

स्तज्वलन्मकरकुंडलम् ॥ ईषद्धास्यप्रसन्नास्यंभक्तानुग्रहकातरम् ॥ ३४ ॥ यद्दृष्टंब्रह्मरंध्रेचत्द्ददितद्बहिरेवच ॥ दृष्ट्वाचप
रमाश्चर्यंतुष्टावपरमेश्वरम् ॥ ३५ ॥ यत्स्तोत्रंचपुरादत्तंहरिणैकार्णवेमुने ॥ तमीशंतेनविधिनाभक्तिनम्रात्मकंधरः ॥३६॥
॥ ब्रह्मोवाच ॥ ॥ सर्वस्वरूपंसर्वेशंसर्वकारणकारणम् ॥ सर्वानिर्वचनीयंतंनमामिशिवरूपिणम् ॥ ३७॥ नवीनजलदा
कारंश्यामसुंदरविग्रहम् ॥ स्थितंजंतुषुसर्वेषुनिर्लिप्तंसाक्षिरूपिणम् ॥ ३८ ॥ स्वात्मारामंपूर्णकामंजगद्व्याप्यपिजगत्पर
म् ॥ सर्वस्वरूपंसर्वेषांबीजरूपंसनातनम् ॥ ३९ ॥ सर्वाधारंसर्ववरंसर्वशक्तिसमन्वितम् ॥ सर्वाराध्यंसर्वगुरुंसर्वमंगलका
रणं ॥४०॥ सर्वमंत्रस्वरूपंचसर्वसंपत्करंवरं ॥ शक्तियुक्तमयुक्तंचस्तौमिस्वेच्छामयंविभुं ॥४१॥ शक्तीशंशक्तिबीजंचश
क्तिरूपधरंवरं ॥ संसारसागरेघोरेशक्तिनौकासमन्वितं ॥ ४२ ॥ कृपालुंकर्णधारंचनमामिभक्तिवत्सलं ॥ आत्मस्वरूपमे
कांतंलिप्तंनिर्लिप्तमेवच ॥ ४३॥ सगुणंनिर्गुणंब्रह्मस्तौमिस्वेच्छास्वरूपिणं ॥ सर्वेंद्रियादिदेवंतमिंद्रियालयमेवच ॥४४॥ स
र्वेंद्रियस्वरूपंचविराड्रूपंनमाम्यहं ॥ वेदेचदेवजनकंसर्ववेदांगरूपिणम् ॥ ४५॥ सर्वमंत्रस्वरूपंचनमामिपरमेश्वरं ॥ सारा
त्सारतरंद्रव्यमपूर्वमनिरूपिणं ॥ ४६ ॥ स्वतंत्रमस्वतंत्रंचयशोदानंदनंभजे ॥ सतंसर्वशरीरेषुतमदृष्टमनूहकं ॥ ४७॥ ध्या
नासाध्यंविद्यमानंयोगींद्राणांगुरुंभजे ॥ रासमंडलमध्यस्थंरासोल्लाससमुत्सुकम् ॥ ४८॥ गोपीभिःसेव्यमानंचतंधरेशं
नमाम्यहम् ॥ सतांसदैवसंतंतमसंतमसतामपि ॥ ४९ ॥ योगीशंयोगसाध्यंचनमामिशिवसेवितं ॥ मंत्रबीजंमंत्रराजंम
त्रदंफलदंफलम् ॥ ५० ॥ मंत्रसिद्धिस्वरूपंतंनमामिचपरात्परम् ॥ सुखंदुःखंचसुखदंदुःखदंपुण्यमेवच ॥ ५१॥ पुण्य
प्रदंचशुभदंशुभबीजंनमाम्यहं ॥ इत्येवंस्तवनंकृत्वादत्वागाश्चसबालकान् ॥ ५२॥ निपत्यदंडवद्भूमौरुरोदप्रणनामच ॥

ददर्शचक्षुरुन्मील्यविधाताजगतांमुने ॥ ५३ ॥ ब्रह्मणाचकृतंस्तोत्रंनित्यंभक्त्याचयःपठेत् ॥ इहलोकेसुखंभुक्त्वाया
त्यंतेश्रीहरेःपदं ॥ लभतेदास्यमतुलंस्थानमीश्वरसन्निधौ ॥ लब्ध्वाचकृष्णसान्निध्यंपार्षदप्रवरोभवेत् ॥ ५५ ॥ श्रीनारा
यणउवाच ॥ गतेजगत्कारणेचब्रह्मलोकेचब्रह्मणि ॥ श्रीकृष्णोबालकैःसार्धंजगामस्वालयंविभुः ॥ ५६ ॥ गावोवत्सा
श्चबालाश्चजग्मुर्वर्षांतरेगृहं ॥ श्रीकृष्णमाययासर्वेमेनिरेतेदिनांतरं ॥ ५७ ॥ गोपागोपालिकाःकिंचित्तत्कर्तुंनक्षमास्तदा ॥
योगिनःकृत्रिमंसर्वंकिंनूत्नंवापुरातनम् ॥ ५८ ॥ इत्येवंकथितंसर्वंश्रीकृष्णचरितंशुभं ॥ सुखदंमोक्षदंपुण्यंसर्वकामसु
खावहम् ॥ इतिश्रीब्रह्म॰महा॰गोवत्सबालकहरणप्रस्तावोनामविंशोऽध्यायः ॥ २० ॥ ॥ श्रीनारायणउवाच ॥ एकदानं
दयुक्तश्चनंदोगोपव्रजेमुने ॥ दुंदुभिंवादयामासशक्रयागकृतोद्यमः ॥ १ ॥ दधिक्षीरंघृतंतक्रंनवनीतंगुडंमधु ॥ एतान्या
दायशक्रस्यपूजांकुर्वंत्वितिब्रुवन् ॥ येयेसंत्यत्रनगरेगोपागोप्यश्चबालकाः ॥ बालिकाश्चद्विजाभूयोवैश्याःशूद्राश्चभ
क्तितः ॥ ३ ॥ इत्येवंश्रावयामासस्वयमेवमुदान्वितः ॥ यष्टिमारोपयामासरम्यस्थानेसुविस्तृते ॥ ४ ॥ ददौतत्रक्षौमव
स्त्रंमालाजालंमनोहरम् ॥ चंदनागुरुकस्तूरीकुंकुमद्रवमेवच ॥ ५ ॥ स्नातःकृताह्निकोभक्त्याधृत्वाधौतेचवाससी ॥ उवा
सस्वर्णपीठेचप्रक्षालितपदांबुजः ॥ ६ ॥ नानाप्रकारपात्रैश्चब्राह्मणैश्चपुरोहितैः ॥ गोपालैर्गोपिकाभिश्चबालाभिःसहबा
लकैः ॥ ७ ॥ एतस्मिन्नंतरेतत्राजग्मुर्नगरवासिनः ॥ महासंभृतसंभारानानोपायनसंयुताः ॥ ८ ॥ आजग्मुर्मुनयःसर्वे
ज्वलंतंब्रह्मतेजसा ॥ शांताःशिष्यगणैःसार्धंवेदवेदांगपारगाः ॥ ९ ॥ गर्गश्चगालवश्चैवशाकल्यःशाकटायनः ॥ गौतमःकरु
षःकण्वोवात्स्यःकात्यायनस्तथा ॥ १० ॥ सौभरिर्वामदेवश्चयाज्ञवल्क्यश्चपाणिनिः ॥ ऋष्यशृंगोगौरमुखोभरद्वाजश्च

वामनः ॥ ११ ॥ कृष्णद्वैपायनःश्रृंगीसुमंतुर्जैमिनिःकचः ॥ पराशरश्चमैत्रेयोवैशंपायनएवच ॥ १२ ॥ ब्राह्मणाश्चकति
विधाभिक्षुकाबंदिनस्तथा ॥ भूपावैश्याश्चशूद्राश्चसमाजग्मुर्महोत्सवे ॥ १३ ॥ दृष्ट्वामुनींद्रान्नंदश्चब्राह्मणान्भूमिपांस्त
था ॥ स्वर्णपीठात्समुत्तस्थौव्रजाश्चोत्तस्थुरेवच ॥१४॥ प्रणम्यवासयामासमुनींद्रान्विप्रभूमिपान्॥ तेषामनुमतिंप्राप्य
तत्रावोसपुनर्मुदा ॥ १५ ॥ पाकंचयष्टिनिकटेकर्तुमाज्ञांचकारह ॥ पाकप्राज्ञंब्राह्मणानांशतमानीयसादरम् ॥ १६ ॥ त
त्ररत्नप्रदीपाश्चजज्वलुःपरितस्तथा ॥ अंधीभूतंचधूपेनस्थानंतत्सुरभीकृतं ॥ १७ ॥ नानाविधानिपुष्पाणिमाल्यानिवि
विधानिच ॥ नैवेद्यंचबहुविधमपूर्वंसुमनोहरं ॥ १८ ॥ तिललड्डुकपूर्णंचमंडकानांसहस्रकं ॥ स्वस्तिकैःपरिपूर्णंचयष्टिस्था
नंचनारद ॥ १९ ॥ कलशानांसहस्रंचपूर्णंशर्करयामुने ॥ यवगोधूमचूर्णानांलड्डुकैर्मधुरैर्वरैः ॥ २० ॥ घृतपक्वैर्विप्रकृतैः
पूर्णानिकलशानिच ॥ वृक्षपक्वानिरम्याणिचारुरंभाफलानिच ॥ २१ ॥ फलानिपरिपक्वानिकालदेशोद्भवानिच ॥ क्षी
राणांकुंभलक्षाणिदध्नांतावंतिनारद॥ २२ ॥ मधूनांकुंभशतकंसर्पिःकुंभसहस्रकं ॥ कलशानांत्रिलक्षाणितक्रपूर्णानिनिश्चि
तम् ॥ २३ ॥ घटानांपंचलक्षाणिगुडपूर्णानिनिश्चितं ॥ विष्णुतैलेनपूर्णंचकलशानांसहस्रकं ॥२४॥ वृषेंद्राश्चबहुविधाओ
गार्हद्रव्यवाहकाः ॥ नानाविधानिपात्राणिसौवर्णराजतानिच ॥ २५ ॥ स्वर्णपीठानिचब्रह्मन्नाजग्मुर्यष्टिसन्निधिं ॥ व
स्त्राणिवरणार्हाणिचारूणिभूषणानिच ॥ २६ ॥ नानविधानिवाद्यानिचारूणिमधुराणिच ॥ वादकाःशरयंत्राणिवाद
यामासुरुत्सवे ॥२७॥ छागलानांसहस्राणिमहिषाणांशतानिच ॥ मेषकाणांचलक्षाणिह्यानयामासतत्रवै ॥ २८ ॥ गा
यनानांचसंगीतंनर्तकानांचनर्तनं ॥ श्रुत्वादृष्ट्वाजनाःसर्वेमुमुहुःसुमहोत्सवे ॥ २९ ॥ रंभोर्वशीमेनकाचघृताचीमोहिनीर

ती ॥ प्रभावतीभानुमतीविप्रचित्तिस्तिलोत्तमा ॥ ३० ॥ चंद्रप्रभासुप्रभाचरत्नमालामदालसा ॥ रेणुकारमणीब्रह्मन्नेता
आजग्मुरुत्सवे ॥ ३१ ॥ तासांनृत्येनगीतेनस्तनास्यश्रोणिदर्शनात् ॥ रूपेणवक्रदृष्ट्याचमूर्छांप्रापुश्चमानवाः ॥ ३२ ॥ ए
तस्मिन्नंतरेशीघ्रमाजगामहरिःस्वयम् ॥ गोपालबालकैःसार्धंबलेनबलशालिना ॥ ३३ ॥ दृष्ट्वातंचजनाःसर्वेसंभ्रांताहर्ष
विह्वलाः ॥ उत्तस्थुराराद्गीताश्चपुलकांकितविग्रहाः ॥ ३४ ॥ क्रीडास्थानात्समायांतंशांतंसुंदरविग्रहम् ॥ विनोदमुर
लीवेणुशृंगशब्दसमन्वितम् ॥ ३५ ॥ सद्रत्नसारभूषाभिर्भूषितंकौस्तुभेनच ॥ चंदनागुरुपंकेनचर्चितंश्यामविग्रहम् ॥
॥ ३६ ॥ शरन्मध्यान्हपद्मास्यंपश्यंतंरत्नदर्पणे ॥ चारुचंदनचंद्रेणकस्तूरीबिंदुनासह ॥ ३७ ॥ शशांकेनयथाकाशंभा
लमध्यविराजितम् ॥ मालतीमालयाश्यामकंठवक्षःस्थलोज्ज्वलम् ॥ ३८ ॥ बकपंक्त्यायथाकाशंशारदीयंसुनिर्मलम्
॥ चारुणापीतवस्त्रेणशोभितंश्यामविग्रहम् ॥ ३९ ॥ विभांतंविद्युताश्वन्नवीनंनीरदंयथा ॥ कुंदप्रसूनैर्गुंजाभिर्बद्धव
क्रिमचूडकम् ॥ ४० ॥ यथेंद्रधनुषाभातिविभांतंभगणैर्नभः ॥ रत्नकुंडलदीप्त्याचस्मितवक्त्रंसुशोभितम् ॥ ४१ ॥
शरत्प्रफुल्लपद्मंचद्युमणेःकिरणैर्यथा ॥ विप्रक्षत्रियवैश्याश्चमुनयोवल्लवामुने ॥ ४२ ॥ प्रणम्यवासयामासरत्नसिंहास
नेशुभे ॥ उवासरत्नपीठेसतेषांमध्येजगत्पतिः ॥ ४३ ॥ यथावभौशरच्चंद्रोज्योतिषामंतरेचखे ॥ श्रुत्वातमूचुस्तेसर्वेज
गतामीश्वरंपरम् ॥ ४४ ॥ स्वेच्छामयंगुणातीतंज्योतीरूपंसनातनम् ॥ दृष्ट्वामहोत्सवंशीघ्रमुवाचपितरंहरिः ॥ ४५ ॥
सर्वेषांदुर्लभांनीतिंनीतिशास्त्रविशारदः ॥ ॥ श्रीकृष्णउवाच ॥ ॥ भोभोवल्लवराजेंद्रकिंकरोषीहसुव्रत ॥ ४६ ॥ आ
राध्यःकश्चकापूजाकिंफलंपूजनेभवेत् ॥ फलेनसाधनंकिंवाकःसाध्यःसाधनेनच ॥ ४७ ॥ देवेरुष्टेभवेत्किंवापूजायाः

प्रतिबंधके ॥ तुष्टोदेवःकिंददातिफलमत्रपरत्रकम् ॥ ४८ ॥ काचिद्ददात्यत्रफलंपरत्रेनेहकाचन ॥ काचिच्चनोभयत्रा
पिचोभयत्रापिकाचन ॥ ४९ ॥ अवेदविहितापूजासर्वहानिकरंडिका ॥ पूजेयमधुनावातेकिमुवापुरुषक्रमात् ॥ ५० ॥
दृष्टोदेवस्त्वयाकस्मिन्पूजेयंचानुसारिणी ॥ साक्षात्खादतिदेवस्तेवासाक्षात्किंनखादति ॥ ५१ ॥ साक्षाद्भुंक्तेचयोदेवःसु
प्रशस्तंतदर्चनम् ॥ साक्षात्खादतिनैवेद्यंविप्ररूपीजनार्दनः ॥ ५२ ॥ ब्राह्मणेपरितुष्टेचसंतुष्टाःसर्वदेवताः ॥ किंतस्यदेव
पूजायांयोनियुक्तोद्विजार्चने ॥ ५३ ॥ पूजिताब्राह्मणायेनपूजिताःसर्वदेवताः ॥ देवायदत्वानैवेद्यंद्विजायनप्रयच्छ
ति ॥ ५४ ॥ भस्मीभूतंचनैवेद्यंपूजनंनिष्फलंभवेत् ॥ विप्रायदेवनैवेद्यंदानाद्ध्रुवमनंतकम् ॥ ५५ ॥ तुष्टोदेवोवरंदत्वाप्र
यातिचस्वमंदिरम् ॥ दत्वादेवायनैवेद्यंमूढोभुंक्तेस्वयंयदि ॥ ५६ ॥ दत्तापहारीदेवस्वंभुक्त्वाचनरकंव्रजेत् ॥ देवदत्तंनभो
क्तव्यंनैवेद्यंचविनाहरेः ॥ ५७ ॥ प्रशस्तंसर्वदेवेषुविष्णुनैवेद्यभोजनम् ॥ अन्नंविष्ठाजलंमूत्रंयद्विष्णोरनिवेदितम् ॥ ५८ ॥
सर्वेषांचक्रमिदंब्राह्मणानांविशेषतः ॥ नदत्वावस्तुदेवायदत्तंविप्रायचेत्सुधीः ॥ ५९ ॥ भुक्त्वाविप्रमुखेदेवास्तुष्टाःस्व
र्गंप्रयांतिच ॥ तस्मात्सर्वप्रयत्नेनविप्राणामर्चनंकुरु ॥ ६० ॥ प्रशस्तफलदातॄणामिहलोकेपरत्रच ॥ जपस्तपश्चपूजा
यायज्ञदानंमहोत्सवम् ॥ ६१ ॥ सर्वेषांकर्मणांसारंविप्रतुष्टिश्चदक्षिणा ॥ ब्राह्मणानांशरीरेषुतिष्ठंतिसर्वदेवताः ॥ ६२ ॥
पादेषुसर्वतीर्थानिपुण्यानिपादधूलिषु ॥ पादोदकेचविप्राणांतीर्थतोयानिसंतिच ॥ ६३ ॥ तत्स्पर्शात्सर्वतीर्थेषुस्नानज
न्यफलंलभेत् ॥ नश्यंतिभक्षणाद्रोगाभक्तिभावेनवल्लव ॥ ६४ ॥ सप्तजन्मकृतात्पापान्मुच्यंतेनात्रसंशयः ॥ पापंपंच
विधंकृत्वायोविप्रंप्रणमेद्व्रज ॥ ६५ ॥ सस्नातःसर्वतीर्थेषुसर्वपापात्प्रमुच्यते ॥ ब्राह्मणस्पर्शमात्रेणमुक्तोभवतिपातकी

॥ ६६ ॥ दर्शनान्मुच्यतेपापादितिवेदेनिरूपितम् ॥ अप्राज्ञोवाथप्राज्ञोवाब्राह्मणोविष्णुविग्रहः ॥ ६७ ॥ प्रियाःप्राणाधि
काविष्णोर्येविप्राहरिसेविनः ॥ द्विजानांहरिभक्तानांप्रभावोदुर्लभःश्रुतौ ॥ ६८ ॥ येषांपादाब्जरजसासद्यःपूतावसुंधरा ॥
तेषांचपादचिन्हंयत्तीर्थंतत्परिकीर्तितं ॥ ६९ ॥ तेषांचस्पर्शमात्रेणतीर्थपापंप्रणश्यति ॥ आलिंगनात्सदालापात्तेषामुच्छि
ष्टभोजनात् ॥ ७० ॥ दर्शनात्स्पर्शनाच्चैवसर्वपापात्प्रमुच्यते ॥ भ्रमणेसर्वतीर्थानांयत्पुण्यंस्नानतोभवेत् ॥ ७१ ॥ हरिदा
सस्यविप्रस्यतत्पुण्यंदर्शनाल्लभेत् ॥ येविप्राहरयेदत्वानित्यमन्नंचभुंजते ॥ ७२ ॥ उच्छिष्टभोजनात्तेषांहरेर्दास्यंलभेन्न
रः ॥ नदत्वाहरयेभक्त्याभुंजतेचेद्भ्रमादपि ॥ ७३ ॥ पुरीषसदृशंवस्तुजलंमूत्रसमंभवेत् ॥ शूद्रश्चेद्धरिभक्तश्चनैवद्यभोज
नोत्सुकः ॥ ७४ ॥ आमान्नंहरयेदत्वापाकंकृत्वाचखादति ॥ विप्रक्षत्रियवैश्यानांशालग्रामशिलार्चने ॥ ७५ ॥ अधिका
रोनशूद्राणांहरेरप्यर्चनेतथा ॥ द्रव्याण्येतानिगोपेंद्रविप्रेभ्यश्चेन्नदास्यति ॥ ७६ ॥ भस्मीभूतानिसर्वाणिभविष्यंतिनसं
शयः ॥ अन्नंचसर्वजीवेभ्यःपुण्यार्थंदातुमर्हति ॥ ७७ ॥ दत्वाविशिष्टजीवेभ्योविशिष्टंफलमाप्नुयात् ॥ अतोदत्वामानु
षेभ्योलभतेष्टगुणंफलं ॥ ७८ ॥ शूद्राणांद्विगुणंपुण्यंवैश्येभ्योन्नंप्रदायच ॥ दत्वान्नंक्षत्रियेभ्योपिवैश्यानांद्विगुणंभवे
त् ॥ क्षत्रियाणांशतगुणंविप्रेभ्योन्नंप्रदायच ॥ ७९ ॥ विप्राणांचशतगुणंशास्त्रज्ञेब्राह्मणेफलम् ॥ शास्त्रज्ञानांशतगुणं
भक्तेविप्रेलभेत्ध्रुवं ॥ ८० ॥ सचान्नंहरयेदत्वाभुंक्तेभक्त्याचसादरम् ॥ विष्णवेविप्रभक्तायदत्वादातुश्चयत्फलम् ॥ ८१ ॥
तत्फलंलभतेनूनंभक्तब्राह्मणभोजने ॥ भक्तेतुष्टेहरिस्तुष्टोहरौतुष्टेचदेवताः ॥ ८२ ॥ भवंतिसिद्धाःशाखाश्चयथामूलनिषे
चनात् ॥ द्रव्याण्येतानिदेवाययद्येकस्मैप्रयच्छति ॥ ८३ ॥ सर्वेदेवाश्चरुष्टाश्चेद्देवैकःकिंकरिष्यति ॥ अथवार्द्धंचवस्तूनांदे

कृ.ज.पू.
॥ ७३ ॥

अ०२०

हिगोवर्धनायच ॥ ८४ ॥ गावर्धयतिनित्यंयस्तेनगोवर्धनःस्मृतः ॥ गोवर्धनसमस्तातपुण्यवान्नमहीतले ॥ ८५ ॥ नि
त्यंददातिगोभ्योयोनवीनानितृणानिच ॥ तीर्थस्नानेषुयत्पुण्यंयत्पुण्यंविप्रभोजने ॥ ८६ ॥ सर्वव्रतोपवासेषुसर्वेष्वेव
तपःसुच ॥ यत्पुण्यंचमहादानेयत्पुण्यंहरिसेवने ॥ ८७ ॥ भुवःपर्यटनेयत्तुसर्ववाक्येषुयद्भवेत् ॥ यत्पुण्यंसर्वयज्ञेषुदीक्षा
यांचलभेन्नरः ॥ ८८ ॥ तत्पुण्यंलभतेप्राज्ञोगोभ्योदत्वातृणानिच ॥ भुक्तवंतींतृणंयश्चगांवारतिकामतः ॥ ८९ ॥ ब्रह्म
हत्याभवेत्तस्यप्रायश्चित्ताद्विशुध्यति ॥ सर्वेदेवागवामंगेतीर्थानितत्पदेषुच ॥ ९० ॥ तद्गुह्येषुस्वयंलक्ष्मीस्तिष्ठंत्येवस
दापितः ॥ गोष्पदाक्तमृदायोहितिलकंकुरुतेनरः ॥ ९१ ॥ तीर्थस्नातोभवेत्सद्योजयस्तस्यपदेपदे ॥ गावस्तिष्ठंतियत्रैवत
त्तीर्थंपरिकीर्तितम् ॥ ९२ ॥ प्राणांस्त्यक्त्वानरस्तत्रसद्योमुक्तोभवेद्ध्रुवं ॥ ब्राह्मणानांगवामंगंयोहंतिमानवाधमः ॥ ९३ ॥
ब्रह्महत्यासमंपापंभवेत्तस्यनसंशयः ॥ नारायणांशान्विप्रांश्चगाश्चयेघ्नंतिमानवाः ॥ ९४ ॥ कालसूत्रंचतेयांतियावच्चं
द्रदिवाकरौ ॥ इत्येवमुक्त्वाश्रीकृष्णोविररामचनारद ॥ ९५ ॥ आनंदयुक्तोनंदश्चतमुवाचस्मिताननः ॥ ॥ नंदउवाच ॥
पौर्वापरीयंपूजेतिमहेंद्रस्यमहात्मनः ॥ ९६ ॥ सुवृष्टिसाधनीसाध्यंसर्वसस्यमनोहरम् ॥ सस्यानिप्राणिनांप्राणाःस
स्याज्जीवंतिजीविनः ॥ ९७ ॥ पूजयंतिव्रजस्थाश्चमहेंद्रंपुरुषक्रमात् ॥ महोत्सवंवत्सरांतेनिर्विघ्नायशिवायच ॥ ९८ ॥
इत्येवंवचनंश्रुत्वाबलेनसहमाधवः ॥ उच्चैर्जहाससपुनरुवाचपितरंमुदा ॥ ९९ ॥ श्रीकृष्णउवाच ॥ ॥ अहोश्रुतंविचित्रं
तेवचनंपरमाद्भुतम् ॥ उपहास्यंलोकशास्त्रेवेदेष्वेवविगर्हितम् ॥ १०० ॥ निरूपणंनास्तिकुत्रशक्राद्वृष्टिःप्रजायते ॥ अ
पूर्वंनीतिवचनंश्रुतमद्यमुखात्तव ॥ १ ॥ शृणुनीतिंश्रुतिमतांहेतातननानयंवदे ॥ वचनंसामवेदोक्तंसंतोजानंतिसर्वतः ॥ २ ॥

॥ ७३ ॥

प्रश्नंकुरुष्वमंत्रांश्चविविधानपिसंसदि ॥ ब्रुवंतुपरमार्थंचकिमिंद्राद्दृष्टिरेवच ॥ ३ ॥ सूर्याद्धिजायतेतोयंतोयात्सस्यानि
शाखिनः ॥ तेभ्योन्नानिफलान्येवतेभ्योजीवंतिजीविनः ॥ ४ ॥ सूर्यग्रस्तंचनीरंचकालेतस्मात्समुद्भवः ॥ सूर्योमेघाद
यःसर्वेविधात्रातेनिरूपिताः ॥ ५ ॥ यत्राब्देयोजलधरोगजश्चसागरोमतः ॥ सस्याधिपोनृपोमंत्रीविधात्रातेनिरूपिताः
॥ ६ ॥ जलाढकानांसस्यानांतृणानांचनिरूपितम् ॥ अब्देऽब्देस्त्यवतत्सर्वंकल्पेकल्पेयुगेयुगे ॥ ७ ॥ हस्तीसमुद्रादादा
यकरेणजलमीप्सितम् ॥ दद्याद्घनायतद्दद्याद्वातेनप्रेरितोघनः ॥ ८ ॥ स्थानेस्थानेपृथिव्यांचकालेकालेयथोचितम् ॥
ईशेच्छयाविर्भूतंचनभवेत्प्रतिबंधकम् ॥ ९ ॥ भूतंभव्यंभविष्यच्चमहत्क्षुद्रंचमध्यमम् ॥ धात्रानिरूपितंकर्मकेनताततनि
वार्यते ॥ ११० ॥ जगच्चराचरंसर्वंकृतंतेनेश्वराज्ञया ॥ आदौविनिर्मितंभक्ष्यंपश्चाज्जीवइतिस्मृतः ॥ ११ ॥ अभ्यासात्स
स्वभावोहिस्वभावात्कर्मएवच ॥ जायतेकर्मणांभोगोजीविनांसुखदुःखयोः ॥ १२ ॥ यातनाजन्ममरणरोगशोकभया
निच ॥ समुत्पत्तिविपद्विघाकवितावायशोयशः ॥ १३ ॥ पुण्यंचस्वर्गवासश्चपापंनरकसंस्थितिः ॥ भुक्तिर्मुक्तिर्हरेर्दास्यंक
र्मणाघटतेनृणाम् ॥ १४ ॥ सर्वेषांजनकोहीशश्चाभ्यासःशीलकर्मणां ॥ धातुश्चफलदाताचसर्वेतस्येच्छयाभवे ॥ १५ ॥
विनिर्मितेविराड्येनतत्वानिप्रकृतिर्जगत् ॥ कूर्मश्चशेषधरणिचाब्रह्मस्तंभएवच ॥ १६ ॥ यस्याज्ञयामरुत्कूर्मंधत्तेशेषंबि
भर्तिसः ॥ शेषोवसुंधरांमूर्ध्नासाचसर्वंचराचरम् ॥ १७ ॥ यस्याज्ञयासदापातिजगत्प्राणोजगत्त्रये ॥ तपतिभ्रमणंकृ
त्वाभूगोलंसुप्रभाकरः ॥ १८ ॥ महत्यग्निःसंचरतेमृत्युश्चसर्वजंतुषु ॥ उत्पत्तिःशाखिनांकालेपुष्पाणिचफलानिच ॥ १९ ॥
स्वेस्वेस्थानेसमुद्राश्चतूर्णमज्जंत्यधोधुना ॥ तमीशंभजभक्त्याचशक्रःकिंकर्तुमीश्वरः ॥ १२० ॥ ब्रह्मांडंचकतिविधमावि

भूतंतिरोहितम् ॥ विधेयाश्चकतिविधायस्यभ्रूभंगलीलया ॥ २१ ॥ मृत्योर्मृत्युःकालकालोविधातुर्विधिरेवसः ॥ भ
जतंशरणंतातसतेरक्षांकरिष्यति ॥ २२ ॥ अहोष्टाविंशदिंद्राणांपतनेयदहर्निशम् ॥ विधातुरेवजगतामष्टोत्तरशताधिकः
॥ २३ ॥ निमेषाद्यस्यपतनंनिर्गुणस्यात्मनःप्रभोः ॥ एवंभूतेतिष्ठतीशेशक्रपूजाविडंबनं ॥ २४ ॥ इत्येवमुक्त्वाश्रीकृष्णोविर
रामचनारद ॥ प्रशशंसुश्चमुनयोभगवंतंसभासदः ॥ २५ ॥ नंदःसपुलकोत्हृष्टःसभार्यांसाश्रुलोचनः ॥ आनंदयुक्तामनुजा
यदिपुत्रैःपराजिताः ॥ २६ ॥ श्रीकृष्णाज्ञांसमाज्ञायचकारस्वस्तिवाचनं ॥ क्रमेणवरणंतत्रसर्वेषांचचकारह ॥ २७ ॥ पर्व
तस्यमुनींद्राणांचकारपूजनंमुदा ॥ बुधानांब्राह्मणानांचगवांवन्हेश्चसादरम् ॥ २८ ॥ तत्रपूजासमाप्तौचकृतौचसुमहो
त्सवे ॥ नानाप्रकारवाद्यानांबभूवशब्दउल्बणः ॥ २९ ॥ जयशब्दःशंखशब्दोहरिशब्दोबभूवह ॥ वेदमंगलकांडंचपपाठमुनि
पुंगवः ॥ ३० ॥ बंदीनांप्रवरोडिंडीकंसस्यसचिवःप्रियः ॥ उच्चैःपपाठपुरतोमंगलंमंगलाष्टकं ॥ ३१ ॥ कृष्णःशैलांतिकंगत्वा
भिन्नांमूर्तिविधायच ॥ वस्तुखादामिशैलोस्मिवरंवृणिवत्युवाचह ॥ ३२ ॥ उवाचनंदंश्रीकृष्णःपश्यशैलंपितःपुरः ॥ व
रंप्रार्थयभद्रंतेभविताचेत्युवाचह ॥ ३३ ॥ हरेर्दास्यंहरेर्भक्तिंवरंववेसबल्लवः ॥ द्रव्यंभुक्त्वावरंदत्वासोंतर्धानंचकारह ॥
॥ ३४ ॥ मुनींद्रान्ब्राह्मणांश्चैवभोजयित्वाचगोपपाः ॥ बंदिभ्योब्राह्मणेभ्यश्चमुनिभ्यश्चधनंददो ॥ ३५ ॥ मुनिभ्योब्रा
ह्मणेभ्योपिदत्वानंदोमुदान्वितः ॥ रामकृष्णौपुरस्कृत्यसगणःस्वालयंययौ ॥ ३६ ॥ रौप्यंवस्त्रंसुवर्णंचपरमश्वंमणिंतथा
राजानोबल्लवाःसर्वेचागतायेमहोत्सवे ॥ ३७ ॥ सर्वेप्रणम्यश्रीकृष्णंययुःसादरपूर्वकम् ॥ एतस्मिन्नंतरेशक्रःकोपप्रस्फु
रिताधरः ॥ ३८ ॥ मखभंगेबहुविधांनिंदांश्रुत्वासुरेश्वरः ॥ मरुद्भिर्वारिदैःसार्द्धंरथमारुह्यसत्वरम् ॥ ३९ ॥ जगामनंदनग

रंवृंदारण्यंमनोहरम् ॥ सर्वैदेवाययुःपश्चाद्युद्धशास्त्रविशारदाः ॥ ४० ॥ शस्त्रास्त्रपाणयःकोपाद्रथमारुह्यनारद ॥ वायुशब्दैर्मे
घशब्दैःसैन्यशब्दैर्भयानकैः ॥ ४१ ॥ चकंपेनगरंसर्वंनंदोभयमवापह ॥ भार्यांसंबोध्यस्वगणमुवाचशोककातरः ॥ ४२ ॥
रहस्थलंसमानीयनीतिशास्त्रविशारदः ॥ ॥ नंदउवाच ॥ ॥ हेयशोदेसमागच्छवचनंशृणुरोहिणि ॥ ४३ ॥ रामकृष्णौस
मादायव्रजदूरंव्रजात्प्रिये ॥ बालकाबालिकानार्योयांतुदूरंभयाकुलाः ॥ ४४ ॥ बलवंतश्चगोपालास्तिष्ठंतुमत्समीपतः ॥
पश्चाच्चनिर्गमिष्यामोवयंचप्राणसंकटात् ॥४५॥ इत्युक्त्वाबल्लवश्रेष्ठःसस्मारश्रीहरिंभिया ॥ पुटांजलियुतोभूत्वाभक्ति
नम्रात्मकंधरः ॥४६॥ काण्वशाखोक्तस्तोत्रेणतुष्टावहशचीपतिम् ॥ नंदउवाच ॥ इंद्रःसुरपतिःशक्रोदितिजःपवनाग्रजः
॥ ४७ ॥ सहस्राक्षोभगांगश्चकश्यपांगजएवच ॥ बिडौजाश्चशुनासीरोमरुत्वान्पाकशासनः ॥ ४८ ॥ जयंतजनकःश्रीमा
न्शचीशोदैत्यसूदनः ॥ वज्रहस्तःकामसखोगौतमीव्रतशासनः ॥ ४९ ॥ वृत्रहावासवश्चैवदधीचिदेहभिक्षुकः ॥ जिष्णुश्चवा
मनभ्रातापुरुहूतःपुरंदरः ॥ १५० ॥ दिवस्पतिःशतमखःसुत्रामागोत्रभिद्विभुः ॥ लेखर्षभोबलारातिर्जंभभेदीसुराश्रयः ॥
॥ ५१ ॥ संक्रंदनोदुश्च्यवनस्तुराषाण्मेघवाहनः ॥ अखंडलोहरिहयोनमुचिप्राणनाशनः ॥ ५२ ॥ वृद्धश्रवावृषश्चैवदैत्यद
र्पनिषूदनः ॥ षट्चत्वारिंशन्नामानिपापघ्नानिविनिश्चितम् ॥ ५३ ॥ स्तोत्रमेतत्कौथुमोक्तंनित्यंयदिपठेन्नरः ॥ महाविप
त्तौशक्रस्तंवज्रहस्तश्चरक्षति ॥ ५४ ॥ अतिवृष्टिशिलावृष्टिवज्रपाताच्चदारुणात् ॥ कदाचिन्नभयंतस्यरक्षितावासवःस्व
यं ॥ ५५ ॥ यत्रगेहेस्तोत्रमिदंयश्चजानातिपुण्यवान् ॥ नतत्रवज्रपतनंशिलावृष्टिश्चनारद ॥ ५६ ॥ श्रीनारायणउवाच
स्तोत्रंनंदमुखाच्छुत्वाचुकोपमधुसूदनः ॥५७॥ उवाचपितरंनीतिंप्रज्वलन्ब्रह्मतेजसा ॥ कंस्तौषिभीरोकोवेंद्रस्त्यजभीतिं

ममांतिके ॥ ५८ ॥ क्षणार्द्धं भस्मसात्कर्तुं क्षमो हमवलीलया ॥ गाश्चवत्सांश्चबालांश्चयोषितोहिभयातुराः ॥ ५९ ॥ गोवर्धनस्य
कुहरेसंस्थाप्यतिष्ठनिर्भयं ॥ बालस्यवचनंश्रुत्वातच्चकारमुदान्वितः ॥ ६० ॥ हरिर्दधारशैलंतंवामहस्तेनदंडवत् ॥ एतस्मिन्नं
तरेतत्रदीप्तोपिरत्नतेजसा ॥ ६१ ॥ अंधीभूतंचमहसाबभूवरजसावृतं ॥ सवातोमेघनिकरश्चकारोद्गमनंमुने ॥ ६२ ॥ वृंदावने
बभूवातिवृष्टिरेवनिरंतरं ॥ शिलावृष्टिर्वज्रवृष्टिरुल्कापातःसुदारुणः ॥ ६३ ॥ समस्तंपर्वतस्पर्शात्पतितंदूरतस्ततः ॥ विफल
स्तत्समारंभोयथानीशोद्यमोमुने ॥ ६४ ॥ दृष्ट्वामोघंचतत्सर्वंसद्यःशक्रश्चुकोपह ॥ जग्राहामोघकुलिशंदधीच्यस्थिविनि
र्मितं ॥ ६५ ॥ दृष्ट्वातंवज्रहस्तंचजहासमधुसूदनः ॥ सहस्तंस्तंभयामासवज्रमेवातिदारुणं ॥ ६६ ॥ सहामरगणंमोघंचका
रस्तंभनंविभुः ॥ सर्वेतस्थुर्निश्चलास्तेभित्तौपुत्तलिकायथा ॥ ६७ ॥ हरिणाजृंभितःशक्रःसद्यस्तंद्रामवापह ॥ ददर्शसर्वेतंद्रा
यांतत्रकृष्णमयंजगत् ॥ ६८ ॥ द्विभुजंमुरलीहस्तंरत्नालंकारभूषितं ॥ पीतवस्त्रपरीधानंरत्नसिंहासनस्थितं ॥ ६९ ॥ ईषद्धा
स्यप्रसन्नास्यंभक्तानुग्रहकातरं ॥ चंदनोक्षितसर्वांगमेतत्सर्वंचराचरं ॥ ७० ॥ दृष्ट्वाद्भुततमंतत्रसद्योमूर्छामवापह ॥ जजा
पमंत्रंतत्रैवप्रदत्तंगुरुणापुरा ॥ ७१ ॥ सहस्रदलपद्मस्थंददर्शज्योतिरुल्बणं ॥ तत्रांतरेदिव्यरूपमतीवसुमनोहरं ॥ ७२ ॥ न
वीनजलदोत्कर्षश्यामसुंदरविग्रहम् ॥ सद्रत्नसारनिर्माणज्वलन्मकरकुंडलम् ॥ ७३ ॥ ज्वलन्मुनींद्रमकरकिरीटोज्ज्वल
शेखरम् ॥ ज्वलताकौस्तुभेंद्रेणकंठवक्षस्थलोज्ज्वलम् ॥ ७४ ॥ मणिकेयूरवलयमणिमंजीररंजितम् ॥ अंतर्बहिःसमंदृष्ट्वा
तुष्टावपरमेश्वरम् ॥ ७५ ॥ इंद्रउवाच ॥ अक्षरंपरमंब्रह्मज्योतीरूपंसनातनम् ॥ गुणातीतंनिराकारंस्वेच्छामयमनंतकम्
॥ ७६ ॥ भक्तध्यानायसेवायैनानारूपधरंवरम् ॥ शुक्लरक्तपीतश्यामंयुगानुक्रमणेनच ॥ ७७ ॥ शुक्लतेजःस्वरूपंचसत्ये

सत्यस्वरूपिणं ॥ त्रेतायांकुंकुमाकारंज्वलंतंब्रह्मतेजसा ॥ ७८ ॥ द्वापरेपीतवर्णंचशोभितंपीतवाससा ॥ कृष्णवर्णंकलौ
कृष्णंपरिपूर्णतमंप्रभुं ॥ ७९ ॥ नवधाराधरोत्कृष्टश्यामसुंदरविग्रहम् ॥ नंदैकनंदनंवंदेयशोदानंदनंप्रभुं ॥ ८० ॥ गोपिका
चेतनहरंराधाप्राणाधिकंपरम् ॥ विनोदमुरलीशब्दंकुर्वंतंकौतुकेनच ॥ ८१ ॥ रूपेणाप्रतिमेनैवरत्नभूषणभूषितं ॥ कंदर्प
कोटिसौंदर्यंबिभ्रंतंशांतमीश्वरं ॥ ८२ ॥ क्रीडंतंराधयासार्धंवृंदारण्येचकुत्रचित् ॥ कुत्रचिन्निर्जनेरण्येराधावक्षस्थलस्थि
तं ॥ ८३ ॥ जलक्रिडांप्रकुर्वंतंराधयासहकुत्रचित् ॥ राधिकाकबरीभारंकुर्वंतंकुत्रचिद्वने ॥ ८४ ॥ कुत्रचिद्राधिकापादेदत्त
वंतमलक्तकं ॥ राधाचर्विततांबूलंगृह्णंतंकुत्रचिन्मुदा ॥ ८५ ॥ पश्यंतंकुत्रचिद्राधांपश्यंतींवक्रचक्षुषा ॥ दत्तवंतंचराधायै
कृत्वामालांचकुत्रचित् ॥ ८६ ॥ कुत्रचिद्राधयासार्धंगच्छंतंरासमंडलं ॥ राधादत्तांगलेमालांधृतवंतंचकुत्राचत् ॥ ८७ ॥
सार्धंगोपालिकाभिश्चविरहंतंचकुत्रचित् ॥ राधागृहीत्वागच्छंतंविहायतांचकुत्रचित् ॥ ८८ ॥ विप्रपत्नीदत्तमन्नंभुक्तवं
तंचकुत्रचित् ॥ भुक्तवंतंतालफलंबालकैःसहकुत्रचित् ॥ ८९ ॥ वस्त्रंगोपालिकानांचहरंतंकुत्रचिन्मुदा ॥ गवांगणंव्याह
रंतंकुत्रचिद्बालकैःसह ॥ ९० ॥ कालीयमूर्ध्निपादाब्जंदत्तवंतंचकुत्रचित् ॥ विनोदमुरलीशब्दंकुर्वंतंकुत्रचिन्मुदा ॥ ९१ ॥
गायंतंरम्यसंगीतंकुत्रचिद्बालकैःसह ॥ स्तुत्वाशक्रस्तवेंद्रेणप्रणनामहरिंभिया ॥ ९२ ॥ पुरादत्तेनगुरुणारणेवृत्रासुरेण
च ॥ कृष्णेनदत्तंकृपयाब्रह्मणेचतपस्यते ॥ ९३ ॥ एकादशाक्षरोमंत्रःकवचंसर्वलक्षणं ॥ दत्तमेतत्कुमाराय पुष्करेब्रह्मणा
पुरा ॥ ९४ ॥ कुमारोंगिरसेदत्तोगुरवेंगिरसामुने ॥ इदमिंद्रकृतंस्तोत्रंनित्यंभक्त्याचयःपठेत् ॥ ९५ ॥ इहप्राप्यदृढांभक्ति
मंतेदास्यंलभेत्ध्रुवं ॥ जन्ममृत्युजराव्याधिशोकेभ्योमुच्यतेनरः ॥ ९६ ॥ नहिपश्यतिस्वप्नेपियमदूतंयमालयं ॥ इंद्रस्य

वचनंश्रुत्वाप्रसन्नःश्रीनिकेतनः ॥ १७ ॥ प्रीत्यातस्मैवरंदत्वास्थापयामासपर्वतम् ॥ प्रणम्यचहरिंशक्रःप्रययौस्वगणैः
सह ॥ १८ ॥ गव्हरस्थाजनाःसर्वेप्रजग्मुर्गव्हराद्गृहं ॥ तेसर्वेमेनिरेकृष्णंपरिपूर्णतमंविभुं ॥ १९ ॥ पुरस्कृत्यव्रजस्थांश्चप्रय
यौस्वालयंहरिः ॥ ॥ नंदउवाच ॥ ॥ नमोब्रह्मण्यदेवायब्रह्मणेपरमात्मने ॥ २०० ॥ अनंतकोटिब्रह्मांडधामधाम्नेनमो
स्तुते ॥ नमोवत्सादिरूपाणांजीवरूपायसाक्षिणे ॥ १ ॥ निर्लिप्तायनिर्गुणायनिराकारायतेनमः ॥ अतिसूक्ष्मस्वरूपाय
स्थूलात्स्थूलतमायच ॥ २ ॥ सर्वेश्वरायसर्वायतेजोरूपनमोस्तुते ॥ अतिप्रत्यक्षरूपायध्यानसाध्याययोगिनाम् ॥ ३ ॥
ब्रह्मविष्णुमहेशानांवंद्यायनित्यरूपिणे ॥ धाम्नेचतुर्णांवर्णानांयुगेष्वेवचतुर्षुच ॥ ४ ॥ शुक्लरक्तपीतश्यामाभिधानगुण
शालिने ॥ योगिनेयोगरूपायगुरवेयोगिनामपि ॥ ५ ॥ सिद्धेश्वरायसिद्धायसिद्धानांगुरवेनमः ॥ यंस्तोतुमक्षमोब्रह्माvि
ष्णुर्यंस्तोतुमक्षमः ॥ ६ ॥ यंस्तोतुमक्षमोरुद्रःशेषोयंस्तोतुमक्षमः ॥ यंस्तोतुमक्षमोधर्मोयंस्तोतुमक्षमोरविः ॥ ७ ॥ यंस्तो
तुमक्षमोलंबोदरश्चापिषडाननः ॥ यंस्तोतुमक्षमाःसर्वेमुनयःसनकादयः ॥ ८ ॥ कपिलोनक्षमःस्तोतुंसिद्धेंद्राणांगुरोर्गुरुः ॥
नशक्तौस्तवनंकर्तुंनरनारायणावृषी ॥ ९ ॥ अन्येजडधियःकेवास्तोतुंशक्ताःपरात्परं ॥ वेदानशक्तानोवाणीनचलक्ष्मीः
सरस्वती ॥ १० ॥ नराधास्तवनेशक्ताःकिंस्तुवंतिविपश्चितः ॥ क्षमस्वनिखिलंब्रह्मन्नपराधंक्षणेक्षणे ॥ ११ ॥ रक्षमांकरुणा
सिंधोदीनबंधोभवार्णवे ॥ पुरातीर्थेतपस्तप्त्वापुत्रःप्राप्तःसनातनः ॥ १२ ॥ स्वकीयचरणांभोजेभक्तिंदास्यंचदेहिमे ॥ ब्रह्म
त्वममरत्वंवासालोक्यादिकमेववा ॥ १३ ॥ त्वत्पदांभोजदासस्यकलांनार्हंतिषोडशीं ॥ इंद्रत्वंवासुरत्वंवासंप्राप्तिंसिद्धिस्व
र्गयोः ॥ १४ ॥ राजत्वंचिरजीवित्वंसुधियोगणयंतिकिं ॥ एतद्यत्कथितंसर्वंब्रह्मत्वादिकमीश्वर ॥ १५ ॥ भक्तसंगक्षणा

द्धस्यनोपमातेकिमर्हति ॥ त्वद्भक्तोयस्त्वत्सदृशःकस्त्वांतर्कितुमीश्वरः ॥ १६ ॥ क्षणार्द्धालापमात्रेणपारंकर्तुंसचेश्वरः ॥
भक्तसंगाद्भवत्येवभक्तिंकर्तुमनेकधा ॥१७॥ त्वद्भक्तजलदोलापजलसेकेनवर्द्धते ॥ अभक्तालापतापात्तुशुष्कतांयातित
त्क्षणं ॥ १८ ॥ तद्गुणस्मृतिसेकाच्चवर्द्धतेतत्क्षणेस्फुटम् ॥ त्वद्भक्त्यंकुरमुद्भूतंस्फीतंमानसजंपरम् ॥ १९ ॥ ननश्यंवर्द्धनीयं
चनित्यंनित्यंक्षणेक्षणे ॥ ततःसंप्राप्यवृक्षत्वंभक्तस्यजीवनायच ॥२०॥ ददात्येवफलंतस्मैहरिदास्यमनुत्तमं ॥ संप्राप्य
दुर्लभंदास्यंयदिदासोबभूवह ॥ २१ ॥ सुनिश्चयेनतेनैववर्जितंसर्वभयादिकं ॥ इत्येवमुक्त्वाभक्त्याचनंदस्तस्थौहरेःपुरः ॥
॥ २२ ॥ प्रसन्नवदनःकृष्णोददौतस्मैतदीप्सितम् ॥ एवंनंदकृतंस्तोत्रंनित्यंभक्त्याचयःपठेत् ॥ २३ ॥ सुदृढांभक्तिमाप्नो
तिसधोदास्यंलभेद्धरेः ॥ तपस्तप्त्वायदाद्रोणस्तीर्थेचधरयासह ॥ २४ ॥ स्तोत्रंतस्मैपुरादत्तंब्रह्मणातत्सुदुर्लभम् ॥ ह
रेःषडक्षरोमंत्रःकवचंसर्वरक्षणम् ॥ २५ ॥ इहसौरंभिणादत्तंतस्मैतुष्टेनपुष्करे ॥ तदेवकवचंस्तोत्रंसचमंत्रःसुदुर्लभः ॥
॥ २६ ॥ ब्रह्मणांशेनमुनिनानंदायचतपस्यते ॥ मंत्रःस्तोत्रंचकवचमिष्टदेवोगुरुस्तथा ॥ २७ ॥ यायस्यविद्याप्राची
नानत्वांत्यजतिनिश्चितम् ॥ इत्येवंकथितंस्तोत्रंश्रीकृष्णाख्यानमद्भुतं ॥ सुखदंमोक्षदंसारंभवबंधविमोचनम् ॥ २२८ ॥
इतिश्रीब्र० इंद्रयागभंजनोनामैकविंशतितमोऽध्यायः ॥ २१ ॥ श्रीनारायणउवाच ॥ एकदाराधिकानाथोबलेनसहबाल
कैः ॥ जगामतत्तालवनंपरिपक्कफलान्वितम् ॥ १ ॥ वृक्षाणांरक्षितादैत्यःखररूपीचधेनुकः ॥ कोटिसिंहसमबलोदेवानांद
र्पनाशनः ॥ २ ॥ शरीरंपर्वतसमंकूपतुल्येचलोचने ॥ ईषापंक्तिसमादंतास्तुंडंपर्वतगह्वरम् ॥ ३ ॥ शतहस्तपरिमिताजि
ह्वालोलाभयानका ॥ कासारसदृशानाभिःशब्दस्तस्यभयानकः ॥ ४ ॥ दृष्ट्वातालवनंबालाहर्षमापुरनंदिताः ॥ कौतुका

त्कृष्णमूचुस्तेस्मेराननसरोरुहाः ॥ ५ ॥ बालाऊचुः ॥ ॥ हेकृष्णकरुणासिंधोदीनबंधोजगत्पते ॥ महाबलबलभ्रातःसम
स्तबलिनांवरः ॥ ६ ॥ अवधानंकुरुविभोक्षणार्द्धंनोनिवेदने ॥ क्षुधितानांशिशूनांचभक्तानांभक्तवत्सल ॥ ७ ॥ स्वादूनिसुं
दराण्येवपश्यतालफलानिच ॥ भ कुंचालयितुंवृक्षान्पातितुंचफलानिच ॥ ८ ॥ नानावर्णानिपुष्पाणिपक्वानिदुर्लभा
निच ॥ आज्ञांकरोषिचेत्कृष्णचेष्टांकर्तुंवयंक्षमाः ॥ ९ ॥ किंत्वत्रदैत्योबलवान्खररूपीचधेनुकः ॥ अजितस्त्रिदशैःसर्वैर्म
हाबलपराक्रमः ॥ १० ॥ दुर्निवार्यश्चसर्वेषांकंसस्यसचिवोमहान् ॥ हिंसकःसर्वजंतूनांवनानामस्तिरक्षिता ॥ ११ ॥ सुवि
चार्यजगत्कांतवदनोबदतांवर ॥ युक्तंकार्यमयुक्तंवाकर्तव्यमथवानवा ॥ १२ ॥ बालकस्यवचःश्रुत्वाभगवान्मधुसूदनः
॥ उवाचमधुरंबालान्वचनंतत्सुखावहम् ॥ १३ ॥ श्रीकृष्णउवाच ॥ ॥ किंवोदैत्याद्भयंबालायूयंमत्सहचारिणः ॥ वृ
क्षान्भत्काचालयित्वाफलानिखादताभयम् ॥ १४ ॥ श्रीकृष्णाज्ञांसमादायबालकाबलशायिनः ॥ उत्पेतुर्वृक्षशिखरंक्षु
धितांश्चफलार्थिनः ॥ १५ ॥ नानाप्रकारवर्णानिस्वादूनिसुंदराणिच ॥ फलानिपातयामासुःपरिपक्वानिनारद ॥ १६ ॥ के
चिद्बभंजुर्वृक्षांश्चचालयामासुरेवच ॥ केचित्कोलाहलंचक्रुर्ननृतुस्तत्रकेचन ॥ १७ ॥ अवरुह्यतरुभ्यश्चबालकाबल
शालिनः ॥ फलान्यादायगच्छंतोददृशुर्दैत्यपुंगवम् ॥ १८ ॥ महाबलंमहाकायंघोरंगर्दभरूपिणं ॥ आगच्छंतंमहावेगा
त्कुर्वंतंशब्दमुल्बणम् ॥ १९ ॥ तंदृष्ट्वारुरुदुःसर्वेफलानितत्यजुर्भिया ॥ कृष्णकृष्णेतिशब्दंचप्रचक्रुर्बहुधाभृशम् ॥ २० ॥
अस्मात्रक्षसमागच्छहेकृष्णकरुणानिधे ॥ हेसंकर्षणनोरक्षप्राणानोयांतिदानवात् ॥ २१ ॥ हेकृष्णहेकृष्णहरेमुरारेगोविं
ददामोदरदीनबंधो ॥ गोपीशगोपेशभवार्णवेस्माननंतनारायणरक्षरक्ष ॥ २२ ॥ भयेभयेत्राथशुभेशुभेवासुखेषुदुःखेषु

चदीननाथ ॥ त्वयाविनान्यंशरणंभवार्णवेननोस्तिहेमाधवरक्षरक्ष ॥ २३ ॥ जयजयगुणसिंधोकृष्णभक्तैकबंधोबहुतर
भययुक्तान्बालकात्रक्षरक्ष ॥ जहिदनुजकुलानामीशमस्माकमंतंसुरकुलबलदर्पंवर्धयेमंनिहत्य ॥ २४ ॥ बालानांविक्लु
वंदृष्वाबलेनसहमाधवः ॥ आजगामशिशुस्थानंभयहाभक्तवत्सलः ॥ २५ ॥ भयंनास्तिभयंनास्तीत्युत्क्वादुद्रावसत्वरं
॥ ईषद्धास्यप्रसन्नास्योनिर्भयंदत्तवान्शिशून् ॥ २६ ॥ दृष्वाकृष्णंबलंबालाननृतुर्विजहुर्भयं ॥ हरिस्मृतिश्चाभयदासर्वमंग
लदायिका ॥ २७ ॥ श्रीकृष्णोदानवंदृष्वाग्रसंतंपुरतःशिशून् ॥ बलंसंबोध्यबलिनमुवाचमधुसूदनः ॥ २८ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ दानवोबलिपुत्रोयंनाम्नासाहसिकोबली ॥ गर्दभोब्रह्मशापेनशप्तोदुर्वाससापुरा ॥ २९ ॥ पापिष्ठोममव
ध्योयंमहाबलपराक्रमः ॥ अहमेनंवधिष्यामित्वंरक्षबालकान्बल ॥ ३० ॥ आदायबालकान्सर्वान्दूरंगच्छेत्युवाचह ॥
तान्गृहीत्वाबलःशीघ्रंजगामत्वरयाज्ञया ॥ ३१ ॥ दृष्वाकृष्णंदानवेंद्रोमहाबलपराक्रमः ॥ जग्राहलीलयाकोपाज्ज्वल
दग्निशिखोपमम् ॥ ३२ ॥ बभूवातिदाहयुक्तोमर्तुकामोतितेजसा ॥ उज्जग्रासपुनर्दैत्योविभुंतेजस्विनंभिया ॥ ३३ ॥
उज्झितंसंतमीशंचदृष्वादैत्योमुमोचह ॥ अतीवसुंदरंशांतंज्वलंतंब्रह्मतेजसा ॥ ३४ ॥ कृष्णदर्शनमात्रेणबभूवास्यपु
रास्मृतिः ॥ आत्मानंबुबुधेकृष्णंजगतांकारणंपरम् ॥ ३५ ॥ तेजस्वरूपमीशंतंदृष्वातुष्टावदानवः ॥ यथागमंयथाज
न्मगुणातीतंश्रुतेःपरम् ॥ ३६ ॥ ॥ दानवउवाच ॥ ॥ वामनोसित्वमंशेनमत्पितुर्यज्ञभिक्षुकः ॥ राज्यहर्ताचश्रीहर्तासुतल
स्थलदायकः ॥ ३७ ॥ बलिभक्तिवशोद्वारिसर्वेशोभक्तवत्सलः ॥ शीघ्रंत्वंहिंसमांपापंशापाद्गर्दभरूपिणम् ॥ ३८ ॥ मुनेर्दु
र्वाससःशापादीदृशंजन्मकुत्सितम् ॥ मृत्युरुक्तश्चमुनिनात्वत्तोममजगत्पते ॥ ३९ ॥ षोडशारेणचक्रेणसुतीक्ष्णेनातिते

जसा ॥ जहिमांजगतांनाथसद्भक्तिंकुरुमोक्षद ॥ ४० ॥ त्वमंशेनवराहश्चसमुद्धर्तुंवसुंधराम् ॥ वेदानांरक्षितानाथहिरण्याक्ष
निषूदनः ॥ ४१ ॥ त्वंनृसिंहःस्वयंपूर्णोहिरण्यकशिपोर्वधे ॥ प्रन्हदानुग्रहार्थायदेवानांरक्षणायच ॥ ४२ ॥ त्वंचवेदोद्धारक
र्त्तामीनांशेनदयानिधे ॥ नृपस्यज्ञानदानायरक्षायैसुरविप्रयोः ॥ ४३ ॥ शेषाधारश्चकूर्मस्त्वमंशेनसृष्टिहेतवे ॥ विश्वाधार
श्चविश्वस्त्वमंशेनापिसहस्रधृक् ॥ ४४ ॥ रामोदाशरथिस्त्वंचजानक्युद्धारहेतवे ॥ दशकंधरहंताचासिंधौसेतुविधायकः ॥
॥ ४५ ॥ कलयापरशुरामश्चजमदग्निसुतोमहान् ॥ त्रिःसप्तकृत्वोभूपानांनिहंताजगतीपते ॥ ४६ ॥ अंशेनकपिलस्त्वंचसि
द्धानांचगुरोर्गुरुः ॥ मातृज्ञानप्रदाताचयोगशास्त्रविधायकः ॥ ४७ ॥ अंशेनज्ञानिनांश्रेष्टोनरनारायणावृषी ॥ त्वंचधर्मसु
तोभूत्वाशोकविस्तारकारकः ॥ ४८ ॥ अधुनाकृष्णरूपस्त्वंपरिपूर्णतमःस्वयम् ॥ सर्वेषामवताराणांजीवरूपःसनातनः ॥
॥ ४९ ॥ यशोदाजीवनोनित्योनंदैकानंदवर्धनः ॥ प्राणादिदेवोगोपीनांराधाप्राणाधिकःप्रियः ॥ ५० ॥ वसुदेवसुतःशांतो
देवकीदुःखभंजनः ॥ अयोनिसंभवःश्रीमान्पृथिवीभारहारकः ॥ ५१ ॥ पूतनायैमातृगतिंप्रदाताचकृपानिधिः ॥ बलके
शिप्रलंबानांममापिमोक्षकारकः ॥ ५२ ॥ स्वेच्छामयगुणातीतभक्तानांभयभंजन ॥ प्रसीदराधिकानाथप्रसीदकुरुमो
क्षणम् ॥ ५३ ॥ हेनाथगार्दभीयोनेःसमुद्धरभवार्णवात् ॥ मूर्खस्त्वद्भक्तपुत्रोहंमामुद्धर्तुंत्वमर्हसि ॥ ५४ ॥ वेदाब्रह्माद
योयंचमुनींद्रास्तोतुमक्षमाः ॥ किंस्तौमितंगुणातीतंपुरादैत्योधुनाखरः ॥ ५५ ॥ एवंकुरुकृपासिंधोयेममेनभवेज्जनुः ॥
दृष्ट्वापादारविंदंतेकःपुनर्भवनंव्रजेत् ॥ ५६ ॥ ब्रह्मास्तोताखरःस्तोतानोपहासितुमर्हति ॥ सदीश्वरस्यविज्ञस्ययोग्यायो
ग्येसमाकृपा ॥ ५७ ॥ इत्येवमुक्त्वादैत्येंद्रस्तस्थौचपुरतोहरेः ॥ प्रसन्नवदनःश्रीमानतितुष्टोबभूवह ॥ ५८ ॥ इदंदैत्यकृतं

स्तोत्रंनित्यंभक्त्याचयःपठेत् ॥ सालोक्यसार्ष्टिसामीप्यंलीलयालभतेहरेः ॥ ५९ ॥ इहलोकेहरेर्भक्तिमंतेदास्यंसुदुर्लभ
म् ॥ विद्यांश्रियंसुकवितांपुत्रपौत्रान्यशोलभेत् ॥ ६० ॥ ॥ श्रीनारायणउवाच ॥ ॥ श्रुत्वा नुमेनेदैत्येंद्रस्तवनंकरुणानि
धिः ॥ कथंकरोमिसंहारमीदृशंभक्तमित्यहो ॥ ६१ ॥ अनुमन्यस्मृतिंतस्यसंजहारहरिःस्वयम् ॥ नहियक्तोवधस्तोतुर्दुर्व
कुर्विधिरीश्वरात् ६२ ॥ दानवोमाययाविष्णोर्विसस्मारपुनःस्वकम् ॥ दुरुक्तिंकंठदेशेतदधिष्ठानंचकारह ॥ ६३ ॥ उवा
चश्रीहरिंदैत्यःकोपात्प्रस्फुरिताधरः ॥ मुनेसद्योमर्तुकामोदैवग्रस्तोविचेतनः ॥ ६४ ॥ ॥ दैत्यउवाच ॥ ॥ ध्रुवंत्वंमर्तुका
मोसिदुर्बुद्धेमानवार्भक ॥ अद्यप्रस्थापयिष्यामित्वामहंयममंदिरम् ॥ ६५ ॥ आयासिजीवनाकांक्षीममतालवनंशिशो
॥ नयास्यसिपुनर्गेहंबांधवंनहिद्रक्ष्यसि ॥ ६६ ॥ नकंसोनजरासंधोनरकोनसमोमम ॥ देवाःकंपंतिमेनित्यंकेचान्येमत्स
माभुवि ॥ ६७ ॥ नहिसंहारकर्ताचमांसंहर्तुंक्षमःशिवः ॥ नचब्रह्मानविष्णुश्चनमृत्युःकालएवच ॥ ६८ ॥ ममतालतरून्भुं
क्त्वापातयित्वाफलानिच ॥ अहंकारोतिसहसाकिमहोकस्यतेजसा ॥ ६९ ॥ कस्त्वंवदबटोसत्यंकमनीयोतिसुंदरः ॥ दु
र्लभंजीवनंदातुंमह्यंकथमिहागतः ॥ ७० ॥ इत्युत्क्वामस्तकेकृत्वाप्रेरयित्वातुतंबली ॥ दूरतःपातयामासश्रीकृष्णंमरणो
न्मुखः ॥ ७१ ॥ पातयित्वाचतंभूमौविषाणाभ्यांजघानसः ॥ कृष्णांगस्पर्शमात्रेणतद्विषाणौबभंजतुः ॥ ७२ ॥ दैत्यो
भग्नविषाणश्चतमीशंकोपतोमुने ॥ जग्रासचर्वणंकर्तुंभग्नदंतोबभूवह ॥ ७३ ॥ तेजसादग्धवक्त्रश्चतमुज्जग्राहतत्क्षणे ॥
जज्वालव्यथितःकोपाद्ददारखुरतोमहीं ॥ ७४ ॥ घूर्णयित्वातुलांगूलंशब्दंकृत्वाभयानकम् ॥ सजगामशिशुस्थानंदुद्रुवु
र्बालकाभिया ॥ ७५ ॥ बलंचप्रेरयामासमस्तकेनमहाबली ॥ बलोमुष्टिंददौतस्मैमूर्छामापततोसुरः ॥ ७६ ॥ क्षणेनचेत

नांप्राप्यजगामहरिसन्निधिम् ॥ वज्रमुष्ट्याचव्यथितःपुनर्मूर्च्छामवापसः ॥ ७७ ॥ पुनश्चचेतनांप्राप्यसमुत्तस्थौव्यथाकु
लः ॥ उत्ससर्जबृहल्लेंडंमूत्रंचभयमापह ॥ ७८ ॥ क्षणात्संधिक्षणंप्राप्यमहाबलपराक्रमः ॥ कृत्वाशिरसिगोविंदंघूर्णया
मासदानवः ॥ ७९ ॥ पातयामासभूमौतंघूर्णयित्वापुनःपुनः ॥ उत्पाट्यतालवृक्षंतंताडयामासमाधवः ॥ ८० ॥ यथाके
शप्रहारेणदानवस्यभवेद्यथा ॥ तथाबभूवदैत्यस्यतालवृक्षस्यताडनात् ॥ ८१ ॥ गोवर्धनंसमुत्पाट्यघातयामासतंविभुः
॥ पपातवेगाच्छैलेंद्रस्तस्योपरिमहामुने ॥ ८२ ॥ पर्वतस्यप्रहारेणमूर्च्छामापमहाबलः ॥ बभूवपलितांगश्चरुधिरंचसमु
द्वहन् ॥ ८३ ॥ क्षणेनचेतनांप्राप्यसमुत्तस्थौरुषासुरः ॥ गृहीत्वापर्वतश्रेष्ठंप्रेरयामासमाधवम् ॥ ८४ ॥ दृष्ट्वाशैलमुत्प
तंतंवेगेनमधुसूदनः ॥ जग्राहदक्षिणकरेयथेक्षुदंडवत्प्रभुः ॥ ८५ ॥ पूर्वस्थानेपर्वतंतंस्थापयामासकौतुकात् ॥ गृहीत्वादै
त्यकर्णाग्रंपातयामासदूरतः ॥८६ ॥ प्रगृह्यश्रीहरिंवेगात्कृत्वामूर्ध्निमहासुरः ॥ उत्पपातमनोयायीलीलयालक्षयोजनम्
॥ ८७ ॥ प्रहरंचतयोर्युद्धंनिर्लक्षेचबभूवह ॥ ततोगृहीत्वाश्रीकृष्णंपपातधरणीतले ॥ ८८ ॥ पुनर्मुहूर्तंयुद्धंचबभूवभूतले
तयोः ॥ मुदाहरिःप्रशशंसप्रहस्यदानवेश्वरम् ॥ ८९ ॥ मद्भक्तस्यबलेःपुत्रंधन्यंतज्जीवनंपरम् ॥ स्वस्त्यस्तुतेदानवेंद्रव
त्सनिर्वाणतांव्रज ॥ ९० ॥ मद्दर्शनंस्वस्तिबीजंपरंनिर्वाणकारणम् ॥ सर्वाधिकंसर्वपरंलभस्थानंमनोहरम् ॥ ९१ ॥ इत्ये
वमुक्त्वाश्रीकृष्णःसस्मारचक्रमुत्तमम् ॥ सूर्यकोटिसमंदीप्त्याजग्राहतत्सुदर्शनम् ॥ ९२॥ चिक्षेपभ्रामयित्वाचषोडशार
मनुत्तमम् ॥ चिच्छेदलीलयावध्यंब्रह्मविष्णुमहेश्वरैः ॥ ९३ ॥ पपातमस्तकंभूमौदानवस्यमहात्मनः ॥ तेजःसमूहउत्तस्थौ
शतसूर्यसमप्रभः ॥ ९४ ॥ विलोक्यहरिलोकंसंश्लिष्टंकृष्णपदांबुजे ॥ संप्राप्यपरमंमोक्षमहोदानवपंगवः ॥ ९५ ॥ गग

नस्थाः सुराः सर्वेमनुयश्चभृशंमुदा ॥ पारिजातप्रसूनानांचक्रुस्तेपुष्पवर्षणम् ॥ ९६ ॥ नेदुर्दुंदुभयः सर्वेननृतुश्चाप्सरोगणाः ॥ जगुर्गंधर्वनिकरास्तुष्टुवुर्मुनयोमुदा ॥ ९७ ॥ स्तुत्वाजग्मुः सुराः सर्वेमुनयोहर्षविह्वलाः ॥ धेनुकस्यवधंदृष्ट्वातत्राजग्मुश्चबालकाः ॥ ९८ ॥ बलश्चबलिनांश्रेष्ठस्तुष्टावपुरुषोत्तमम् ॥ तुष्टुवुर्बालकाः सर्वेननृतुश्चमुदान्विताः ॥ ९९ ॥ दत्वाकृष्णबलाभ्यांचप्रपक्कानिफलानिच ॥ सर्वाणिभक्षणंकृत्वाबालाः प्रहृष्टमानसाः ॥ १०० ॥ भुक्त्वापीत्वाहरिः शीघ्रंबलेनबालकैः सह ॥ जगामस्वालयंब्रह्मन्निहत्यदानवेश्वरम् ॥ १०१ ॥ इतिश्रीब्रह्मवैव० महापुराणेधेनुकवधेद्वाविंशोध्यायः ॥ २२ ॥

॥ नारदउवाच ॥ ॥ केनपापेनबलिजोगर्दभत्वमवापह ॥ दुर्वासाः केनदोषेणशशापदानवेश्वरम् ॥ १ ॥ केनपुण्येनवानाथबलिनः श्रीहरेः पदम् ॥ सहसैकत्वमुक्तिंचसंप्रापदानवाधिपः ॥ २ ॥ मुनेसर्वंसुविस्तार्यवदसंदेहभंजन ॥ अहोकविमुखेकाव्यंनूत्नंनूत्नंपदेपदे ॥ ३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ शृणुवत्सप्रवक्ष्येहमितिहासंपुरातनम् ॥ पुराश्रुतंधर्मवक्त्रात्पर्वतेगंधमादने ॥ ४ ॥ पाद्मकल्पेचवृत्तांतंविचित्रंसुमनोहरम् ॥ नारायणकथोपेतंकर्णपीयूषमुत्तमम् ॥ ५ ॥ यत्रकल्पेकथाचेयंतत्रत्वमुपबर्हणः ॥ आकल्पजीवीसश्रीकः सुंदरः स्थिरयौवनः ॥ ६ ॥ पंचाशत्कामिनीनांचपतिः शृंगारतत्परः ॥ वरेणब्रह्मणस्त्वंचसुकंठोगायनेश्वरः ॥ ७ ॥ अनुक्षणंपपुस्तातसुंदरंमुखपंकजम् ॥ निमेषरहिताः सर्वाः कामबाणप्रपीडिताः ॥ ८ तासांप्राणैश्चघटितोविधिनात्वमिवश्रुतम् ॥ दिवानिशंसहचरानजीवंतित्वयाविना ॥ ९ ॥ पुष्पोद्यानेचरहसिस्थानेस्थानेमनोरमे ॥ गव्हरेषुचशैलानांकंदरेषुनदीषुच ॥ १० ॥ काननेषुचरम्येषुस्मशानेजंतुवर्जिते ॥ यथामनोरथंताश्चक्रीडांचक्रुस्त्वयासह ॥ ११ ॥ तदादैवाद्विधेः शापाद्भूत्वादासीसुतोभवान् ॥ अधुनाब्रह्मणः पुत्रोवैष्णवोच्छिष्टभोज

नात् ॥ १२ ॥ असंख्यकल्पजीवीचवैष्णवप्रवरोमहान् ॥ ज्ञानदृष्ट्यासर्वदर्शीप्रियशिष्यश्चधूर्जटेः ॥ १३ ॥ तस्यकल्पस्य वृत्तांतंमुनेमत्तोनिशामय ॥ विस्तार्यदैत्यवृत्तांतंकथयामिसुधोपमम् ॥ १४ ॥ एकदैवबलेःपुत्रोनाम्नासाहसिकोबली ॥ स्वतेजसासुरान्जित्वाप्रतस्थौगंधमादनम् ॥ १५ ॥ चंदनोक्षितसर्वांगोरत्नभूषणभूषितः ॥ रत्नसिंहासनस्थश्चबहुसैन्यसमन्वितः ॥ १६ ॥ एतस्मिन्नंतरेतेनयथायातितिलोत्तमा ॥ रूपेणाप्सरसांश्रेष्ठानानावेषविधायिनी ॥ १७ ॥ चारुचंपकवर्णाभारत्नाभरणभूषिता ॥ नवयौवनसंपन्नाकामबाणप्रपीडिता ॥ १८ ॥ ईषद्धास्यप्रसन्नास्यादिव्यवस्त्रंसुबिभ्रती ॥ वक्रभ्रूभंगयुक्तासागजेंद्रमंदगामिनी ॥ १९ ॥ स्तनमूरुंमुखेंदुंचदृष्ट्वासाहसिकोयुवा ॥ वायुनामुक्तवस्त्रायास्तस्यामूर्छामवापह ॥ २० ॥ साददर्शबलेःपुत्रमतीवसुमनोहरम् ॥ प्रफुल्लमालतीमालांबिभ्रंतंनवयौवनम् ॥ २१ ॥ शरत्पार्वणचंद्रास्यंसुस्मितंसुमनोहरम् ॥ दृष्ट्वातंविस्मिताकामात्कटाक्षंचचकारसा ॥ २२ ॥ क्रीडार्थेचंद्रलोकंचगच्छंतीचंद्रकामुकी ॥ तस्थौकेनच्छलेनैवमत्ताशृंगारलालसा ॥ २३ ॥ दर्शंदर्शंचतस्यास्यंप्रहस्यवक्रचक्षुषा ॥ मुखमाच्छादनंचक्रेवाससावापुनःपुनः ॥ २४ ॥ पुलकांकितसर्वांगंधर्मकर्मसमन्वितम् ॥ बभूवकाममत्तायायोनौकंडूयनंजलम् ॥ २५ ॥ विसस्मारशशधरंबलिपुत्रमनोरथा ॥ अहोकोवेदभुवनेदुर्ज्ञेयंपुंश्चलीमनः ॥ २६ ॥ पुंश्चल्यांयोहिविश्वस्तोविधिनासविडंबितः ॥ बहिःकृतश्चयशसाधर्मेणस्वकुलेनच ॥ २७ ॥ वांछितंनूतनंप्राप्यविनश्यतिपुरातनम् ॥ सदास्वकर्मसाध्यासाकोवातस्याःप्रियोप्रियः ॥ २८ ॥ दैवेकर्मणिपैत्र्येचपुत्रेबंधौनभर्तरि ॥ दारुणंपुंश्चलीचित्तंसदाशृंगारकर्मणि ॥ २९ ॥ प्राणाधिकंरतिज्ञंसाम्रतदृष्ट्याचपुंश्चली ॥ रत्नप्रदंरत्नविज्ञंविषदृष्ट्याहिपश्यति ॥ ३० ॥ सर्वेषांस्थलमस्त्येवपुंश्चलीनांचकुत्रचित् ॥

दारुणापुंश्चलीजातिर्नवघातिभ्यएवच ॥ ३१ ॥ निष्कृतिःसर्वभोगांतेसर्वेषामस्तिनिश्चितम् ॥ नपुंश्चलीनांविप्रेंद्रयावच्चं
द्रदिवाकरौ ॥ ३२॥ अन्यासांकामिनीनांचकीटंहंतुंचयादया ॥ सानास्तिपुंश्चलीनांतुकांतंहंतिपुरातनम् ॥ ३३ ॥ कांतंदृ
ष्ट्वाहिनस्त्येवसोपायेनावलीलया ॥ रतिज्ञंनूतनंप्राप्यविषतुल्यंपुरातनम् ॥ ३४ ॥ पृथिव्यांयानिपापानिपुंश्चलीष्वेव
भारते ॥ तिष्ठंतिताभ्योनपरःपापिष्ठाःसंतियेचन ॥ ३५ ॥ पुंश्चलीपरिपक्वान्नंसर्वपातकनिश्चितम् ॥ दैवेकर्मणिपैत्र्येच
नदेयंचतथाजलम् ॥ ३६ ॥ अन्नंविष्ठाजलंमूत्रंपुंश्चलीनांचनिश्चितम् ॥ दत्वापितृभ्योदेवेभ्योभुक्त्वाचनरकंव्रजेत् ॥
॥ ३७ ॥ शतवर्षंकालसूत्रेपचत्येवसुदारुणे ॥ घोरांधकारेकृमयस्तंदशंतिदिवानिशम् ॥ ३८ ॥ पुंश्चल्यन्नंचयोभुंक्तेदैवा
द्यदिनराधमः ॥ सप्तजन्मकृतंपुण्यंतस्यनश्यतिनिश्चितम् ॥ ३९ ॥ आयुःश्रीयशसांहानिरिहलोकेपरत्रच ॥ तस्माद्यत्ना
द्रक्षणीयंपाकपात्रंकलत्रकम् ॥ ४० ॥ पुंश्चलीदर्शनेपुण्यंयात्रासिद्धिर्भवेद्ध्रुवम् ॥ स्पर्शनेचमहापापंतीर्थस्नानाद्विशु
ध्यति ॥ ४१ ॥ स्नानंदानंव्रतंचैवजपश्चदेवपूजनम् ॥ निष्फलंपुंश्चलीनांचभारतेजीवनंवृथा ॥ ४२ ॥ कथितंकुलटा
ख्यानंदुर्ज्ञेयंचयथागमम् ॥ संवादंचतयोस्तत्रप्रकृतंशृणुनारद ॥ ४३ ॥ सपुनश्चेतनांप्राप्यतांदृष्ट्वैवबलेःसुतः ॥ कामा
तुरःप्रमत्तश्चजगामकुलटांतिकम् ॥ ४४ ॥ उवाचकुटिलापांगींपीनश्रोणिपयोधराम् ॥ व्रीडयावाससावक्त्रमाच्छन्नंकुर्व
तींमुदा ॥ ४५ ॥ ॥ साहसिकउवाच ॥ ॥ कासित्वंकस्यकन्यासिकस्यकांतासिकामिनि ॥ स्वयंकयासिकंसुभ्रुपुण्य
वंतंमनोहरम ॥ ४६ ॥ कल्पांतेतपसापूतंभोक्तुंत्वामेवसुंदरि ॥ यंतयासियाहिसात्वंभृत्यंमांकर्तुमर्हसि ॥ ४७ ॥ क्रीणीहि
रतिपुण्येनमांभृत्यंरतिलोलुपम् ॥ शृंगारलोलुपात्वंचशृंगारंदेहिकामुकि ॥ ४८ ॥ त्वयासहममाश्लेषोविधिनाचविनि

मितः ॥ निरूपितंयत्त्वचनैववार्यतेकेनतत्प्रिये ॥ ४९ ॥ वाक्यंपीयूषसदृशंसस्मितंवदसुंदरि ॥ शीघ्रंभुजलतापाशैर्बंधनंकु
रुनिर्जने ॥ ५० ॥ आसनंदेहिकल्याणिस्वोरुंकनकसन्निभम् ॥ स्तनमंडलकुंभंचपात्रयोग्यंप्रदर्शय ॥५१॥ तीक्ष्णास्त्रेण
कटाक्षेणजर्जरंकुरुभामिनि ॥ कामसर्पक्षतंपादस्पर्शनेनरुजंकुरु ॥ ५२ ॥ अधरोष्ठामृतंस्वादुदेहिमेक्षुधितायच ॥ पक्व
दाडिमबीजाभंदंतंदर्शयसुंदरम् ॥ ५३ ॥ गंभीरनाभिंत्रिवलींद्रष्टुमिच्छामिसुंदरि ॥ नीवीप्रमोक्षणंकर्तुमिच्छामेवर्ततेस
दा ॥ ५४ ॥ श्रोणिंपश्यामिललितांमुनिमानसमोहिनीं ॥ शरन्मध्यान्हपद्मानांप्रभामोचनलोचनाम् ॥ ५५॥ शरत्पार्व
णचंद्रास्यंप्रसन्नंचप्रदर्शय ॥ साचतद्वचनंश्रुत्वातमुवाचस्मरातुरा ॥ ५६ ॥ दृष्ट्वार्तंकामबाणेनमानसंयक्षकामिनी ॥
॥ ॥ तिलोत्तमोवाच ॥ ॥ पतिस्त्वत्सदृशोनाथकामिनीनांमनीषितः ॥ ५७ ॥ बलिपुत्रोसिधर्मिष्ठोरूपवान्गुणवान्यु
वा ॥ श्रृंगारनिपुणःकांतःकामशास्त्रविशारदः ॥ ५८ ॥ सदामनोज्ञःस्त्रीणांत्वंसुवेषश्चस्वभावतः ॥ सुवेषंसुंदरंशांतंकांतंदां
तमरोगिणम् ॥ ५९ ॥ श्रृंगारज्ञंगुणज्ञंत्वांयुवानंरसिकंशुचिम् ॥ स्त्रीमनोज्ञंदयालुंचवसिष्ठसममीश्वरम् ॥ ६० ॥ दातार
मनुरक्तंचकांतमिच्छतिकामिनी ॥ एतेसर्वेगुणाःकांतसंतिकांतेत्वयिध्रुवम् ॥ ६१ ॥ त्वांनवांछंतियाःकांतास्ताअविज्ञा
श्चवंचिताः ॥ संतोषंतेकरिष्यामिसमागम्यविधोर्गृहात् ॥ ६२ ॥ वेषंकृत्वातुचंद्रार्थंयात्राघतस्यकामिनी ॥ अन्याश्ले
षणमात्रेणभविताधर्मलंघना ॥ ६३ ॥ याश्चधर्मान्नरक्षंतितासांचजीवनंवृथा ॥ चंद्राश्लेषंनजानंतियास्तामूढाःप्रकी
र्तिताः ॥ ६४ ॥ ताएवमातृगर्भस्थानप्रज्ञाःपौरुषैरसैः ॥ स्ववैद्यौमदनश्चंद्रोमरुत्वान्नलकूबरः ॥ ६५ ॥ एभिर्नालिंगिताया
स्तावंचितारतिकर्मभिः ॥ दिवानिशंमानसंमेतेषांक्रीडांचचिंतयेत् ॥ ६६ ॥ विशेषतःकामदेवोनिपुणोरतिकर्मणि ॥ चंद्र

शृंगारमाश्लेषमालापममृताधिकम् ॥ ६७ ॥ अद्यतस्परतिदिनंतेनतच्चिंतयेन्मनः ॥ तिलोत्तमावचःश्रुत्वाजहासबलिनं
दनः ॥ ६८ ॥ सकामश्वसपुलकस्तामुवाचरहस्थले ॥ ॥ साहसिकउवाच ॥ ॥ ब्रह्मणानिर्मितात्वंचकौतुकेनतिलोत्तमे ॥
अतोवराचाप्सरसांविदग्धरसिकेश्वरी ॥ सुंदोपसुंदयोर्नाशनिमित्तेनप्रयत्नतः ॥ ७० ॥ सर्वरूपगुणाधाराविधिनाचकृता
पुरा ॥ सर्वंजानासिसर्वज्ञेविज्ञेसुरतकर्मणि ॥ ७१ ॥ हर्षेणश्रोतुमिच्छामिवदवोमानसंवचः ॥ अतिप्रियश्चकोवाचकःस्व
भावोवरानने ॥ ७२ ॥ अवश्यंगोपनीयंचश्रोतुमिच्छामिसुंदरि ॥ गंधर्वाणांसुराणांचराज्ञांपुण्यवतामपि ॥ ७३ ॥ सर्वे
षांप्राणतुल्यात्वमेषुतेकःपरःप्रियः ॥ असुरस्यवचःश्रुत्वाप्रहस्यसातिलोत्तमा ॥ ७४ ॥ मुखमाच्छादनंचक्रेविलोक्यवक्र
चक्षुषा ॥ सत्यंसारमंतरस्थमव्यक्तमतिगोपनम् ॥ ७५ ॥ उवाचमानसंवाक्यमज्ञातंविदुषामपि ॥ ॥ तिलोत्तमोवाच ॥
कथनीयंसाहसिकपुंश्चलीनांमनोवचः ॥ ७६ ॥ स्त्रीजातीनांचसर्वासामुपहासकरंपरम् ॥ सर्वेषामपिदुर्ज्ञेयंचरितंयोषिता
मपि ॥ ७७ ॥ विशेषतोपिदुर्ज्ञेयंपुंश्चलीनांमनोवचः ॥ वेदवेदांगशास्त्रांतंसर्वंजानातिपंडितः ॥ ७८ ॥ कांतनांतंविजानाति
दिशामाकाशयोषिताम् ॥ ७९ ॥ युवासर्वस्यहर्ताचेत्प्राणेभ्योपिपरःप्रियः ॥ युवानंसुंदरंदृष्ट्वात्याद्यार्ताभवतिपुंश्चली ॥ ८०
विशेषतःसुवेषंचदृष्ट्वैवहतचेतना ॥ निमेषरहितातस्यलोचनाभ्यांपपौमुखम् ॥ ८१ ॥ योनौजलंक्षरेत्तस्याःसद्यःकंडूय
नंभवेत् ॥ मनोतिलोलमस्थैर्यंसर्वांगानिचकंपिरे ॥ ८२ ॥ जडीभूतंशरीरंचप्रदग्धंमदनानलात् ॥ संप्राप्यतंचेद्रहसिसा
लापंकुरुतेस्फुटम् ॥ ८३ ॥ सकटाक्षंस्मेरवक्रंदर्शयित्वापुनःपुनः ॥ तथायदिवशंकर्तुंनशशाकजितेंद्रियम् ॥ ८४ ॥ स्वमं
गंदर्शयित्वातमंतर्वाक्यंस्फुटंवदेत् ॥ दुःसाध्येनायकेदुःखंभवेदाजन्मजन्मनि ॥ ८५ ॥ तत्तुल्यंतत्परंप्राप्यतंविस्मरतिपुं

श्चली ॥ पुंश्चलीनामप्रियःकःकःप्रियोवामहीतले ॥ ८६ ॥ योतिशृंगारनिपुणःसचप्राणाधिकःप्रियः ॥ पूर्वजारंपतिंपु
त्रंभ्रातरंपितरंप्रसूं ॥ ८७ ॥ विशिष्टंनूतनंप्राप्यसर्वंत्यजतिलीलया ॥ नदानेननमानेनसत्येनस्तवनेनवा ॥ ८८ ॥ नोप
कारेणप्रीत्यावासासाध्यासुरतिंविना ॥शयनेभोजनेचापिस्वप्नेज्ञानेदिवानिशम् ॥ ८९ ॥नित्यंसत्पुरुषाश्लेषंस्मरंतिकुल
टाःस्त्रियः ॥ दारुणापुंश्चलीजातिःप्रार्थयंतीनवंनवम् ॥ ९० ॥ सर्वासांकुलटानांचचरित्रंकथितंमया ॥ ९१ ॥ अकथ्यंगो
पनीयंचममत्वद्वचनंश्टणु ॥ ममसंतिप्रियतरागंधर्वेषुसरेषुच ॥९२॥ युवानोरतिशूराश्चकामशास्त्रविशारदाः ॥ विशेषतःश
शधरेस्नेहोमेविद्यतेपरः ॥ ९३ ॥ ततोतिरिक्तःसर्वस्मादपिकामःप्रियोमम ॥ प्रियोमेकामसदृशोनभूतोनभविष्यति ॥ ९४
स्मरस्यस्मरणात्तूर्णंसुस्निग्धंमानसंमम ॥ इत्येवंकथितंसर्वमात्मनोयोषितामपि ॥ ९५ ॥ आज्ञांकुरुमहाराजयास्या
मिचंद्रसन्निधिम् ॥ चंद्रस्थानात्तवस्थानंसमागत्यसुनिश्चितम् ॥ ९६ ॥ संतोषंतवदैत्येंद्रकरिष्यामिनसंशयः ॥ श्रुत्वैवंब
लिपुत्रश्चजहासोच्चैःपुनःपुनः ॥ ९७ ॥ सावक्रचक्षुषालोक्यतंजहासस्मरातुरा ॥ छलेनदर्शयामासकठिनंस्तनयोर्युगम्
॥ ९८ ॥ चारुचंपकवर्णाभंवर्तुलंपीनमुच्छ्रितम् ॥ श्रोणींसुकठिनांरम्यांरंभास्तंभविनिंदिताम् ॥ ९९ ॥ सकटाक्षंस्स्मेमुखं
कपोलंपुलकांचितम् ॥ रहस्थानंसमासाद्यकामेनहतचेतसा ॥ १०० ॥ पुलकांचितसर्वांगीलोचनाभ्यांपपौमुखम् ॥ त
स्यरूपंचवेषंचदर्शंदर्शंपुनःपुनः ॥ १ ॥ मुखमाच्छादनंभावात्कुर्वंतीसूक्ष्मवाससा ॥ अतिकामातुरांदृष्ट्वासुप्राज्ञोबलिनं
दनः ॥ २ ॥ पप्रच्छकामिनांकामीभावंविज्ञातुमुत्सुकः ॥ ॥ साहसिकउवाच ॥ ॥ किंकरिष्यसिमांसत्यंवदपंकजलो
चने ॥ ३ ॥ कार्यांतरंकरिष्यामिसुचिरंस्थातुमक्षमः ॥ कामिनीषुबलात्कारोनधर्मोधर्मिणांप्रिये ॥ ४ ॥ विशेषतोतिवि

दुर्षानास्माकंस्वकुलोचितः ॥ श्रृंगारंदेहिवागच्छरतिंकर्तुंसुरांतिके ॥ ५ ॥ कःक्षमोवावशीकर्तुंपुंश्चलींबहुगामिनीं ॥ दान
वस्यवचःश्रुत्वाशुष्ककंठोष्ठतालुका ॥ ६ ॥ आत्मानमधमंमन्याभिद्यमानास्मराग्नतः ॥ ॥ तिलोत्तमोवाच ॥ ॥ क
थमेवंब्रूहित्वंमेकांतःप्राणाधिकःप्रियः ॥ ७ ॥ कथंवाकोपयुक्तोसिकुरुकार्यंमनीषितम् ॥ त्वामेवंविमुखंकृत्वायामिचं
द्रांतिकंयदि ॥ ८ ॥ तवाभिशापात्तत्रैवसद्योविघ्नोभविष्यति ॥ विहारंकुरुभद्रंतेकरिष्यतिहरिःस्वयम् ॥ ९ ॥ पदेपदेशुभंत
स्ययःस्त्रीमानंचरक्षति ॥ अवमन्यस्त्रियंमूढोयोयातिपुरुषाधमः ॥ १० ॥ पदेपदेतदशुभंकरोतिपार्वतीसती ॥ तिलोत्तमा
वचःश्रुत्वाजहासबलिनंदनः ॥ ११ ॥ कामशास्त्रेषुनिष्णातःसद्भावंबुबुधेसुधीः ॥ भावंविहायभावज्ञःकामशास्त्रविशारदः
॥ १२ ॥ करेधृत्वासमाश्लिष्यचुचुंबमुखपंकजम् ॥ जगामचतयासार्धंगंधमादनगह्वरम् ॥ १३ ॥ ददर्शतत्रगत्वाच
स्थानंजंतुविवर्जितम् ॥ संस्थाप्यरत्नदीपांश्चधूपंचसुमनोहरम् ॥ १४ ॥ शय्यांरतिकरींकृत्वासुष्वापचतयासह ॥ नाना
प्रकारश्रृंगारंचकारकाममोहितः ॥ १५ ॥ तिलोत्तमातंबुबुधेसुरादपिविचक्षणम् ॥ विपरीतरतौतुष्टावभूवरसिकेश्वरी ॥ १६
दिवानिशंनबुबुधेनवसंगममूर्छिता ॥ तिलोत्तमाकामभावाद्बलिपुत्रमुवाचह ॥ १७ ॥ कृत्वावक्षसिप्राणेशंस्तनयोरंतरंमु
दा ॥ ॥ तिलोत्तमोवाच ॥ ॥ कदाद्रक्ष्याम्यहंकांतमुखचंद्रंमनोहरम् ॥ १८ ॥ एवंभूतंशुभदिनंकदामेभवितापुनः ॥
अयिकिंरूपमाश्चर्यंगुणोवातवदानव ॥ १९ ॥ ध्रुवंश्रृंगारनिपुणस्त्वत्परोनास्तिकश्चन ॥ मांविस्मरसिकालेनपुरुषःष
ट्पदोयथा ॥ २० ॥ स्त्रीणांसत्पुरुषाश्लेषमाजीवंमनसिस्थितम् ॥ सत्संगमःशुभदिनेपुण्यात्पुण्यवतांभवेत् ॥ २१ ॥ स
द्विच्छेदोदुःखहेतुर्मरणादतिरिच्यते ॥ पीयूषभोजनात्स्वर्गवासादपिचदुर्लभः ॥ २२ ॥ सत्संगमःसुखमयोऽप्यसत्सं

गोविषाधिकः ॥ क्षणंतिष्ठमहाराजपुनरालिंगनंकुरु ॥ २३ ॥ त्वयासार्धममप्राणायास्यंतिचेतसासह ॥ इत्येवमुक्त्वाकु
लटाकृत्वावक्षसिसादरम् ॥ २४ ॥ पुमंगसंगात्पुलकामूर्छामापसुखेनच ॥ कुलटालिंगनालापात्सोतिकामीबभूवह ॥ २५
यथादीप्तःकृष्णवर्त्मावर्धतेहविषाधिकम् ॥ पुनश्चकारश्रृंगारमसुरोष्टविधंमुने ॥ २६ ॥ चुंबनंचनवविधंयथास्थानेयथो
चितम् ॥ नखदंतकरैःक्रीडांचकारविविधांपुनः ॥ २७ ॥ किंकिणीनांकंकणानांबभूवशब्दउल्बणः ॥ मुनेर्दुर्वाससस्तेन
ध्यानभंगोबभूवह ॥ २८ ॥ अदृष्टस्यतयोस्तत्रवल्मीकाच्छादितस्यच ॥ योगासनंकुर्वतश्चगंधमादनगव्हरे ॥ २९ ॥
ध्यायतश्चरणांभोजंकृष्णस्यपरमात्मनः ॥ नपपाततयोर्दृष्टिःसमीपस्थेमहामुनौ ॥ ३० ॥ दृष्ट्वाचुकोपतेजस्वीरुद्रांशोभ
गवान्विभुः ॥ उवाचतौविहारांतेरक्तपंकजलोचनः ॥ ३१ ॥ ध्यानप्राप्तपदांभोजविच्छेदोद्विग्नमानसः ॥ ॥ दुर्वासाउ० ॥
उत्तिष्ठगर्दभाकारनिर्लज्जपुरुषाधम ॥ ३२ ॥ भक्तप्रधानस्यबलेःपुत्रःपशुसमप्रभः ॥ देवोवामानवोवापिदैत्यगंधर्वराक्ष
साः ॥ ३३ ॥ लज्जांकुर्वंतिसततंस्वजातौचपशून्विना ॥ ज्ञानलज्जाविहीनाचखरजातिर्विशेषतः ॥ ३४ ॥ तस्मात्त्वंदा
नवश्रेष्ठखरयोनिंव्रजाधुना ॥ तिलोत्तमेत्वमुत्तिष्ठलज्जाहीनाचपुंश्चली ॥ ३५ ॥ एतादृशीस्पृहादैत्येव्रजयोनिंचदानवीं
॥ इत्येवमुक्त्वासमुनिस्तस्थौतत्ररुषाज्वलन् ॥ ३६ ॥ तौचतुष्टवतुर्भीतावुत्थायव्रीडितौमुनिम् ॥ ॥ साहसिकउवाच ॥
त्वंब्रह्मात्वंविष्णुश्चत्वंचसाक्षान्महेश्वरः ॥ ३७ ॥ हुताशनस्त्वंसूर्यश्चसृष्टिस्थित्यंतकारकः ॥ क्षमापराधंभगवन्कृपांकुरु
कृपानिधे ॥ ३८ ॥ मूढापराधंसततंयःक्षमेत्ससदीश्वरः ॥ इत्येवमुक्त्वादैत्येंद्रोरुरोदोच्चैःपुरोमुनेः ॥ ३९ ॥ कृत्वातृणानि
दशनेपपातचरणांबुजे ॥ ॥ तिलोत्तमोवाच ॥ ॥ हेनाथकरुणासिंधोदीनबंधोकृपांकुरु ॥ ४० ॥ विधिसृष्टौचसर्वेषां

मूढास्त्रीजातिरेवच ॥ ततोतिमत्ताकुलटासदाकामातुरापरा ॥ ४१ ॥ लज्जाभीतिश्चेतनाचनसंतिकामुकेविभो ॥ इत्युक्त्वा
रोदनंकृत्वाजगामशरणंमुने ॥ ४२ ॥ दुर्वासाउ० ॥ ॥ अतिशापःप्रसादोवाभवेद्दैवेनदानव ॥ सत्कीर्तिरपकीर्तिर्वाप्राक्तन
प्रभवात्ध्रुवम् ॥ ४३ ॥ विष्णुभक्तबलेःपुत्रःसद्वंशप्रभवोजनः ॥ जनकाद्विष्णुभक्तोसिजानामित्वांसुनिश्चितम् ॥ ४४ ॥ ज
नकस्यस्वभावोहिजन्येतिष्ठतिनिश्चितम् ॥ यथाश्रीकृष्णपादांकःकालीयंवंशमस्तके ॥ ४५ ॥ संप्राप्यगार्दभींयोनिंव
त्सनिर्वाणतांव्रज ॥ पूर्वकृष्णार्चनफलंनहिलुप्तंसतांचिरात् ॥ ४६ ॥ वृंदारण्यंतालवनंव्रजशीघ्रंव्रजांतिकम् ॥ प्राणांस्त्य
क्त्वाहरेश्चक्रान्मुक्तिंप्राप्स्यसिनिश्चितम् ॥ ४७ ॥ तिलोत्तमेभारतेत्वंबाणपुत्रीभविष्यसि ॥ श्रीकृष्णपौत्राश्लेषेणपुनःपू
ताभविष्यसि ॥ ४८ ॥ इत्येवमुक्त्वासमुनिर्विरराममहामुने ॥ तौजग्मतुर्यथास्थानंप्रणम्यमुनिपुंगवम् ॥ ४९ ॥ इत्युक्तं
सर्ववृत्तांतंदैत्यस्यखरजन्मनः ॥ तिलोत्तमाबाणपुत्रीत्यूषानिरुद्धकामिनी ॥ १५० ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेश्री
कृष्णजन्मखंडेतिलोत्तमाबलिपुत्रयोर्ब्रह्मशापप्रस्तावेत्रयोविंशोध्यायः ॥ २३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ नि
गूढंश्टणुवृत्तांतंमुनेर्दुर्वाससोमुने ॥ अहोस्यदारसंयोगःकथंतदूर्ध्वरेतसः ॥ १ ॥ दृष्ट्वातयोश्चश्टंगारंमुनिःकामीबभूवह
॥ जितेंद्रियोसत्संसर्गाद्दोषःसांसर्गिकोभवेत् ॥ २ ॥ सहसातस्यहृदयेबभूवसुरतेस्पृहा ॥ तपस्तप्त्वातत्रदध्यौकामिनीं
मदनातुरः ॥ ३ ॥ एतस्मिन्नंतरेतेनपथायातिमुनीश्वरः ॥ प्रार्थयंत्यापतिंसंतमौर्वश्चसुतयासह ॥ ४ ॥ ऊरूद्भवोब्रह्मण
श्चपुराकल्पेतपस्यतः ॥ ऊर्ध्वरेताश्चयोगींद्रऔर्वस्तेनइतिस्मृतः ॥ ५ ॥ तस्यजानूद्भवाकन्याकदलीनामविश्रुता ॥ दुर्वा
ससंप्रार्थयंतीनान्यंमनसिरोचते ॥ ६ ॥ ससुतोहिमुनिश्रेष्ठोमुनेर्दुर्वाससःपुरः ॥ तस्थौमहाप्रसन्नश्चज्वलदग्निशिखोप

मः ॥ ७ ॥ मुनींद्रोपिमुनींद्रंतंपुरोदृष्ट्वाससंभ्रमः ॥ प्रजवेनसमुत्तस्थौननामचमुदान्वितः ॥ ८ ॥ और्वोदुर्वाससंतत्रसमा
श्लिष्यमुदान्वितः ॥ उवाचमुनयेसर्वंकन्यकायामनोरथम् ॥ ९ ॥ ॥ और्वउवाच ॥ ॥ विख्याताकदलीनाममम
कन्यामनोहरा ॥ प्रौढात्वामेवध्यायंतीश्रुत्वावाचिकवक्रतः ॥ १० ॥ अयोनिसंभवाकन्यात्रैलोक्यंमोहितुंक्षमा ॥ सर्व
रूपगुणाधारादोषेणैकेनसंयुता ॥ ११ ॥ अतीवकलहाविष्टाकोपेनकटुभाषिणी ॥ नानागुणयुतंद्रव्यंनत्यजेदेकदोषतः ॥
और्वस्यवचनंश्रुत्वाहर्षशोकान्वितोमुनिः ॥ १२ ॥ ददर्शकन्यांपुरतोगुणरूपसमन्विताम् ॥ शरत्पार्वणचंद्रास्यांशरत्पं
कजलोचनाम् ॥ १३ ॥ ईषद्धास्यप्रसन्नास्यांपीनश्रोणिपयोधराम् ॥ नवयौवनसंयुक्तांपश्यंतींवक्रचक्षुषा ॥ १४ ॥ र
त्नालंकारशोभाढ्यांवन्हिशुद्धांशुकान्विताम् ॥ मुनिर्मुमोहतांदृष्ट्वाकामबाणप्रपीडितः ॥ १५ ॥ उवाचतंमुनिश्रेष्ठंत्वद
येनविदूयता ॥ ॥ दुर्वासाउवाच ॥ ॥ नारीरूपंत्रिभुवनेमुक्तिमार्गनिरोधकम् ॥ १६ ॥ व्यवधानंतपस्यायाःसततंमो
हकारणम् ॥ कारागारेचसंसारेदुर्वहंनिगडंपरम् ॥ १७ ॥ अच्छेद्यंज्ञानखड्गैश्चमहद्भिःशंकरादिभिः ॥ संगिच्छायातिरि
क्तंचकर्मभोगात्परात्परम् ॥ १८ ॥ इंद्रियादिंद्रियाधाराद्विधायाश्चमतेरपि ॥ आदेहंसंगनांछायाभोगांतेभोगएवच ॥ १९
देहेंद्रियाणिजीवंतंविद्याचैवानुशालिनम् ॥ मतिश्चैवविनाशाच्चसुखीजन्मनिजन्मनि ॥ २० ॥ यावज्जीवीचसुखीकोन
तावज्जन्मखंडनम् ॥ यावच्चजोविनोजन्मतावद्भोगःसुखावहः ॥ २१ ॥ परंमुनींद्रसर्वस्माद्धरिपादाब्जसेवनम् ॥ ध्याय
तःकृष्णपादाब्जंममविघ्नोबभूवह ॥ २२ ॥ नजानेकर्मदोषेणकेनवापूर्वजन्मनः ॥ पुंश्चल्यासहश्रृंगारंदृष्ट्वादैत्यस्यमन्मनः
॥ २३ ॥ बभूवकामसंयुक्तंदत्तंधात्राचतत्फलम् ॥ किंत्वहंतवकन्यायाःकटूक्तिशतकंमुने ॥ २४ ॥ ध्रुवंक्षमाकरिष्यामि

दास्यामिचततःफलम् ॥ सर्वतोपिपरानिंदास्त्रीकटूक्तिसहिष्णुता ॥ २५ ॥ अतीवानिंदितःसत्सुस्त्रीजितोभुवनत्रये ॥ तवा
ज्ञांमस्तकेकृत्वाग्रहीष्यामिसुतांतव ॥ २६॥ उपेतांकामिनींत्यक्त्वाकालसूत्रंव्रजेन्नरः ॥ रहस्युपस्थितांकामात्पुंश्चलींचे
ज्जितेंद्रियः ॥ २७ ॥ परित्यजेद्धर्मभयादधर्मान्नरकंव्रजेत् ॥ इत्येवमुक्त्वादुर्वासाविररामहरेःपुरः ॥ २८ ॥ मुनिर्वेदोक्त
विधिनाददौतस्मैसुतांमुने ॥ स्वस्तीत्युवाचदुर्वासामुनिश्चकौतुकंददौ ॥ २९ ॥ कन्यासमर्पणंकृत्वामोहाच्चैवरुरोदह ॥
मूर्छामवापसमुनिःस्वकन्याविरहातुरः ॥ ३० ॥ अपत्यभेदशोकौघःस्वात्मारामंनमुंचति ॥ क्षणेनचेतनांप्राप्यबोधया
मासकन्यकाम् ॥ ३१ ॥ मूर्छितांतातविच्छेदाद्रुदंतींशोकसंयुताम् ॥ ॥ और्वउवाच ॥ ॥ श्रृणुवत्सेप्रवक्ष्यामिनीतिसा
रंसुदुर्लभम् ॥ ३२ ॥ हितंसत्यंचवेदोक्तंपरिणामसुखावहम् ॥ स्वकांतश्चपरोबंधुरिहलोकेपरत्रच ॥ ३३ ॥ नहिकांतात्प
रःप्रेयान्कुलस्त्रीणांपरोगुरुः ॥ देवपूजाव्रतंदानंतपश्चानशनंजपः ॥ ३४ ॥ स्नानंचसर्वतीर्थेषुदीक्षासर्वमखेषुच ॥ प्रादक्षि
ण्यंपृथिव्याश्चब्राह्मणातिथिसेवनम् ॥ ३५ ॥ सर्वाणिपतिसेवायाःकलांनार्हंतिशोडशीम्॥ किमेतैःपतिभक्तायाअभक्ता
याश्चभारते ॥ ३६ ॥ यदादुःखीसुखारंभेसाकांक्षःप्रथमोभवेत् ॥ पतिसेवापरोधर्मःसर्वशास्त्रेषुपठ्यते ॥ ३७ ॥ स्वप्रज्ञा
नेनसततंकांतंनारायणाधिकम् ॥ दृष्ट्वातच्चरणांभोजंसेवांनित्यंकरिष्यति ॥ ३८॥ परिहासेनकोपेनभ्रमेणावज्ञयामुने ॥
कटूक्तिंस्वामिनःसाक्षात्परोक्षान्नकरिष्यति ॥ ३९ ॥ स्त्रियोवाग्योनिदुष्टायाःकामतोभारतेभुवि ॥ प्रायश्चित्तंश्रुतौनास्ति
नरकंब्रह्मणःशतम् ॥ ४० ॥ सर्वधर्मपरीतायाकटूक्तिंकुरुतेपतिम् ॥ शतजन्मकृतंपुण्यंतस्यानश्यतिनिश्चितम् ॥ ४१ ॥
दत्वाकन्यांबोधयित्वाजगाममुनिपुंगवः ॥ स्वात्मारामंस्वाश्रमेचतस्थौस्त्रीसहितामुदा ॥ ४२ ॥ संभोगेच्छावृतेचित्ते

कामीसंप्रापकामिनीम् ॥ अहोसुकृतिनांकामंवांछामात्रेणसिध्यति ॥ ४३ ॥ शय्यांरतिकरींकृत्वामुनिश्रेष्ठोमहामुने ॥ शुभेक्षणेतांगृहीत्वासुष्वापनिर्जनेप्रियाम् ॥ ४४ ॥ नारीरसानभिज्ञःस्यादाजन्ममुनिपुंगवः ॥ तथापिसुरतौविज्ञःकाम शास्त्रविशारदः ॥ ४५ ॥ नानाप्रकारश्रृंगारंचकारविधिपूर्वकम् ॥ नवसंगममात्रेणमूर्छांसंप्रापकंदली ॥ ४६ ॥ मूर्छांप्राप मुनिश्रेष्ठोबुबुधेनदिवानिशम् ॥ एवंप्रतिदिनंतत्रचकारसुरतिंमुने ॥ ४७ ॥ विदग्धायाविदग्धेनबभूवसंगमःसमः ॥ संबभू वगृहासक्तस्तपस्त्यत्कामुनीश्वरः ॥ ४८ ॥ करोतिकलहंनित्यंकदलीस्वामिनासह ॥ मुनींद्रोबोधयामासनीतिवाक्येन कामिनीम् ॥ ४९ ॥ सातंनबुबुधेकिंचित्करोतिकलहेस्पृहाम् ॥ तातप्रदत्तज्ञानेनसानशांताबभूवह ॥ ५० ॥ नजहातिप्रबो धेनस्वभावोदुरतिक्रमः ॥ नित्यंकटूक्तिंकांतंसाकरोतिहेतुनाविना ॥ ५१ ॥ जगत्प्रकंपितंयेनतयाकोपात्सकंपितः ॥ तया कृतांकटूक्तिंचक्षमासंस्थाचकारह ॥ ५२ ॥ बोधयामासतांनित्यंसद्योमोहाद्दयानिधिः ॥ कटूक्तिशतकंपूर्णंतत्कालेनबभू वह ॥ ५३ ॥ क्षमांचकारकृपयाकटूक्तिंचशताधिकाम् ॥ पत्नीकटूक्त्यानियतंप्रदग्धंमानसंमुनेः ॥ ५४ ॥ तस्याःकटूक्ति कारिण्याःकर्मपूर्णंबभूवह ॥ स्वात्मारामोदयालुश्चकोपंत्यक्तुंनसक्षमः ॥ ५५ ॥ शशापकामिनींमोहाद्भस्मराशिर्भवेतिच ॥ मुनेरिंगितमात्रेणभस्मसात्साबभूवह ॥ ५६ ॥ एवमत्युच्छ्रितानांचनकल्याणंजगत्त्रये ॥ शरीरेभस्मसाद्भूतेप्रतिबिं बःसचात्मनः ॥ ५७ ॥ जीवस्तत्रांतरिक्षस्थोह्युवाचविनयात्प्रभुम् ॥ ॥ जीवउवाच ॥ ॥ हेनाथसर्वदर्शीत्वंसततंज्ञान चक्षुषा ॥ ५८ ॥ सर्वंजानासिसर्वज्ञःकिमहंबोधयामिते ॥ सदुक्तिर्वाकटूक्तिर्वाकोपःसंतापएवच ॥ ५९ ॥ लोभोमोहश्चका मश्चक्षुत्पिपासादिकंचयत् ॥ स्थौल्यंकार्श्यंचनाशश्चदृश्यादृश्यंसमुद्भवम् ॥ ६० ॥ सर्वंशरीरधर्मंचनजीवस्यनचात्मनः ॥

सत्वंरजस्तमइतिशरीरंत्रिगुणात्मकम् ॥ ६१ ॥ तच्चनानाप्रकारंचनिबोधकथयामिते ॥ किंचित्सत्वातिरिक्तंचाकिंचिदे
वरजोधिकम् ॥ ६२ ॥ तमोतिरिक्तंकिंचिच्चनसमंकुत्रचिन्मुने ॥ सत्वोदयाच्चमुक्तीच्छाकर्मेच्छाचरजोगुणात् ॥ ६३ ॥
तमोगुणाज्जीवहिंसाकोपोहंकारएवच ॥ कोपात्कटूक्तिर्नियतंकटूक्त्याशत्रुताभवेत् ॥ ६४ ॥ तयाचाप्रियतासद्यःशत्रुःकः
कस्यभूतले ॥ कोवाप्रियोवाकःकिंचकिंमित्रंकोरिपुर्भवेत् ॥ ६५ ॥ इंद्रियाणिचबीजानिसर्वत्रशत्रुमित्रयोः ॥ प्राणा
धिकःप्रियःस्त्रीणांभर्तुःप्राणाधिकाप्रिया ॥ ६६ ॥ बभूवशत्रुतासद्योदुरुक्त्याचक्षमावयोः ॥ यद्गतंतद्गतंसर्वंकामदोषेणवै
प्रभो ॥ ६७ ॥ क्षमापराधंनिखिलंकिंकर्तव्यंवदाधुना ॥ किंकरोमिक्कयामीतिभविताकुत्रजन्ममे ॥ ६८ ॥ तवनान्यस्य
जायाहंभविष्यामिजगत्त्रये ॥ इत्येवमुक्त्वाजीवश्चमौनीभूतोबभूवह ॥ ६९ ॥ मूर्छामवापसमुनिःशोकेनहतचेतनः ॥ स्वा
त्मारामोमहाज्ञानीजहारचेतनामहो ॥ ७० ॥ स्त्रीविच्छेदोविदग्धानांसर्वशोकात्परात्परः ॥ क्षणेनचेतनांप्राप्यप्राणां
स्त्यक्तुंसमुद्यतः ॥ ७१ ॥ तत्रयोगासनंकृत्वाचकारवायुधारणम् ॥ एतस्मिन्नंतरेतत्रजगामब्राह्मणोर्भकः ॥ ७२ ॥ दं
डीछत्रीरक्तवासाबिभ्रत्तिलकमुत्तमम् ॥ सस्मितःश्यामवर्णश्चप्रज्वलन्ब्रह्मतेजसा ॥ ७३ ॥ वयसातिशिशुःशांतोज्ञानीवे
दविदांवरः ॥ दृष्ट्वातंसंभ्रमेणैवदुर्वासाःप्रणनामह ॥ ७४ ॥ वासयामासतत्रैवपूजयामासभक्तितः ॥ उवाचब्राह्मणपटु
र्दत्वातस्मैसदाशिषं ॥ ७५ ॥ तद्दर्शनादाशिषाच्चसर्वंदुःखंगतंमुने ॥ शिशुरूपंक्षणंस्थित्वातमुवाचविचक्षणः ॥ ७६ ॥ पी
यूषतुल्यंनित्यौघंनीतिशास्त्रविशारदः ॥ ॥ शिशुरुवाच ॥ ॥ सर्वंजानासिसर्वज्ञगुरोर्मंत्रप्रसादतः ॥ ७७ ॥ किंतत्वंत्वामहं
विप्रपृच्छामिशोककातरम् ॥ ब्राह्मणानांतपोधर्मस्तपःसाध्यंजगत्त्रयम् ॥ ७८ ॥ स्वधर्मंवैपरित्यज्यकिमिदानींकरो

षिभो ॥ काकस्यपत्नीकःकांतःकस्यावाभुवनत्रये ॥ ७९ ॥ मूर्खांश्चवंचनांकर्तुंकरोतिमाययाहरिः ॥ मिथ्यापत्नीतवे
यंचक्षणात्तेनगताधुना ॥ ८० ॥ नहिसत्यमदृश्यंचमिथ्यायत्राचिरस्थितिः ॥ एकानंशाचभगिनीवसुदेवसुताहरेः ॥
॥ ८१ ॥ पार्वत्यंशसमुद्भूतासुशीलाचिरजीविनी ॥ कल्पेकल्पेसुंदरीसातवपत्नीभविष्यति ॥ ८२ ॥ मनोदेहितपस्यायां
मुदाकतिपयंदिनम् ॥ कंदलीकंदलीजातिर्भविष्यतिमहीतले ॥ ८३ ॥ शुभदाफलदाकांतासकृत्सूतासुदुर्लभा ॥ कल्पांत
रेशांतरूपातवपत्नीभविष्यति ॥ ८४ ॥ अत्युच्छ्रितस्यदमनमुचितंचश्रुतौश्रुतम् ॥ इत्येवमुक्त्वाशीघ्रंचविप्ररूपीजनार्द
नः ॥ ८५ ॥ दत्वाज्ञानंचविप्रायसोंतर्धानंचकारह ॥ मुनिःसर्वंभ्रमंत्यक्त्वातपस्यायांमनोदधे ॥ ८६ ॥ कंदलीकदलीजा
तिर्बभूवधरणीतले ॥ दैत्यस्तालवनंगत्वाबभूवगर्दभाकृतिः ॥ ८७ ॥ तिलोत्तमाबाणपुत्रीबभूवसमयेमुने ॥ दैत्येंद्रोवि
ष्णुचक्रेणप्राणांस्त्यक्त्वासुवांछितम् ॥ ८८ ॥ संप्राप्यचरणांभोजंमुनेरपिसुदुर्लभम् ॥ कालेतिलोत्तमाभूत्वाजगामस्वा
लयंपुनः ॥ ८९ ॥ कृष्णपौत्रालिंगनेनपरिपूर्णमनोरथा ॥ इत्येवंकथितंश्रुत्वाश्रीकृष्णाख्यानमुत्तमम् ॥ पदेपदेसुंदरंच
किंभूयःश्रोतुमिच्छसि ॥ ९० ॥ ॥ इति० ब्र० म० तालभक्षणप्रसंगेबलिपुत्रमोक्षोनामचतुर्विंशोध्यायः ॥ २४ ॥ ॥ नारद
उवाच ॥ ॥ श्रुतंकिमद्भुतंब्रह्मन्हरेश्चरितमंगलम् ॥ विशेषतस्तवमुखेत्यतीवसुमनोहरम् ॥ १ ॥ मृतायांमुनिकन्यायांशा
पाद्दुर्वाससोमुनेः ॥ समागत्यकिंचकारतन्मेब्रूहितपोधन ॥ २ ॥ श्रीनारायण० ॥ ॥ सरस्वतीनदीतीरेतपस्यांकुर्वतोमुनेः ॥
पपातधौतमूर्ध्वांच्चधार्यमाणंचवायुना ॥ ३ ॥ पृथिव्यांपतितेवस्त्रेतपस्त्यक्त्वामुनीश्वरः ॥ ध्यानेनबुबुधेसर्वंकन्यासंबंधिस
कटं ॥ ४ ॥ जगामशोकाविष्टोपितूर्णंजामातुराश्रमं ॥ सिषेचपृथिवीरेणून्शश्वन्नयनाबिंदुना ॥ ५ ॥ गत्वालयसमीपंच

विप्रःकातरमानसः ॥ हेवत्सेकंदलीत्येवमुवाचचपुनःपुनः ॥६॥ श्वशुरस्यस्वरंज्ञात्वादुर्वासाभयविव्हलः ॥ बहिर्बभूव
शीघ्रंचपपातचरणांबुजे ॥ ७ ॥ प्रणम्यश्वशुरेशोकाद्विललापभृशंपुनः ॥ प्रवृत्तिंकथयामासमूलतोमुनिसत्तमं ॥८॥ श्रु
त्वावार्तांशुचाविष्टःपपातधरणीतले ॥ मूर्छामापमहाज्ञानीनिश्चेष्टोहियथामृतः ॥९॥ मृतंदृष्ट्वासदुर्वासामुनेमनसिसंकटं ॥
चेतनांकारयामासप्रयत्नेनमहामुनेः ॥ १०॥ संप्राप्यचेतनांशीघ्रमुवाचतंपुरःस्थितम् ॥ जामातरंशोकयुतंभीतंप्रणतकं
धरं ॥ ११ ॥ महाशोकादश्रुपूर्णरक्तपंकजलोचनं ॥ कोपात्कंपितवान्शश्वत्संत्रस्तःस्फुरिताधरः ॥ १२ ॥ और्वउवाच ॥
अयेब्रह्मन्नत्रिवंशपौत्रस्त्वंजगतीपते ॥ स्वल्पदोषेबहुतरःकृतोदंडस्त्वयाकथम् ॥ १३ ॥ त्वज्जन्मशंकरांशेनशिष्यस्त
स्यजगद्गुरोः ॥ वेदवेदांगविज्ञश्चसर्वज्ञोगुणवान्स्वयं ॥ १४॥ अनुसूयामहासाध्वीकमलांशातवप्रसूः ॥ नजानेकेनदोषेण
तवचैतादृशीमतिः ॥ १५ ॥ गुणवान्जनकोयस्यमातागुणवतीसती ॥ तयोःपुत्रोदयाहीनोगतिःसूक्ष्माश्रुतेरहो ॥ १६॥
ममप्राणाधिकाकन्यामुदात्वयिसमर्पिता ॥ महागुणान्वितास्वल्पदोषेणपरिमिश्रिता ॥ १७॥ वाग्दुष्टायाश्चदंडोहिपरित्या
गःश्रुतौश्रुतं ॥ त्वयाक्रोधाद्यदित्यक्तापित्रायत्नेनपालिता ॥ १८ ॥ मदपत्यंस्वल्पदोषेयतोभस्मत्वयाकृतम् ॥ पराभवस्त
वमहान्भविष्यतिनसंशयः ॥ १९ ॥ महतांक्षुद्रजंतूनांसर्वेषांजीविनांसदा ॥ स्रष्टापाताचशास्ताचभगवान्करुणानिधिः
॥ २०॥ इत्युक्त्वाचमुनिश्रेष्ठोविलप्यचपुनःपुनः ॥ हेवत्सेत्वयीत्युक्त्वाजगामस्वालयंरुषा ॥ २१॥ गतेमुनींद्रेदुर्वासावि
ललापभृशंपुनः ॥ ज्ञानेनविस्मृतःशोकोबभूवद्विगुणंपुनः ॥ २२॥ शोकानलोहिकालेनविच्छिन्नोज्ञानभस्मना ॥ बंधुदर्शन
शुष्केंधदानेनवर्धतेपुनः ॥ २३ ॥ स्मारंस्मारंप्रियांतत्रविलिप्यचपुनःपुनः ॥ बोधयित्वास्वमात्मानंतपस्यायांमनोदधौ

॥२४॥ इत्येवंकथितंसर्वंमुनेःशापस्यकारणम् ॥ बभूवतस्यकालेनदुःसहश्चपराभवः ॥ २५ ॥ नारदउवाच ॥ दुर्वासाः शंकरस्यांशःशिवतुल्यश्चतेजसा ॥ तेजस्वीकोमहानेवचकारतत्पराभवम् ॥ २६ ॥ श्रीनारायणउवाच ॥ ॥ अंबरीषोहि राजेंद्रःसूर्यवंशसमुद्भवः ॥ श्रीकृष्णचरणांभोजेतन्मनःसंततंमुने ॥ २७ ॥ नराज्येषुनभार्यासुनपुत्रेषुप्रजासुच ॥ नसंपत्सुक्षणंचित्तंपुण्यकर्मार्जितासुच ॥ २८ ॥ ध्यायतेहर्निशंधर्मीस्वप्नेज्ञानेहरिंमुदा ॥ महाजितेंद्रियःशांतोविष्णुव्रतपरायणः ॥ २९ ॥ एकादशीव्रतरतःकृष्णपूजासुतत्परः ॥ सर्वकर्मस्वलिप्तश्चकर्ताकृष्णार्पितेषुच ॥ ३० ॥ सुतीक्ष्णंषोडशारंच हरेश्चक्रंसुदर्शनम् ॥ तेजसाहरितुल्यंचसूर्यकोटिसमप्रभम् ॥ ३१ ॥ ब्रह्मादिभिस्तूयमानंपूजितंचसुरासुरैः ॥ प्रभुणारक्षितंशश्वद्रक्षायैनृपसन्निधौ ॥ ३२ ॥ एकदासव्रतंकृत्वाद्वादशीदिवसेसताम् ॥ स्नात्वाविधायपूजांचकालेनविधिपूर्वकम् ॥ ३३ ॥ दत्वादानंब्राह्मणेभ्यःसुवर्णरजतादिकम् ॥ ब्राह्मणान्भोजयित्वाचभोजनार्थमुवासह ॥ ३४ ॥ एतस्मिन्नंतरेविप्रतपस्वीक्षुधितोमुने ॥ दंडीछत्रीशुक्लवासाबिभ्रत्तिलकमुत्तमम् ॥ ३५ ॥ जटिलोतिकृशस्त्रस्तःशुष्ककंठौष्ठतालुकः ॥ तत्राजगामभगवान्दुर्वासानृपतेःपुरः ॥ ३६ ॥ सचदृष्ट्वामुनींद्रंतमुत्थायचप्रणम्यच ॥ दत्वापाद्यंचसंप्रीत्यास्वर्णासिंहासनंददौ ॥ ३७ ॥ तस्मैदत्वाशिषंविप्रःसमुवाससुखासने ॥ पप्रच्छराजातंप्रीतःकाज्ञातेवदकामितम् ॥ ३८ ॥ नृपेंद्रवचनंश्रुत्वातमुवाचमहामुनिः ॥ बुभुक्षितस्यमेराजन्देह्यन्नंविधिपूर्वकम् ॥ ३९ ॥ कथयित्वानृपेंद्रंचगतःस्नानार्थमुद्यतः ॥ नायातिमुनिशार्दूलःप्रयातिद्वादशीतिच ॥ ४० ॥ संकटेस्मिन्विधेयंचविविच्यविधिपूर्वकम् ॥ शीघ्रंवदमुनिश्रेष्ठभद्राभद्रंचमामिति ॥ ४१ ॥ श्रुत्वानृपोक्तिंत्वरितमुवाचमुनिपुंगवः ॥ हितंतथ्यंचवेदोक्तंपरिणामसुखावहम् ॥ ४२ ॥ ॥ वसिष्ठ

उवाच ॥ ॥ द्वादश्यांसमतीतायांत्रयोदश्यांतुपारणम् ॥ उपवासफलंहत्वाव्रतिनंहंतिनिश्चितम् ॥ ४३ ॥ ब्रह्महत्यासमं
पापंभवेत्तस्यश्रुतौश्रुतम् ॥ भक्षद्रव्यंसुरातुल्यमित्याहकमलोद्भवः ॥ ४४ ॥ नभोजयित्वामूढश्चेदतिथिंसमुपस्थितम् ॥ स
त्रस्तःक्षुधितोभुंक्तेकुंभीपाकेव्रजेद्ध्रुवम् ॥ ४५ ॥ शतवर्षंतत्रतिष्ठन्नरश्चांडालतांव्रजेत् ॥ व्याधियुक्तोदरिद्रश्चभवेज्जन्मनि
जन्मनि ॥ ४६ ॥ अतोतिसूक्ष्मंकिंब्रूमोऽधुनापरमसंकटे ॥ रक्षांकुरुद्वयोर्धर्मंसमालोक्यवदामिते ॥ ४७ ॥ उपवासफलं
रक्षकृष्णस्यचरणोदकम् ॥ भुक्त्काशीघ्रमपोराजन्तद्रक्षणमभक्षणम् ॥ ४८ ॥ इत्युक्त्काब्रह्मणःपुत्रोविरराममहामुने ॥
बुभुजेतज्जलंकिंचित्कृष्णपादांबुजंस्मरन् ॥ ४९ ॥ एतस्मिन्नंतरेब्रह्मन्नाजगाममुनीश्वरः ॥ चिच्छेदकोपात्सर्वज्ञःस्व
जटांनृपतेःपुरः ॥ ५० ॥ ततःसमुत्थितःशीघ्रंपुरुषोग्निशिखोपमः ॥ खड्गहस्तोमहाभीमाराजेंद्रंहंतुमुद्यतः ॥ ५१ ॥
हरेश्चक्रंचतंदृष्ट्वासूर्यकोटिसमप्रभम् ॥ चिच्छेदकृत्यापुरुषंब्राह्मणंछेत्तुमुद्यतम् ॥ ५२ ॥ दृष्वासुदर्शनंविप्रोदुद्रावभय
विव्हलः ॥ द्विजःपश्चात्तंददर्शज्वलदग्निशिखोपमम् ॥ ५३ ॥ ब्रह्मांडक्रमणंकृत्वानिर्विण्णोतिभयाकुलः ॥ तंचमत्वा
जगन्नाथंब्रह्माणंशरणंययौ ॥ ५४ ॥ त्राहित्राहीत्येवमुक्त्काविवेशब्रह्मणःसभाम् ॥ उत्थायब्रह्माविप्रेंद्रंपप्रच्छकुशलं
मुने ॥ ५५ ॥ सर्वंसकथयामासवृत्तांतंमूलतोविधिम् ॥ श्रुत्वाब्रह्मानिशश्वासतमुवाचभयाकुलः ॥ ५६ ॥ ॥ ब्रह्मोवा
च ॥ ॥ हरिदासंवत्सशप्तुंगतोसिकस्यतेजसा ॥ रक्षितायस्यभगवान्तत्कोहंताजगत्त्रये ॥ ५७ ॥ क्षुद्राणांमहतांचैव
भक्तानांरक्षणायच ॥ ररक्षसंततंचक्रंश्रीहरिर्भक्तवत्सलः ॥ ५८ ॥ योमुढोवैष्णवंद्वेष्टिविष्णुप्राणसमंद्विज ॥ तस्यसंहार
कर्तारंसंहर्तुमीश्वरोहरिः ॥ ५९ ॥ शीघ्रस्थानांतरंगच्छवत्सत्राणंनवाधुना ॥ अन्यथात्वांमयासार्धंहनिष्यतिसुदर्शनम्

॥ ६० ॥ किंब्रह्मलोकंब्रह्मांडंदग्धुंशक्तुंक्षणेनयत् ॥ तेजसाविष्णुतुल्यंयत्केनान्येननिवार्यते ॥ ६१ ॥ ब्रह्मणोवचनंश्रुत्वाततोदुद्रावब्राह्मणः ॥ त्रस्तोजगामकैलासंशंकरंशरणंभिया ॥ ६२ ॥ कृपानिधानमांरक्षेत्युवाचशंकरंभिया ॥ नहिपप्रच्छकुशलंसर्वज्ञोब्राह्मणंशिवः ॥ ६३ ॥ उवाचदीनदीनेशःसंहर्ताजगतांक्षणात् ॥ स्थिरोभवद्विजश्रेष्ठमदीयंवचनंश्रृणु ॥ ६४ ॥ ॥ शंकरउवाच ॥ ॥ पौत्रस्त्वंजगतांधातुरत्रेश्चतनयोमुने ॥ वेदज्ञातासिसर्वज्ञमूर्खतुल्यंतुकर्मते ॥ ६५ ॥ वेदेषुचपुराणेषुचेतिहासेषुसर्वतः ॥ निरूपितोयःसर्वेशस्तंनजानासिमूढवत् ॥ ६६ ॥ अहंब्रह्माचरुद्रश्चआदित्यावसवस्तथा ॥ धर्मेंद्रौचसुराःसर्वेमुनींद्रामनवस्तथा ॥ ६७ ॥ आविर्भूतास्तिरोभूतायस्यभ्रूभंगलीलया ॥ तस्यप्राणाधिकंभक्तंहंसित्वंकस्यतेजसा ॥ ६८ ॥ अहंब्रह्माचकमलादुर्गावाणीचराधिका ॥ नहिभक्तात्पराःप्रेम्णाभक्ताश्चसर्वतःप्रियाः ॥ ॥ ६९ ॥ क्षुद्रांश्चमहतोभक्तान्शश्वद्रक्षतियत्नतः ॥ सर्वांतरात्माभगवान्चक्रेणदुःसहेनच ॥ ७० ॥ नियुज्यचक्रंदुर्वार्यंस्वात्मतुल्यंचतेजसा ॥ तथापिनप्रतीतिश्चस्वयंगच्छतिरक्षितुम् ॥ ७१ ॥ स्वकीयगुणनाम्नांचश्रवणादतिसंभ्रमः ॥ भक्तसंगेभ्रमत्येवछायेवसंततंहरिः ॥ ७२ ॥ कांताप्राणाधिकाशश्वन्नहिकोपिततोधिकः ॥ भक्तान्द्वेष्टिस्वयंसाचेत्तूर्णंत्यजतितांप्रभुः ॥ ७३ ॥ सर्वेषांचप्रियाविप्राःस्वशरीरादपिद्विज ॥ ब्राह्मणेभ्यःप्रियाभक्ताःप्राणेभ्यश्चहरेरपि ॥ ७४ ॥ ईश्वरस्यप्रियःकोवाप्रियःकोवाजगत्त्रये ॥ यःशिष्टस्तंभजेच्छश्वद्ध्यायतेसततंसदा ॥ ७५ ॥ महतिप्रलयेब्रह्मन्ब्रह्मांडौघजलप्लुते ॥ नतत्रनाशोभक्तानांसर्वेषांचभविष्यति ॥ ७६ ॥ भजब्राह्मणगोविंदंस्मरतस्यपदांबुजम् ॥ सर्वापदोविनश्यंतिश्रीहरेःस्मरणादपि ॥ ७७ ॥ व्रजशीघ्रंचवैकुंठंवैकुंठःशरणंतव ॥ दास्यत्येवाभयंतुभ्यंकरुणासागरोविभुः ॥ ७८

एतस्मिन्नंतरेव्याप्तंकैलासंचक्रतेजसा ॥ यथाचसूर्यकिरणैःस्वप्रदीप्तंमहीतलम् ॥ ७९ ॥ दग्धाज्वालाकरालैश्चसर्वेकैलासवासिनः ॥ त्राहित्राहीत्येवमुक्त्वाशंकरंशरणंययुः ॥ ८० ॥ दृष्ट्वाचक्रंदुर्विषहंशंकरःकरुणानिधिः ॥ पार्वत्यासहसंप्रीत्याब्राह्मणायाशिषंददौ ॥ ८१ ॥ तेजःसत्यंतपःसत्यंयदिचेच्चिरजीवितम् ॥ कृतापराधोभीतश्चद्विजोभवतुविज्वरः ॥ ॥ ८२ ॥ ॥ पार्वत्युवाच ॥ ॥ यत्प्रभोर्ममपुण्येषुब्राह्मणःशरणागतः ॥ ममाशिषामहाभीत्याःशीघ्रंभवतुविज्वरः ॥ ॥ ८३ ॥ इत्येवमुक्त्वाकृपयाविररामशिवाशिवः ॥ मुनिःप्रणम्यदेवेशंवैकुंठंशरणंययौ ॥ ८४ ॥ गत्वावैकुंठभवनंमनोयायीमुनीश्वरः ॥ दृष्ट्वासुदर्शनंपश्चाद्विवेशांतःपुरंहरेः ॥ ८५ ॥ ददर्शश्रीहरिंविप्रोरत्नसिंहासनस्थितम् ॥ शंखचक्रगदापद्मधरंपीतांबरंपरम् ॥ ८६ ॥ श्यामंचतुर्भुजंशांतंलक्ष्मीकांतंमनोहरम् ॥ रत्नालंकारशोभाढ्यंरत्नमालाविभूषितम् ॥ ८७ ॥ ईषद्धास्यप्रसन्नास्यंभक्तानुग्रहकातरम् ॥ सद्रत्नसाररचितंकिरीटोज्वलशेखरम् ॥ ८८ ॥ पार्षदप्रवरेंद्रैश्चसेवितंश्वेतचामरैः ॥ पद्मासेवितपादाब्जंसरस्वत्यास्तुतंपुरः ॥ ८९ ॥ सुनंदनंदकुमुदप्रचंडादिभिरावृतम् ॥ गुणानुवादंगायंतंतंत्रैःपश्यंतमीप्सितम् ॥ ९० ॥ एवंभूतंप्रभुंदृष्ट्वादंडवत्प्रणनामच ॥ तुष्टावसामवेदोक्तस्तोत्रेणपरमेश्वरम् ॥ ९१ ॥ ॥ दुर्वासाउवाच ॥ ॥ त्राहिमांकमलाकांतत्राहिमांकरुणानिधे ॥ दीनबंधोतिदीनेशसंपूर्णकरुणाप्रभो ॥ ९२ ॥ वेदवेदांगसंस्रष्टुर्विधातुश्चस्वयंविधे ॥ मृत्योर्मृत्युःकालकालत्राहिमांसंकटार्णवे ॥ ९३ ॥ संहारकर्तुःसंहारःसर्वेशःसर्वकारण ॥ महाविष्णुतरोर्बीजरक्षमांभवसागरे ॥ ९४ ॥ शरणागतशोकार्तभयत्राणपरायण ॥ भगवन्नवमांभीतंनारायणनमोस्तुते ॥ ॥ ९५ ॥ वेदेष्वाद्यंचयद्वस्तुवेदाःस्तोतुंनचक्षमाः ॥ सरस्वतीजडीभूताकिंस्तुवंतिविपश्चितः ॥ ९६ ॥ शेषःसहस्रवक्त्रेण

यंस्तोतुंजडतांव्रजेत् ॥ पंचवक्त्रोजडीभूतोजडीभूतश्चतुर्मुखः ॥ १७ ॥ श्रुतयःस्मृतिकर्तारोवाणीचेत्स्तोतुमक्षमा ॥ कोहं
विप्रश्चवेदज्ञःशिष्यःकिंस्तौमिमानद ॥ १८ ॥ मनूनांचमहेंद्राणामष्टाविंशतिमेगते ॥ दिवानिशंयस्यविधेरष्टोत्तरशतायुषः
॥ १९ ॥ तस्यपापोभवेद्यस्यचक्षुरुन्मीलनेनच ॥ तमनिर्वचनीयंचकिंस्तौमिपाहिमांप्रभो ॥ १०० ॥ इत्येवंस्तवनंकृत्वा
पपातचरणांबुजे ॥ नयनांबुजनीरेणसिषेचभयविव्हलः ॥ १ ॥ दुर्वाससाकृतंस्तोत्रंहरेश्चपरमात्मनः ॥ पुण्यदंसामवेदो
क्तंजगन्मंगलनामकम् ॥ २ ॥ यःपठेत्संकटग्रस्तोभक्तियुक्तश्चसंयुतः ॥ नारायणस्तंकृपयाशीघ्रमागत्यरक्षति ॥ ३ ॥
राजद्वारेस्मशानेचकारागारेभयाकुले ॥ शत्रुग्रस्तेदस्युभीतौहिंस्रजंतुसमन्विते ॥ ४ ॥ वेष्टितेराजसैन्येनमग्नेपोतेमहा
र्णवे ॥ स्तोत्रस्मरणमात्रेणमुच्यतेनात्रसंशयः ॥ ५ ॥ नारायणउवाच ॥ ॥ मुनेश्चस्तवनंश्रुत्वाभगवान्भक्तवत्सलः ॥
प्रहस्योवाचमधुरंपीयूषवृष्टिवन्मुदा ॥ ६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ उत्तिष्ठोत्तिष्ठभद्रंतेभविष्यतिवरेणमे ॥ किंतुमेव
चनंनित्यंश्रृणुसत्यंसुखावहम् ॥ ७ ॥ अन्येषांचभवेज्ज्ञानंश्रुत्वाशास्त्रंसतांमुखात् ॥ स्वमूर्तिमंतिशास्त्राणिभवेत्संतश्च
रंतिहि ॥ ८ ॥ कर्मवेदविरुद्धंचसर्वेषामतिगर्हितम् ॥ करोतिविद्वांश्चेज्ज्ञात्वासचजीवन्मृताधिकः ॥ ९ ॥ पुराणेषुचवेदेषु
चेतिहासेषुब्राह्मण ॥ वैष्णवानांचमहिमाश्रुतःसर्वैश्चसर्वतः ॥ १० ॥ अहंप्राणावैष्णवानांममप्राणाश्चवैष्णवाः ॥ तानेवद्वे
ष्टियोमूढोममासूनांचाहिंसकः ॥ ११ ॥ पुत्रान्पौत्रान्कलत्रांश्चराज्यंलक्ष्मींविहायच ॥ ध्यायंतेसततंयेमांकोमेतेभ्यःपरः
प्रियः ॥ १२ ॥ पराभक्तान्नमेप्राणानचलक्ष्मीर्नशंकरः ॥ नभारतीनचब्रह्मानदुर्गानगणेश्वरः ॥ १३ ॥ नब्राह्मणोनवेदा
श्चनवेदजननीपरा ॥ नगोपीनचगोपालानराधाप्राणतःप्रिया ॥ १४ ॥ इत्येवंकथितंसर्वंसत्यंसारंचवास्तवम् ॥ नप्रशं

सापरंतेषांतेचप्राणाधिकाःप्रियाः ॥ १५ ॥ मांद्विषंतिचयेमूढाज्ञानहीनाश्चवंचिताः ॥ आत्मानंयेनजानंतितेयांतिनिरयं
चिरम् ॥ १६ ॥ येद्विषंतिचमद्भक्तान्प्राणानामधिकंप्रियान् ॥ तेषांशास्तात्वहंतूर्णंपरत्रनिरयंचिरम् ॥ १७ ॥ प्रभावोहं
चसर्वेषामीश्वरःपरिपालकः ॥ नचव्यापिस्वतंत्रोहंभक्ताधीनोदिवानिशम् ॥ १८ ॥ गोलोकेवाथवैकुंठेद्विभुजंचचतुर्भुज
म् ॥ रूपमात्रमिदंशश्वत्प्राणामेभक्तसन्निधौ ॥ १९ ॥ यदुक्तंभक्तदत्तंचभक्षणीयंचतन्मम ॥ अभक्ष्यंद्रव्यमन्येनदत्तंचे
दमृतोपमम् ॥ २० ॥ अंबरीषंनृपश्रेष्ठंनिरीहंतमहिंसकम् ॥ कथंहंसिदयाशीलंसर्वप्राणिहितेरतम् ॥ २१ ॥ दयांकुर्वंतिये
संतःसततंसर्वजंतुषु ॥ तान्द्विषंतिचयेमूढास्तेषांहंताहमेवच ॥ २२ ॥ भक्तानांहिंसकंशत्रुमहंरक्षितुमक्षमः ॥ अंबरीषालयं
गच्छसत्वांरक्षितुमीश्वरः ॥ २३ ॥ ॥ नारायणउवाच ॥ ॥ इदंवाक्यंचतच्छ्रुत्वाब्राह्मणोभयविह्वलः ॥ विषण्णमान
सस्तस्थौस्मरन्कृष्णपदांबुजम् ॥ २४ ॥ एतस्मिन्नंतरेब्रह्माभवान्यासहशंकरः ॥ धर्मश्चेंद्रादयोदेवाआजग्मुर्मुनिपुंग
वाः ॥ २५ ॥ प्रणम्यतुष्टुवुःसर्वेपरमात्मानमीश्वरम् ॥ पुलकांचितसर्वांगाभक्तिनम्रात्मकंधराः ॥ २६ ॥ ॥ ब्रह्मोवाच
स्वात्मस्वरूपनिर्लिप्तभक्तानुग्रहकातर ॥ भक्तापराधजनकंरक्षब्राह्मणपुंगवम् ॥ २७ ॥ ॥ महादेवउवाच ॥ ॥ दीनबं
धोजगन्नाथनायंविप्रोजगद्बहिः ॥ कृतापराधंदीनंचपाहिमंशरणागतम् ॥ २८ ॥ ॥ पार्वत्युवाच ॥ ॥ भक्तएवांबरी
षस्तेनद्विजानसुरावयम् ॥ सर्वेषामीश्वरस्त्वंचरक्षविप्रंकृतागसम् ॥ २९ ॥ ॥ धर्मउवाच ॥ ॥ सर्वेषांजनकस्त्वंचपाता
दंडकृदीश्वरः ॥ शिशुहेतोःशिशुंहंतिपितेत्येवंकुतःप्रभो ॥ ३० ॥ इंद्रउवाच ॥ कृपयासमताशश्वत्सर्वेषुजिविषुप्रभो ॥ अ
पराधफलंभूतमधुनापातुमर्हसि ॥ ३१ ॥ रुद्रउवाच ॥ ॥ शांतिंकर्तुंसमुचितमुचितंसांप्रतंकुरु ॥ कृतकुंठस्यमूलस्यपाल

नंकर्तुमर्हसि ॥ ३२ ॥ दिक्पालउवाच ॥ ॥ कृतापराधंविप्रंचछेत्तुमर्हसिनश्रुतौ ॥ अपराधशमंकृत्वासदापातिसदीश्वरः ॥ ॥ ३३ ॥ ॥ ग्रहाऊचुः ॥ ॥ योद्वेष्टिवैष्णवंमूढस्तंरुष्टाःसर्वदेवताः ॥ पीडांकुर्मोवयंशश्वत्पश्चात्त्वंपातुमर्हसि ॥ ३४ ॥ मुन यऊचुः ॥ ॥ नाथविप्रेपराभूतेसर्वेजीवन्मृतावयम् ॥ दंडंविधातुमेकस्यभवेल्लज्जास्वजातिषु ॥ ३५ ॥ अत्रिरुवाच ॥ त्वयैवदत्तःपुत्रोमेक्रोधीत्वत्सेवकःसदा ॥ नकंबिभेतित्रैलोक्येतेजस्वीतेजसातव ॥ ३६ ॥ ॥ लक्ष्मीरुवाच ॥ ॥ क्षमाप राधंभगवन्ब्राह्मणंशरणागतम् ॥ स्तुवंतिदेवाविप्राश्चनविप्रंहंतुमर्हसि ॥ ३७ ॥ ॥ सरस्वत्युवाच ॥ ॥ बोधयि ष्यामिदेवानांजनकंकामहंश्रुतिम् ॥ भगवान्स्वामीसर्वेषांसर्वांश्चपातुमर्हसि ॥ ३८ ॥ ॥ पार्षदाऊचुः ॥ ॥ भवतः स्मृतिमात्रेणसर्वेषांसर्वमंगलम् ॥ भवेत्सर्वापदोयांतिपाहिमंशरणागतम् ॥ ३९ ॥ नर्तकाऊचुः ॥ ॥ दारिद्र्यंभंजनव यंभिक्षुकास्तवसंततम् ॥ भिक्षांनोसांप्रतंदेहिपरित्राणंद्विजस्यच ॥ १४० ॥ एतेषांस्तवनंश्रुत्वाप्रभुःशरणवत्सलः ॥ प्रह स्योवाचवचनंसर्वसंतोषकारणम् ॥ ४१ ॥ ॥श्रीभगवानुवाच ॥ ॥ सर्वेश्शृणुतमद्वाक्यंनीतियुक्तंसुखावहम् ॥ विप्रर क्षांकरिष्यामियुष्माकमाज्ञयाध्रुवम् ॥ ४२ ॥ किंत्वयंयातुवैकुंठादंबरीषालयंपुनः ॥ करोतुपारणंतत्रराज्ञःसुप्रीतयेमु निः ॥ ४३ ॥ विप्रस्तस्यातिथिर्भूत्वानिर्दोषंशप्तुमुद्यतः ॥ सुदर्शनंतुतंरक्ष्यंब्राह्मणंहंतुमुद्यतम् ॥ ४४ ॥ पूर्णवर्षमयंभीतो भ्रमत्येवभुवंमुदा ॥ उपवासीसराजेंद्रःसस्त्रीकश्चशुचान्वितः ॥ ४५ ॥ ततोहमुपवासीचभक्तोपवासकारणात् ॥ स्तनांधं बालकंदृष्ट्वानभुंक्तेजननीयथा ॥ ४६ ॥ ममाशिषामुनिश्रेष्ठःसद्योभवतुविज्वरः ॥ पथितत्रास्यहिंसांचमच्चक्रंनकरिष्य ति ॥ ४७ ॥ अहमेवाद्यनिश्चिंतःसुखंभोक्ष्यामिनिश्चितम् ॥ भक्तदत्तंचयद्वस्तुप्रीत्याकृत्वासुधोपमम् ॥ ४८ ॥ लक्ष्मीद

तंचयद्व्यंनचाहंभोक्तुमीश्वरः ॥ विनाभक्तप्रदानेननतृप्तिंदातुमीश्वरः ॥ ४९ ॥ हेमुनींद्रमहाप्राज्ञगच्छवत्सनृपालयम् ॥
सर्वेदेवाश्चदेव्यश्चगच्छंतुमुनयोगृहम् ॥ ५० ॥ इत्युक्त्वाश्रीहरिस्तूर्णंययौस्वांतःपरंमुदा ॥ ययुःसर्वेमुदायुक्ताःप्रणम्यज
गदीश्वरम् ॥ १५१ ॥ ब्राह्मणश्चमनोयायीजगामनृपमंदिरम् ॥ उत्थायसंभ्रमात्सद्यःप्रणम्यसादरंमुदा ॥ १५२ ॥ भो
जयित्वातुमिष्टान्नंब्राह्मणंबुभुजेस्वयम् ॥ भुक्त्वातुश्रेष्ठोद्विजश्रेष्ठोयुयुजेपरमाशिषम् ॥ ५३ ॥ जगामस्वालयंतूर्णंप्रश
शंसपुनःपुनः ॥ उवाचपथिविप्रेंद्रोमनसाविस्मयाकुलः ॥ १५४ ॥ माहात्म्यंदुर्लभमहोवैष्णवानामितिद्विजः ॥ १५५ ॥
इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेमुनिमोक्षणप्रस्तावोनामपंचविंशोऽध्यायः ॥ २५ ॥ ॥ नारदउवाच ॥
॥ ॥ द्वादशीलंघनेदोषःश्रुतस्त्वन्मुखतोमुने ॥ पराभवोमुनेश्चैवनृपत्राणंहरेरहो ॥ १ ॥ अधुनाश्रोतुमिच्छामिसर्वेषामी
प्सितंचमे ॥ एकादशीव्रतस्यास्यविधानंवदनिश्चितम् ॥ २ ॥ अहोश्रुतौश्रुतंकिंचिन्मतभेदान्ननिश्चितम् ॥ श्रुतीनांकारण
मुखाच्छ्रोतुंकौतूहलंमम ॥ ३ ॥ नारायणउवाच ॥ ॥ एकादशीव्रतमिदंदेवानामपिदुर्लभम् ॥ श्रीकृष्णप्रीतिजनकंत
पःश्रेष्ठंतपस्विनां ॥ ४ ॥ देवानांचयथाकृष्णोदेवीनांप्रकृतिर्यथा ॥ आश्रमाणांयथाविप्रोवैष्णवानांयथाशिवः ॥ ५ ॥ य
थागणेशःपूज्यानांयथावाणीविपश्चितां ॥ शास्त्राणांचयथावेदास्तीर्थानांजान्हवीयथा ॥ ६ ॥ तैजसानांयथास्वर्णंप्रा
णिनांवैष्णवोयथा ॥ धनानांचयथाविद्यासंगिनांचयथाप्रिया ॥ ७ ॥ प्रमथानांयथारुद्रःश्रेयसांचयथामतिः ॥ आत्मा
यथेंद्रियाणांचचंचलानांयथामनः ॥ ८ ॥ गुरुस्त्रीणांयथामाताबंधूनांचयथापतिः ॥ बलिष्ठानांयथादैवंकालःकलयतां
यथा ॥ ९ ॥ सुशीलंचैवमित्राणांशत्रूणांरुग्यथामुने ॥ यथाकीर्तिःकीर्तिमतांगृहिणांचयथागृहम् ॥ १० ॥ यथाखलो

हिंसकानांदुष्टानांचैवपुंश्चली ॥ तेजस्विनांग्रहेशश्चसहिष्णूनांयथाक्षितिः ॥ ११ ॥ यथामृतंभक्षणानांदाहकानांयथान
लः ॥ यथाश्रीर्धनदातॄणांसतीनांचयथासती ॥ १२ ॥ प्रजेशानांयथाब्रह्मासरितांसागरोयथा ॥ यथासामश्रुतीनांचगाय
त्रीछंदसांयथा ॥ १३ ॥ वृक्षाणांचयथाश्वत्थःपुष्पाणांतुलसीयथा ॥ यथामार्गोहिमासानामृतूनांचयथामधुः ॥ १४ ॥
आदित्यानांयथासूर्योरुद्राणांशंकरोयथा ॥ यथाद्रोणोवसूनांचवर्षाणांभारतंयथा ॥ १५ ॥ देवर्षीणांयथात्वंचब्रह्मर्षी
णांयथाभृगुः ॥ नृपाणांचयथारामःसिद्धानांकपिलोयथा ॥ १६ ॥ यथासनत्कुमारश्चयोगिनांज्ञानिनांवरः ॥ ऐराव
तोगजेंद्राणांपशूनांशरभोयथा ॥ १७ ॥ यथाहिमाद्रिःशैलानांमणीनांकौस्तुभोयथा ॥ सरस्वतीनदीनांचयथापुण्यस्व
रूपिणी ॥ १८ ॥ गंधर्वाणांचित्ररथोयथाश्रेष्ठश्चनारद ॥ यथाकुबेरोयक्षाणांमुनीनांरक्षसांयथा ॥ १९ ॥ यथाश्रेष्ठाचना
रीणांशतरूपावरापरा ॥ मनूनांचयथाश्रेष्ठःस्वयंस्वायंभुवोमनुः ॥ २० ॥ सतीनांवैष्णवानांचब्राह्मणानांविशेषतः ॥ स
त्यंसर्वाणिपापानिब्रह्महत्यादिकानिच ॥ २१ ॥ सत्येवौदनमाश्रित्यश्रीकृष्णव्रतवासरे ॥ भुक्त्वैतानिचपापानियोभुंक्ते
तत्रमंदधीः ॥ २२ ॥ इहातिपातकीसोपियात्यंतेनरकंध्रुवं ॥ एकादशीप्रमाणानियुगसंख्याकृतानिच ॥ २३ ॥ कुंभीपा
केमहाघोरेस्थित्वाचांडालतांव्रजेत् ॥ गलितव्याधियुक्तश्चततःसप्तसुजन्मसु ॥ २४ ॥ पश्चान्मुक्तोभवेत्पापादित्याहकम
लोद्भवः ॥ इत्येवंकथितंब्रह्मन्योदोषस्तत्रभोजने ॥ २५ ॥ द्वादशीलंघनेदोषोमयोक्तश्चश्रुतःपुरा ॥ दशमीलंघनेदोषंनि
बोधकथयामिते ॥ २६ ॥ पुराश्रुतोधर्मवक्राद्वेदसारोतधृतोपिच ॥ दशमींयःकलामात्रांमूढोज्ञानेनलंघयेत् ॥ २७ ॥ या
तिश्रीस्तद्गृहात्तूर्णंशापंदत्वातुदारुणम् ॥ इहतद्वंशहानिश्चयशोहानिर्भवेद्ध्रुवम् ॥ २८ ॥ अंतेमन्वंतरशतमंधकूपेवसेद्द्विज

॥ दशम्येकादशीवापिद्वादशीयत्रवासरे ॥ २९ ॥ तत्रभुत्कापरदिनेउपोष्यव्रतमाचरेत् ॥ द्वादश्यांचव्रतंकृत्वात्रयोदश्यां
चपारणम् ॥ ३० ॥ द्वादशीलंघनेदोषोव्रतिनांतन्नविद्यते ॥ संपूर्णैकादशीयत्रप्रभातेकिंचिदेवसा ॥ ३१ ॥ तत्रोपोष्या
द्वितीयाचपराचेद्यदिवर्धते ॥ षष्टिदंडात्मिकायत्रप्रभातेचतिथित्रयम् ॥ ३२ ॥ कुर्वंतिगृहिणःपूर्वंचैवयत्यादयस्तथा ॥
परत्रानशनंकृत्वानित्यकृत्यंसमाचरेत् ॥ ३३ ॥ व्रतेजागरणंसर्वंपूर्वत्रैवाचरेद्बुधः ॥ तत्पूर्वदिवसेनित्यंव्रतंकृत्वापरेहनि
॥ ३४ ॥ एकादश्यांव्यतीतायांपारणंतुसमाचरेत् ॥ वैष्णवानांयतीनांचविधवानांतथैवच ॥ ३५ ॥ सर्वाःसमाउपोष्या
स्ताभिक्षूणांब्रह्मचारिणाम् ॥ शुक्लामेवतुकुर्वंतिगृहिणोवैष्णवेतराः ॥ ३६ ॥ नकृष्णालंघनेदोषस्तेषांवेदेपुनारद ॥ शय
नीबोधिनीमध्येयाकृष्णैकादशीभवेत् ॥ ३७ ॥ सैवोपोष्यागृहस्थेननान्यापोष्याकदाचन ॥ इत्येवंकथितोब्रह्मन्निर्ण
योयंश्रुतौश्रुतः ॥ ३८ ॥ व्रतस्यास्यविधानंचनिबोधकथयामिते ॥ कृत्वाहविष्यंपूर्वाह्णेनचभुंक्तेपुनर्जलम् ॥ ३९ ॥
एकाकीकुशशय्यायांनक्तंशयनमाचरेत् ॥ ब्राह्मेमुहूर्तेचोत्थायप्रातःकृत्यंविधायच ॥ ४० ॥ नित्यकृत्यंविधायाथत
तःस्नानंसमाचरेत् ॥ व्रतोपवासंसंकल्प्यश्रीकृष्णप्रीतिपूर्वकं ॥ ४१ ॥ कृत्वासंध्यातर्पणंचविधायान्हिकमाचरेत् ॥ नि
त्यपूजादिनेकृत्वाव्रतद्रव्यंसमाहरेत् ॥ ४२ ॥ कृत्वाषोडशोपचारंप्रत्द्दष्टंविधिबोधितः ॥ आसनंवसनंपाद्यमर्घ्यंपुष्पानु
लेपनम् ॥ ४३ ॥ धूपंदीपंचनैवेद्यंयज्ञसूत्रंचभूषणम् ॥ गंधस्नानीयतांबूलंमधुपर्कंपुनर्जलम् ॥ ४४ ॥ एतान्यात्दृत्यदि
वसेव्रतंनक्तंसमाचरेत् ॥ उपविश्यासनेपूतोधृत्वाधौतेयवाससी ॥ ४५ ॥ आचम्यश्रीहरिंनत्वास्वस्तिवाचनमाचरेत् ॥
आरोप्यमंगलघटंधान्याधारेशुभेक्षणे ॥ ४६ ॥ फलशाखाचंदनाक्तंवेदोक्तंमुनिभिर्मुदा ॥ वेदषट्कंसमावात्द्यपृथक्धा

न्यैःसमाचरेत् ॥ ४७ ॥ पूजापंचोपचारैश्चप्रकृष्टैश्चविचक्षणः ॥ गणेश्वरंदिनकरंवन्हिंविष्णुंशिवंशिवाम् ॥ ४८ ॥ संपू
ज्यतान्प्रणम्याथव्रतंकुर्याद्धरिंस्मरन् ॥ नाराध्यदेवषट्कंचयदिकर्मसमाचरेत् ॥ ४९ ॥ नित्यंनैमित्तिकंचापितत्सर्वंनि
ष्फलंभवेत् ॥ इत्येवंकथितंसर्वंव्रतांगभूतमेवच ॥ ५० ॥ कण्वशाखोक्तमिष्टंचव्रतंश्टणुमहामुने ॥ सामवेदोक्तध्यानेन
ध्यात्वाकृष्णंपरात्परम् ॥ ५१ ॥ पुष्पंचशिरसिन्यस्यपुनर्ध्यानंसमाचरेत् ॥ ध्यानंश्टणुनिगूढंचसर्वेषामपिवांछितम् ॥
॥ ५२ ॥ नप्रकाश्यमभक्तायभक्तप्राणाधिकंपरम् ॥ नवीननीरदोयद्वत्श्यामसुंदरविग्रहम् ॥ ५३ ॥ शरत्पार्वणचंद्राभा
विनिंद्यास्यमनुत्तमम् ॥ शरत्सूर्योदयाब्जानांप्रभामोचनलोचनम् ॥ ५४ ॥ स्वांगसौंदर्यशोभाभ्यांरत्नभूषणभूषितम् ॥
गोपीलोचनकोणैश्चप्रसन्नैरतिसूचकैः ॥ ५५ ॥ शश्वन्निरीक्ष्यमाणंतत्प्राणैरिवविनिर्मितम् ॥ रासमंडलमध्यस्थंरासोल्ला
ससमुत्सुकम् ॥ ५६ ॥ राधावक्त्रशरच्चंद्रसुधापानचकोरकम् ॥ कौस्तुभेनमणींद्रेणवक्षस्थलसमुज्ज्वलं ॥ ५७ ॥ पा
रिजातप्रसूनानांमालाजालैर्विराजितम् ॥ सद्रत्नसारनिर्माणंरत्नसारपरिच्छदम् ॥ ५८ ॥ नानाचित्रविचित्राढ्यंगृह्य
तांपरमेश्वर ॥ वन्हिप्रक्षालितंवस्त्रंनिर्मितंविश्वकर्मणा ॥ ५९ ॥ मूल्यानिर्वचनीयंचगृह्यतांराधिकापते ॥ पादप्रक्षालना
र्हंचसुवर्णपात्रसंस्थितम् ॥ ६० ॥ सुवासितंशीतलंचगृह्यतांकरुणानिधे ॥ इदमर्घ्यंपवित्रंचशंखतोयसमन्वितम् ॥ ६१ ॥
पुष्पंदूर्वाचंदनाक्तंगृह्यतांभक्तवत्सल ॥ सुवासितंशुक्लपुष्पंचंदनागुरुसंयुतम् ॥ ६२ ॥ सद्यस्तेप्रीतिजनकंगृह्यतांसर्वका
रण ॥ चंदनागुरुकस्तूरीकुंकुमोशीरमुत्तमम् ॥ ६३ ॥ सर्वेप्सितमिदंकृष्णगृह्यतामनुलेपनम् ॥ रसोवृक्षविशेषस्यनाना
द्रव्यसमन्वितः ॥ ६४ ॥ सुगंधियुक्तःसुखदोधूपोयंप्रतिगृह्यताम् ॥ दिवानिशंसुप्रदीप्तोरत्नसारविनिर्मितः ॥ ६५ ॥ पुन

ध्वांतनाशबीजं दीपोयंप्रतिगृह्यतां ॥ नानाविधानिद्रव्याणिस्वादूनिसुरभीणिच ॥ ६६ ॥ चोष्यादीनिपवित्राणिस्वात्मा
रामप्रगृह्यताम् ॥ सावित्रीग्रंथिसंयुक्तंस्वर्णतंतुविनिर्मितम् ॥ ६७ ॥ गृह्यतांदेवदेवेशरचितंचारुकारुण ॥ अमूल्यरत्न
रचितंसर्वावयवभूषणम् ॥ ६८ ॥ त्विषाजाज्वल्यमानंचगृह्यतांनंदनंदन ॥ प्रधानोवर्णनीयश्चसर्वमंगलकर्मणि ॥ ६९ ॥
प्रगृह्यतांदीनबंधोगंधोयंमंगलप्रदः ॥ धात्रीश्रीफलपत्रोत्थंविष्णुतैलंमनोहरम् ॥ ७० ॥ वांछितंसर्वलोकानांभगवन्प्र
तिगृह्यताम् ॥ वांच्छनीयंचसर्वेषांकर्पूरादिसुवासितम् ॥ ७१ ॥ मयानिवेदितंनाथतांबूलंप्रतिगृह्यताम् ॥ सर्वेषांप्रीतिज
नकंसमिष्टंमधुरंमधु ॥ ७२ ॥ सद्रत्नसारपात्रस्थंगोपीकांतप्रगृह्यताम् ॥ निर्मलंजान्हवीतोयंसुपवित्रंसुवासितम् ॥ ७३
पुनराचमनीयंचगृह्यतांमधुसूदन ॥ इतिषोडशोपचारान्दत्वाभक्तोमुदान्वितः ॥ ७४ ॥ मंत्रेणानेनपुष्पाणिमाल्यंदत्वा
प्रयत्नतः ॥ नानाप्रकारपुष्पैश्चग्रथितंशुक्लतंतुना ॥ ७५ ॥ प्रवरंभूषणानांचमाल्यंचगृह्यतांप्रभो ॥ इतिपुष्पांजलिंदद्या
न्मूलमंत्रेणचव्रती ॥ ७६ ॥ कुर्यात्तत्स्तवनंभक्त्यापुटांजलियुतःसुधीः ॥ ॥ भक्तउवाच ॥ ॥ हेकृष्णराधिकानाथक
रुणासागरप्रभो ॥ ७७ ॥ संसारसागरेघोरेमामुद्धरभयानके ॥ शतजन्मकृतायासमुद्विग्नस्यममप्रभो ॥ ७८ ॥ स्वकर्म
पाशनिगडैर्बद्धस्यमोक्षणंकुरु ॥ प्रणतंपादपद्मेतेपश्यमांशरणागतम् ॥ ७९ ॥ भवपाशभयाद्भीतंपाहित्वंशरणागतम्
॥ भक्तिहीनंक्रियाहीनंविधिहीनंचवेदतः ॥ ८० ॥ वस्तुमंत्रविहीनंयत्तत्संपूर्णंकुरुप्रभो ॥ वेदोक्तविहिताङ्ज्ञानात्स्वांग
हीनेचकर्मणि ॥ ८१ ॥ त्वन्नामोच्चरणेनैवसर्वंपूर्णंभवेद्धरे ॥ इतिस्तुत्वातंप्रणम्यदत्वाविप्रायदक्षिणाम् ॥ ८२ ॥ महोत्स
वंविधायाथकुर्याज्जागरणंव्रती ॥ कृत्वाव्रतोपवासंचयदिनिद्रांनिषेवते ॥ ८३ ॥ पुनरेवजलंभुंक्तेव्रतार्धफलभाग्भवेत् ॥

यत्नेनचहविष्यान्नंसकृदेवसमाचरेत् ॥ ८४ ॥ मंत्रेणानेनविप्रेंद्रश्रीकृष्णचरणंस्मरन् ॥ अन्नंहिप्राणिनांप्राणाब्रह्मणा निर्मितंपुरा ॥ ८५ ॥ देहिमेविष्णुरूपंत्वंव्रतोपवासयोःफलम् ॥ एवंयःकुरुतेभक्त्याभारतेव्रतमुत्तमम् ॥ ८६ ॥ पूर्वान्सप्त परान्सप्तस्वात्मानमुद्धरेद्ध्रुवम् ॥ मातरंभ्रातरंचैवश्वश्रूंश्वशुरंसुताम् ॥ ८७ ॥ जामातरंतथाभृत्यमुद्धरेन्निश्चितंनरः ॥ इत्येवंकथितंविप्रश्रीकृष्णचरितव्रतम् ॥ ८८ ॥ सुखदंमोक्षदंसारमपरंकथयामिते ॥ ८९ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेएकादशीव्रतनिरूपणंनामषड्विंशोऽध्यायः ॥ २६ ॥ ॥ श्रीनारायणउवाच ॥ ॥ शृणुनारदवक्ष्यामिश्रीकृष्णचरितंपुनः ॥ गोपीनांवस्त्रहरणंवरदानंमनीषितम् ॥ १ ॥ हेमंतेप्रथमेमासिगोपिकाःकाममोहिताः ॥ कृत्वाहविष्यंभक्त्याचयावन्मासंसुसंयुताः ॥ २ ॥ स्नात्वासूर्यसुतातीरेपार्वतींवालुकामयीम् ॥ कृत्वावाह्यचमंत्रेणपूजांकुर्वंतिनित्यशः ॥ ३ ॥ चंदनागुरुकस्तूरीकुंकुमैश्चमनोहरैः ॥ नानाप्रकारपुष्पैश्चमाल्यैर्बहुविधैरपि ॥ ४ ॥ हेदेविजगतांमातःसृष्टिस्थित्यंतकारिणि ॥ नंदगोपसुतंकांतमस्मभ्यंदेहिसुव्रते ॥ ५ ॥ मंत्रेणानेनदेवेशींपरिहारंविधायच ॥ ततःकृत्वातुसंकल्पंपूजयन्मूलमंत्रतः ॥ ६ ॥ मंत्रस्तुसामवेदोक्तोऽयातयामःसबीजकः ॥ ओंश्रीदुर्गायैसर्वविघ्नविनाशिन्यैनमइति ॥ ७ ॥ पुष्पंमाल्यंचनैवेद्यं धूपंदीपंतथाशुभम् ॥ मंत्रेणानेनतांभक्त्याददुःसर्वामुदान्विताः ॥ ८ ॥ प्रवालमालयाभक्त्याचेमंमंत्रंसहस्रधा ॥ जपंकृत्वाचस्तुत्वाचप्रणेमुःशिरसाभुवि ॥ ९ ॥ सर्वमंगलमांगल्येसर्वकामप्रदेशिवे ॥ देहिमेवांछितंदेविनमस्तेशंकरप्रिये ॥ १० ॥ इत्युक्त्वाचनमस्कारंकृत्वादत्वाचदक्षिणाम् ॥ नैवेद्यानिचसर्वाणिब्राह्मणेभ्योययुर्गृहम् ॥ ११ ॥ श्रीनारायणउवाच ॥ स्तवराजंशृणुमुनेतुष्टुवुर्येनपार्वतीम् ॥ भक्त्यागोपांगनाःसर्वाःसर्वाभीष्टफलप्रदाम् ॥ १२ ॥ जगत्येकार्णवेघोरेचंद्रसूर्य

विवर्जिते ॥ अंजनाकारतोयेनसंप्लुतेचचराचरे ॥ १३ ॥ दत्तंपुराब्रह्मणेचहरिणाजलशायिना ॥ तस्मैदत्वासर्वमिदंनि
द्रांभेजेजगत्पतिः ॥ १४ ॥ नाभिपद्मेजगत्स्रष्टामधुनाकैटभेनच ॥ पीडितःपरितुष्टावमूलप्रकृतिमीश्वरीम् ॥ १५ ॥
ब्रह्मोवाच ॥ ॥ दुर्गेशिवेभयेमायेनारायणिसनातनि ॥ जयेमेमंगलंदेहिनमस्तेसर्वमंगले ॥ १६ ॥ दैत्यनाशार्थवचनोद
कारःपरिकीर्तितः ॥ उकारोविघ्ननाशार्थवाचकोवेदसंमतः ॥ १७ ॥ रेफोरोगघ्नवचनोगश्चपापघ्नवाचकः ॥ भयशत्रुघ्नव
चनश्चाकारःपरिकीर्तितः ॥ १८ ॥ स्मृत्युक्तिस्मरणाद्यस्याएतेनश्यंतिनिश्चितम् ॥ अतोदुर्गाहरेःशक्तिर्हरिणापरिकीर्ति
ता ॥ १९ ॥ विपत्तिवाचकोदुर्गश्चाकारोनाशवाचकः ॥ दुर्गंनश्यतियानित्यंसादुर्गापरिकीर्तिता ॥ २० ॥ दुर्गोदैत्येंद्रवच
नोप्याकारोनाशवाचकः ॥ तंननाशपुरातेनबुधैर्दुर्गाप्रकीर्तिता ॥ २१ ॥ शश्चकल्याणवचनइकारोत्कृष्टवाचकः ॥ समूहवा
चकश्चैववाकारोदातृवाचकः ॥ २२ ॥ श्रेयःसंघोत्कृष्टदात्रीशिवातेनप्रकीर्तिता ॥ शिवराशिर्मूर्तिमतीशिवातेनप्रकीर्तिता ॥
॥ २३ ॥ शिवोहिमोक्षवचनश्चाकारोदातृवाचकः ॥ स्वयंनिर्वाणदात्रीयासाशिवापरिकीर्तिता ॥ २४ ॥ अभयोभयनाशो
क्तश्चाकारोदातृवाचकः ॥ प्रददात्यभयंसद्यःसाभयापरिकीर्तिता ॥ २५ ॥ राज्यश्रीवचनोमाश्चयाश्चप्रापणवाचकः ॥ तां
प्रापयतियासद्यःसामायापरिकीर्तिता ॥ २६ ॥ माश्चमोक्षार्थवचनोयाश्चप्रापणवाचकः ॥ तंप्रापयतियानित्यंसामाया
परिकीर्तिता ॥ २७ ॥ नारायणार्धांगभूतातेनतुल्याचतेजसा ॥ तदातस्यशरीरस्थातेननारायणिस्मृता ॥ २८ ॥ निर्गुण
स्यचनित्यस्यवाचकश्चसनातनः ॥ सदानित्यानिर्गुणायाकीर्तितासासनातनी ॥ २९ ॥ जयःकल्याणवचनोयाकारोदा
तृवाचकः ॥ जयंददातियानित्यंसाजयापरिकीर्तिता ॥ ३० ॥ तस्मैदत्वानिद्रितश्चबभूवजगतांपतिः ॥ मधुकैटभौदुर्गातौ

ब्रह्माणंहंतुमुद्यतौ ॥ ३१ ॥ स्तोत्रेणानेनसब्रह्मास्तुतिंनत्वाचकारह ॥ साक्षात्स्तुतातदादुर्गाब्रह्मणेकवचंददौ ॥ ३२ ॥ श्री
कृष्णकवचंदिव्यंसर्वरक्षणनामकम् ॥ दत्वातस्मैमहामायासांतर्धानंचकारह ॥ ३३ ॥ स्तोत्रंकुर्वंतिनिद्रांचसंरक्ष्यकवचे
नवै ॥ निद्रानुग्रहतःसद्यःस्तोत्रस्यैवप्रभावतः ॥ ३४ ॥ तत्राजगामभगवान्वृषरूपीजनार्दनः ॥ शक्त्याचदुर्गयासार्धंशं
करस्यजयायच ॥ ३५ ॥ सरथंशंकरंमूर्ध्निकृत्वाचनिर्भयंददौ ॥ अत्यूर्ध्वंप्रापयामासजयातस्मैजयंददौ ॥ ३६ ॥ स्तोत्र
स्यैवप्रभावेनसंप्राप्यकवचंविधिः ॥ वरंचकवचंप्राप्यनिर्भयंप्रापनिश्चितम् ॥ ३७ ॥ ब्रह्माददौमहेशायस्तोत्रंचकवचंव
रम् ॥ त्रिपुरस्यचसंग्रामेसरथेपतितेहरौ ॥ ३८ ॥ ब्रह्मास्त्रंचगृहीत्वासससनिद्रंश्रीहरिंस्मरन् ॥ स्तोत्रंचकवचंप्राप्यजघा
नत्रिपुरंहरः ॥ ३९ ॥ स्तोत्रेणानेनतांदुर्गांकृत्वागोपालिकाःस्तुतिं ॥ लेभिरेश्रीहरिंकांतंस्तोत्रस्यास्यप्रभावतः ॥ ४० ॥
गोपकन्याकृतंस्तोत्रंसर्वमंगलनामकम् ॥ वांछितार्थप्रदंसद्यःसर्वविघ्नविनाशनं ॥ ४१ ॥ त्रिसंध्यंयःपठेन्नित्यंभक्तियुक्त
श्चमानवः ॥ शैवोवावैष्णवोवापिशक्तोदुर्गात्प्रमुच्यते ॥ ४२ ॥ राजद्वारेस्मशानेचदावाग्नौप्राणसंकटे ॥ हिंस्रजंतुभयग्रस्तो
मग्नःपोतेमहार्णवे ॥ ४३ ॥ शत्रुग्रस्तेचसंग्रामेकारागारेविपद्गते ॥ गुरुशापेब्रह्मशापेबंधुभेदेचदुस्तरे ॥ ४४ ॥ स्थानभ्रष्टे
धनभ्रष्टेजातिभ्रष्टेशुचान्विते ॥ पतिभेदेपुत्रदेभेखलसर्पविषान्विते ॥ ४५ ॥ स्तोत्रस्मरणमात्रेणसद्योमुच्यतनिर्भयः ॥
वांछितंलभतेसद्यःसर्वैश्वर्यमनुत्तमम् ॥ ४६ ॥ इहलोकेहरेर्भक्तिंदृढांचसततंस्मृतिम् ॥ अंतेदास्यंचलभतेपार्वत्याश्चप्र
सादतः ॥ ४७ ॥ अनेनस्तवराजेनतुष्टुवुर्नित्यमीश्वरीम् ॥ प्रणेमुःपरयाभक्त्यायावन्मासंव्रजांगनाः ॥ ४८ ॥ एवंपूर्णे
चमासेचसमाप्तिदिवसेतथा ॥ स्नातुंप्रजग्मुर्गोप्यश्चवस्त्राण्याधायतत्तटे ॥ ४९ ॥ नानाविधानिद्रव्याणिरत्नमूल्यानिना

रद ॥ पीतलोहितशुक्लानिचारूणिमिश्रितानिच ॥ ५० ॥ तीरावृतान्यसंख्यानितैश्चतीरंसुशोभनम् ॥ चंदनागुरुकस्तूरी
वायुनासुरभीकृतम् ॥ ५१ ॥ नैवेद्यैश्चबहुविधैःकालदेशोद्भवैःफलैः ॥ धूपैःप्रदीपैःसिंदूरैःकुंकुमैश्चविराजितम् ॥ ५२ ॥
जलेक्रीडोन्मुखागोप्योबभूवुःकौतुकेनच ॥ नग्नाःक्रीडाभिरासक्ताःश्रीकृष्णार्पितमानसाः ॥ ५३ ॥ दृष्ट्वाकृष्णश्चवस्त्राणि
द्रव्याणिविविधानिच ॥ वासांस्यादायवस्तूनिचखादशिशुभिःसह ॥ ५४ ॥ गत्वादूरंचगोपालास्तस्थुःसर्वेमुदान्विताः
॥ वस्त्राणिपुंजीकृत्यादौत्यूचुःस्कंधेतिलोलुपाः ॥ ५५॥ श्रीदामाचसुदामाचवसुदामातथैवच ॥ सुबलश्चसुपार्श्वश्चशुभां
गःसुंदरस्तथा ॥ ५६ ॥ चंद्रभानोवीरभानःसूर्यभानस्तथैवच ॥ वसुभानोरत्नभानोगोपालाद्वादशास्मृताः ॥ ५७ ॥ श्रीकृ
ष्णोबलदेवश्चप्रधानाश्चचतुर्दश ॥ गोपाहरेर्वयस्याश्चकोटिशःकोटिशोमुने ॥ ५८ ॥ वस्त्राण्यादायतेसर्वेतस्थुरेकत्रदूरतः ॥
शतशःपुंजिकास्तत्रस्थापयामासुरुन्मुखाः ॥ ५९ ॥ किंचिद्वस्त्रंसमादायकृत्वाचपुंजिकांमुदा ॥ समारुह्यकदंबाग्रमुवा
चगोपिकांहरिः ॥ ६० ॥ श्रीकृष्णउ० ॥ भोभोगोपालिकाःसर्वाविनष्टव्रतकर्मणि ॥ कृत्वाविधानंमद्वाक्यंश्रुत्वाक्रीडतम
न्मथात् ॥ ६१ ॥ संकल्पितेव्रतार्हेचमासेमंगलकर्मणि ॥ यूयंनग्नाःकथंतोयेव्रतांगहानिकारिकाः ॥ ६२ ॥ परिधेयानिवा
सांसिपुष्पमाल्यानियानिच ॥ व्रतार्हाणिचवस्तूनिकेननीतानिवोधुना ॥ ६३ ॥ व्रतेतुनग्नायास्नातितांरुष्टोवरुणःस्वयं ॥
वरुणानुचरावासश्चक्रुर्वस्तूनिनिर्ह्रतिम् ॥ ६४॥ कथंयास्यथनग्नाश्चव्रतस्यांकिंभविष्यति ॥ व्रताराध्याकथंसाचवस्तू
निकिंनरक्षति ॥ ६५ ॥ चिंतांकुरुततांपूज्यांतुष्टावबलिरीश्वरीम् ॥ युष्माकमीदृशीदेवीनशक्तावस्तुरक्षणे ॥ ६६ ॥ कथं
व्रतफलंसावोदातुंशक्तासुरेश्वरी ॥ फलंप्रदातुंयाशक्तासाशक्तासर्वकर्मणि ॥ ६७ ॥ श्रीकृष्णस्यवचःश्रुत्वाचिंतामापुर्व्र

जस्त्रियः ॥ ददृशुर्यमुनातीरंवस्त्रवस्तुविहीनकम् ॥ ६८ ॥ चक्रुर्विषादंतोयेचनग्नास्तारुरुदुर्भृशम् ॥ क्वगतानिचवस्त्राणि
वस्तूनीत्यूचुरत्रनः ॥ ६९ ॥ कृत्वाविषादंतत्रैवतमूचुर्गोपकन्यकाः ॥ पुटांजलियुताःसर्वाभक्त्याविनयपूर्वकम् ॥ ७० ॥
॥ ॥ गोपालिकाऊचुः ॥ ॥ परिधेयानिवस्त्राणिकिंकरीणांसदीश्वर ॥ निबोधयात्मानमेवस्पर्शं कर्तुंत्वमर्हसि ॥ ७१ ॥
व्रतार्हाणिचवस्तूनिदेवस्वानिचसांप्रतम् ॥ अदत्तानिनोचितानिगृहीतुंवेदविद्वद ॥ ७२ ॥ देहिधौतानिधृत्वाचकरिष्यामो
व्रतंवयम् ॥ वस्तुनान्येनगोविंदवस्तूनिभक्षणंकरु ॥ ७३ ॥ एतस्मिन्नंतरेतत्रश्रीदामावस्त्रपुंजिकाम् ॥ दर्शयित्वाचताः
सर्वादूरंदुद्रावतत्पुरः ॥ ७४ ॥ दृष्ट्वासवस्त्रंगोपालंसर्वासामीश्वरीपरा ॥ सर्वावयस्याश्चोवाचकोपयुक्ताजलप्लुता ॥ ७५ ॥
॥ ॥ श्रीराधिकोवाच ॥ ॥ हेसुशीलेशशिकलेहेचंद्रमुखिमाधवि ॥ कदंबमालेहेकुंतियमुनेसर्वमंगले ॥ ७६ ॥ हेपद्म
मुखिसावित्रिपारिजातेचजान्हवि ॥ सुधामुखिशुभेपद्मेहेगौरिहेस्वयंप्रभे ॥ ७७ ॥ कालिकेकमलेदुर्गेहेसरस्वतिभार
ति ॥ अपूर्णेरतिहेगंगेचांबिकेसतिसुंदरि ॥ ७८ ॥ कृष्णप्रियेमधुमतिचंपेचंदननंदिनि ॥ यूयंसर्वाःसमुत्थायबध्वानयत
वल्लवम् ॥ ७९ ॥ सर्वाराधाज्ञयातूर्णंसमुत्थायजलात्क्रुधा ॥ प्रजग्मुर्गोपिकानग्नायोनिमाच्छाद्यपाणिना ॥ ८० ॥ एता
सांसहचारिण्योगोप्यस्तूर्णंसहस्रशः ॥ प्रजग्मुस्तेनरूपेणकोपादारक्तलोचनाः ॥ ८१ ॥ वेगेनदुद्रुवुःसर्वाःश्रीदामानंच
बालिकाः ॥ वेगेनचप्रधावंतंबिभ्रंतंवस्त्रपुंजिकाम् ॥ ८२ ॥ जगामशीघ्रंश्रीदामायत्रगोपाःसहांशुकाः ॥ जवेनदुद्रुवुर्गो
प्यस्ततपश्चाद्बलसंयुताः ॥ ८३ ॥ वस्त्रचोरांश्चगोपांश्चवेष्टयामासुराशुताः ॥ भियाप्रदुद्रुवुर्बालायत्रकृष्णःसहांशुकः ॥ ८४ ॥
श्रीकृष्णसहितान्बालान्वरयामासुराशुच ॥ गोपिकानांभियागोपाददुर्वस्त्राणिमाधवम् ॥ ८५ ॥ माधवःस्थापयामास

स्कंधेस्कंधेतरोस्तथा ॥ कदंबवृक्षःशुशुभेवस्त्रैर्नानाविधैरपि ॥ ८६ ॥ वस्त्राणांपुंजिकाःसर्वाःस्कंधेषुविनिधायच ॥ उवाच
गोपिकाःकृष्णःपरिहासपरंवचः ॥ ८७॥ श्रीकृष्णउवाच ॥ ॥ भोभोगोपालिकानग्नाइदानींकिंकरिष्यथ ॥ वस्त्रयाञ्चां
प्रकर्तुंचकुरुताशुपुटांजलिम् ॥ ८८ ॥ गत्वावदतयुष्माकमीश्वरीमथराधिकाम् ॥ करोतुशीघ्रंवस्त्राणियाञ्चांकृत्वा
पुटांजलिम् ॥ ८९ ॥ अन्यथाहंनदास्यामियुष्मभ्यमंशुकानिच ॥ युष्माकमीश्वरीराधाकिंकरिष्यतिमेधुना ॥ ९० ॥
व्रताराध्याचयादेवीसावामेकिंकरिष्यति ॥ इत्येवंकथितंसर्वंब्रूतयूयंचराधिकाम् ॥ ९१ ॥ श्रीकृष्णवचनंश्रुत्वाताःसर्वागो
पकन्यकाः ॥ वीक्ष्यलोचनकोणेनप्रजग्मूराधिकांतिकम् ॥ ९२ ॥ चक्रुर्निवेदनंगत्वायदुवाचहरिःस्वयम् ॥ श्रुत्वाजहास
साराधाबभूवकामपीडिता ॥ ९३ ॥ श्रुत्वातासांचवचनंपुलकांचितविग्रहा ॥ नजगामहरेःस्थानंव्रीडयासस्मितासती ॥ ९४
जलेयोगासनंकृत्वादध्यौकृष्णपदांबुजम् ॥ ब्रह्मेशानंतुधर्माणांवंद्यमीप्सितदंपरम् ॥ ९५ ॥ स्मारंस्मारंपदांभोजंसाश्रु
संपूर्णलोचना ॥ भावातिरेकात्प्राणेशंतुष्टावनिर्गुणंपरम् ॥ ९६ ॥ ॥ राधिकोवाच ॥ ॥ गोलोकगोपगोपीशमदीश
प्राणवल्लभ ॥ हेदीनबंधोदीनेशसर्वेश्वरनमोस्तुते ॥ ९७ ॥ गोपेशगोसमूहेशयशोदानंदवर्धन ॥ नंदात्मजसदानंदनित्या
नंदनमोस्तुते ॥ ९८ ॥ शतमन्योर्मन्युभग्नब्रह्मदर्पविनाशक ॥ कालीयदमनप्राणनाथकृष्णनमोस्तुते ॥ ९९ ॥ शिवा
नंतेशब्रह्मेशब्राह्मणेशपरात्पर ॥ ब्रह्मस्वरूपब्रह्मज्ञब्रह्मबीजनमोस्तुते ॥ १०० ॥ चराचरतरोर्बीजगुणातीतगुणात्मक
गुणबीजगुणाधारगुणीश्वरनमोस्तुते ॥ १ ॥ अणिमादिकसिद्धीशसिद्धेसिद्धस्वरूपक ॥ तपस्तपस्विन्स्तपसांबीजरूपन
मोस्तुते ॥ २ ॥ यदनिर्वच्यनीयंचवस्तुनिर्वचनीयकम् ॥ तत्स्वरूपतयोर्बीजसर्वबीजनमोस्तुते ॥ ३ ॥ अहंसरस्वतीलक्ष्मी

र्दुर्गागंगाश्रुतिप्रसूः ॥ यस्यपादार्चनान्नित्यंपूज्यातस्मैनमोनमः ॥ ४ ॥ स्पर्शनेयस्यभृत्यानांध्यानेनचदिवानिशम् ॥ पवित्राणिचतीर्थानितस्मैभगवतेनमः ॥ ५ ॥ इत्येवमुक्त्वासादेवीजलेसंन्यस्यविग्रहम् ॥ मनःप्राणांश्चश्रीकृष्णेतस्थौस्थाणुसमासती ॥ ६ ॥ राधाकृतंहरेःस्तोत्रंत्रिसंध्यंयःपठेन्नरः ॥ हरिभक्तिंचदास्यंचलभेद्राधागतिंध्रुवम् ॥ ७ ॥ विपत्तौयःपठेद्भक्त्यासद्यःसंपत्तिमाप्नुयात् ॥ चिरकालगतंद्रव्यंहृतंनष्टंचलभ्यते ॥ १०८ ॥ बंधुवृद्धिर्भवेत्तस्यप्रसंगंमानसंपरम् ॥ चिंताग्रस्तःपठेद्भक्त्यापरांनिर्वृत्तिमाप्नुयात् ॥ ९ ॥ पतिभेदेपुत्रभेदेमित्रभेदेचसंकटे ॥ मासंभक्त्यायदिपठेत्सद्यःसदर्शनंलभेत् ॥ १० ॥ भक्त्याकुमारीस्तोत्रंचशृणुयाद्वत्सरंयदि ॥ श्रीकृष्णसदृशंकांतंगुणवंतंलभेद्ध्रुवम् ॥ ११ ॥ जलस्थाराधिकाध्यात्वाश्रीकृष्णचरणांबुजम् ॥ स्तुत्वैवंचक्षुरुन्मील्यदृष्ट्वाकृष्णमयंजगत् ॥ १२ ॥ ददर्शयमुनातीरंवस्त्रद्रव्यमयंमुने दृष्ट्वातंद्राथवास्वप्नमितिमेनेचराधिका ॥ १३ ॥ यत्रस्थानेयदाधारेयद्द्रव्यंसंस्थितंपुरा ॥ वस्त्रैश्चसहितंसर्वंतत्प्रापुर्गोपकन्यकाः ॥ १४ ॥ जलादुत्थायताःसर्वाव्रतंकृत्वामनीषितं ॥ संप्राप्यचवरंदेव्यस्ताःसर्वाःस्वालयंययुः ॥ १५ ॥ ॥ नारद उवाच ॥ ॥ व्रतस्यकिंविधानंचकिंनामकिंफलंप्रभो ॥ कानिद्रव्याणिदेयानिकादेयातत्रदक्षिणा ॥ १६ ॥ व्रतांतेकिंरहस्यंचबभूवसुमनोहरम् ॥ व्यासंकृत्वामहाभागवदनारायणींकथां ॥ १७ ॥ ॥ सूतउवाच ॥ ॥ नारदस्यवचःश्रुत्वाप्रहस्यमुनिपुंगवः ॥ कथांकथितुमारेभेकवींद्राणांगुरोर्गुरुः ॥ १८ ॥ ॥ नारायणउवाच ॥ ॥ सर्वव्रतविधानंचमत्तोवत्सनिशामय ॥ ख्यातंगौरीव्रतंनाममार्गेमासिकृतेस्त्रिया ॥ १९ ॥ पुंसांचधर्मकामार्थमोक्षदंकृष्णभक्तिदं ॥ देशभेदेप्रसिद्धंचव्रतंपौर्वापरंस्मृतम् ॥ २० ॥ कामदंकामुकानांचफलंकांतनिमित्तकम् ॥ उपोष्यपूर्वदिवसेवस्त्रंप्रक्षाल्यसंयताः ॥ २१ ॥ प्रातश्चमार्ग

संक्रांत्यांभक्त्यागत्वासरित्तटम् ॥ धृत्वाधौतेचस्नात्वाचनानाद्रव्येणकन्यका ॥ २२ ॥ देवषट्कंचसंपूज्यकृत्वाचावाह
नंघटे ॥ गणेशंचदिनेशंचवन्हिंनारायणंशिवम् ॥ २३ ॥ दुर्गांपंचोपचारैश्चसंपूज्यव्रतमारभेत् ॥ घटाधःपिंडिकांकृत्वाच
तुरस्रांसुविस्तृताम् ॥ चंदनागुरुकस्तूरीकुंकुमैश्चसुसंस्कृताम् ॥ २४ ॥ निर्मायवालुकानांचदुर्गांदशभुजांपरां ॥ धृत्वाक
पालेसिंदूरंतदधश्चंदनेंदुकम् ॥ २५ ॥ तांध्यात्वावाहयेद्देवींततोभूत्वापुटांजलिः ॥ इमंमंत्रंपठित्वादौततःपूजांसमारभेत्
॥ २६ ॥ हेगौरिशंकरार्धांगियथात्वंशंकरप्रिया ॥ तथामांकुरुकल्याणिकांतकांतासुदुर्लभां ॥ २७ ॥ इमंमंत्रंपठित्वातु
ध्यायेद्देवींजगत्प्रसूम् ॥ ध्यानंतत्सामवेदोक्तंनिगूढंसर्वकामदं ॥ शृणुनारदवक्ष्यामिमुनींद्राणांचदुर्लभं ॥ २८ ॥ ध्या
यंत्यनेनसिद्धाश्चदुर्गांदुर्गतिनाशिनीं ॥ शिवांशिवप्रियांशैवांशिववक्षस्थलस्थिताम् ॥ २९ ॥ ईषद्धास्यप्रसन्नास्यांसुप्र
तिष्ठांसुलोचनाम् ॥ नवयौवनसंपन्नांरत्नाभरणभूषिताम् ॥ ३० ॥ रत्नकंकणकेयूररत्ननूपरभूषिताम् ॥ रत्नकुंडलयु
ग्मेनगंडस्थलविराजिताम् ॥ ३१ ॥ मालतीमाल्यसंसक्तकबरींभ्रमरान्विताम् ॥ सिंदूरतिलकंचारुकस्तूरीबिंदुनासह ॥
॥३२॥ वन्हिशुद्धांशुकांरत्नकिरीटांसुमनोहराम् ॥ मणींद्रसारसंसक्तरत्नमालासमुज्वलाम् ॥ ३३ ॥ पारिजातप्रसूनानां
मालाजालानुलंबिताम् ॥ सुपीनकठिनश्रोणींबिभ्रतींचस्तनानताम् ॥ ३४ ॥ नवयौवनभारौघादीषन्नम्रांमनोहराम् ॥
ब्रह्मादिभिस्तूयमानांसूर्यकोटिसमप्रभाम् ॥ ३५ ॥ पक्वबिंबाधरोष्ठींचचारुचंपकसन्निभाम् ॥ मुक्तापंक्तिविनिंद्यैकदंत
राजिविराजिताम् ॥३६॥ मुक्तिकामप्रदांदेवींशरच्चंद्रमुखींभजे ॥ ध्यात्वैवंमस्तकेपुष्पंविन्यस्यचव्रतीमुदा ॥ ३७ ॥ पु
ष्पंगृहीत्वाभक्त्याचपुनर्ध्यात्वाचपूजयेत् ॥ दत्वाषोडशोपचारान्प्रत्दष्टंतत्रनित्यशः ॥ ३८ ॥ पूर्वोक्तेनैवमंत्रेणमुदाभ

त्स्यावृतेव्रती ॥ पूर्वोक्तेनैवस्तोत्रेणस्तुत्वाचप्रणमेत्तदा॥ ३९॥ कृत्वाप्रणामंभक्त्याचसंयतःशृणुयात्कथाम् ॥ ॥ नारद
उ०॥ व्रतंव्रतविधानंचफलंचस्तोत्रमद्भुतं ॥ ४० ॥ अधुनाश्रोतुमिछामिगौरीव्रतकथांशुभाम् ॥ व्रतंकेनकृतंपूर्वंभूमौकेनप्र
काशितम् ॥ ४१॥ एतत्सर्वंसुविस्तार्यव्रतसंदेहभंजन ॥ ॥ श्रीनारायणउवाच ॥ ॥ कुशध्वजस्यहिसुतानाम्नावेदवतीसती
॥ ४२ ॥ तयाकृतंव्रतमिदंमहातीर्थेचपुष्करे ॥ समाप्तिदिवसेसाक्षाद्बभूवजगदंबिका ॥ ४३॥ योगिनीलक्षसंयुक्तासूर्यको
टिसमप्रभा ॥ शातकुंभविनिर्माणरथस्थापरमेश्वरी ॥४४॥ ईषद्धास्यप्रसन्नास्यातामुवाचसुसंयताम् ॥ पार्वत्युवाच ॥
हेवेदवतिभद्रंतेवरंवृणुयथेप्सितम् ॥ ४५ ॥ तवव्रतेनतुष्टाहंतुभ्यंदास्यामिवांछितम् ॥ पार्वतीवचनंश्रुत्वाहृष्टातांहृष्टमा
नसां ॥ ४६ ॥ पुटांजलियुतासाध्वीप्रणम्योवाचनारद ॥ ॥ वेदवत्युवाच ॥ ॥ देविनारायणंकांतंमत्वंदेहिमनीषितम् ॥
॥ ४७ ॥ वरेन्यस्मिन्स्पृहानास्तिदृढांभक्तिंचतत्पदे ॥ श्रुत्वावेदवतीवाक्यंप्रहस्यजगदंबिका ॥ ४८ ॥ अवरुह्यरथात्तूर्णं
तामुवाचहरिप्रियाम् ॥ ॥ पार्वत्युवाच ॥ ॥ ज्ञातंसर्वंजगन्मातस्त्वंचलक्ष्मीःस्वयंसती ॥ ४९ ॥ भारतंपादरजसापूतंक
र्तुंसमागता ॥ त्वत्पादरजसासाध्वीसद्यःपूतावसुंधरा ॥ ५० ॥ निखिलानिचतीर्थानिपूतानिपरमेश्वरी ॥ व्रतंतेलोकशिक्षा
र्थंतपश्चरतपस्विनि ॥ ५१ ॥ नारायणस्यकांतात्वंप्रियाजन्मनिजन्मनि ॥ भारावतरणेविष्णुर्वसुधामागमिष्यति ॥५२॥
रामोदाशरथिःपूर्णःकर्तुंदस्युविनिग्रहम् ॥ ब्रह्मशापाच्चच्युतयोर्मोक्षणायचभक्तयोः ॥ ५३ ॥ अयोध्यायांचत्रेताया
माविर्भावोहरेरपि ॥ त्वमेवमिथिलांगच्छविधायशिशुविग्रहम् ॥ ५४ ॥ त्वामिमांप्राप्यजनकोप्ययोनिसंभवांसुताम् ॥
पालयिष्यतियत्नेनसीतात्वंचभविष्यसि ॥ ५५ ॥ गत्वारामोपिमिथिलांत्वांविवाहंकरिष्यति ॥ नारायणस्यकांतात्वंक

ल्पेकल्पेभविष्यसि ॥ ५६ ॥ इत्युक्त्वातांसमालिंग्यपार्वतीस्वालयंययौ ॥ गत्वासामिथिलांसाध्वीशिशुरूपंविधायच ॥ ५७ ॥ लांगलस्यचरेखायांसुखात्तस्थौचमायया ॥ विलोक्यजनकस्तांचनग्नांमुद्रितलोचनाम् ॥ ५८ ॥ तप्तकांचन वर्णांचरुदंतींतेजसान्विताम् ॥ दृष्ट्वातांचगृहीत्वाचकृत्वावक्षसिनारद ॥ ५९ ॥ गच्छंतंप्रतितत्रैववाग्बभूवाशरीरिणी ॥ अयोनिसंभवांकन्यांकमलांग्रहणंकुरु ॥ ६० ॥ नारायणस्तेजामाताभवितेत्येवमेवच ॥ श्रुत्वातदादेववाणींगृहीत्वा कन्यकामृषिः ॥ ६१ ॥ गत्वाददौस्वकांतायैपालनायमुदान्वितः ॥ सालब्धयौवनाप्रापरामंदाशरथिंसती ॥ ६२ ॥ व्रत स्यास्यप्रभावेनकांतंत्रिजगतांपतिम् ॥ प्रकाशितंवसिष्ठेनपृथिव्यांभक्तिभावतः ॥ ६३ ॥ राधाकृत्वाव्रतमिदंश्रीकृष्णंप्रा णवल्लभम् ॥ गोपांगनाश्चतंप्रापुर्व्रतस्यास्यप्रभावतः ॥ ६४ ॥ इत्येवंकथिताविप्रकथागौरीव्रतस्यच ॥ भारतेचव्रतमि दंयाकरोतिकुमारिका ॥ ६५ ॥ स्वामिनंकृष्णतुल्यंचसाप्राप्नोतिनसंशयः ॥ ॥ श्रीनारायणउवाच ॥ ॥ एवंव्रतंचच क्रुस्तायावन्मासंचगोपिकाः ॥ ६६ ॥ पूर्वस्तोत्रेणतांदेवींतुष्टुवुश्चदिनेदिने ॥ समाप्तिदिवसेगोप्योव्रतंकृत्वामुदान्विताः ॥ ॥ ६७ ॥ कण्वशाखोक्तस्तोत्रेणतुष्टुवुःपरमेश्वरीम् ॥ येनस्तोत्रेणतांस्तुत्वासीतासत्यपरायणा ॥ ६८ ॥ सद्यःसंप्रापकां तंचरामंराजीवलोचनम् ॥ ॥ जानक्युवाच ॥ ॥ शक्तिस्वरूपेसर्वेषांसर्वाधारेगुणाश्रये ॥ ६९ ॥ सदाशंकरयुक्तेचप तिंदेहिनमोस्तुते ॥ सृष्टिस्थित्यंतरूपेणसृष्टिस्थित्यंतरूपिणी ॥ ७० ॥ सृष्टिस्थित्यंतबीजानांबीजरूपेनमोस्तुते ॥ हेगौ रिपतिमर्मज्ञेपतिव्रतपरायणे ॥ ७१ ॥ पतिव्रतेपतिरतेपतिंदेहिनमोस्तुते ॥ सर्वमंगलमांगल्येसर्वमंगलसंयुते ॥ ७२ ॥ स र्वमंगलबीजेचनमस्तेसर्वमंगले ॥ सर्वप्रियेसर्वबीजेसर्वाशुभविनाशिनि ॥ ७३ ॥ सर्वेशेसर्वजनकेनमस्तेशंकरप्रिये ॥ प

पुनः ॥ कल्पांतरेत्रकल्पेवादेहेदेहांतरेत्रवा ॥ ३९ ॥ पुनःपूजानभवितायागतासागतैवच ॥ इत्युक्त्वामोहिनीशीघ्रंजगा
ममदनालयम् ॥ ४० ॥ तेनसार्द्धंरतिंकृत्वाबभूवविज्वरापुनः ॥ पश्चात्साचेतनांप्राप्यविललापभृशंपुनः ॥ ४१ ॥ अयंकथं
मयाशप्तोजगद्विधिरतिप्रियः॥ स्ववेश्यायांगतायांचमुनयोदुःखिताभृशं ॥४२॥ स्वयंविधाताजगतांचकंपेनतकंधरः
॥ उपायंमुनयस्तस्मैददुःकल्याणकारिणः ॥ ४३ ॥ शरणंव्रजवैकुंठमित्युक्त्वातेगृहान्युयुः ॥ ब्रह्माजगामशरणंममम्रू
र्त्यंतरंपरम् ॥ ४४ ॥ शांतंतंकमलाकांतंश्यामंनारायणाभिधम् ॥ गत्वाविषण्णबदनःप्रणम्यचचतुर्भुजम् ॥ ४५ ॥ तत्रो
वासजगत्कर्तानातिदूरेसमीपतः ॥ रहस्यंकथयामासशुष्ककंठोष्ठतालुकः ॥ ४६ ॥ दीनबंधुदयासिंधुविपत्तारणकारण
॥ श्रुत्वारहस्यंतत्सर्वंप्रहस्योवाचतंविभुः ॥ ४७ ॥ सत्यंसारंहितंवाक्यंजगतांचसुखावहम् ॥ ॥ श्रीनारायणउवाच ॥
स्वयंत्वंवेदविदसिविदुषांचगुरोर्गुरुः ॥ ४८ ॥ त्वयाकृतंचयत्कर्मइहकेननतत्कृतम् ॥ स्त्रीजातिःप्रकृतेरंशाजगतांबीज
रूपिणी ॥ ४९ ॥ स्त्रीणांविडंबनेनैवप्रकृतेश्चविडंबनं ॥ नतद्भारतवर्षंचपुण्यक्षेत्रमनुत्तमम् ॥ ५० ॥ क्रीडाक्षेत्रेब्रह्मलोके
कस्तवेंद्रियनिग्रहः ॥ यदितद्भारतेदैवात्कामिनीसमुपस्थिता ॥ ५१ ॥ स्वयंरहसिकामार्तानसात्याज्याजितेंद्रियैः ॥ त्य
क्त्वापरत्रनरकंव्रजेदितिविडंबतः ॥ ५२ ॥ भवेदेवहिदुःखार्ताशापंदद्याच्चतंध्रुवं ॥ विहायस्वकलत्रंचयोगृह्णातिपरस्त्रियं
॥ ५३ ॥ लोभात्कामसुखाद्वापिसोधमोनात्रसंशयः ॥ पातयित्वासचपतेद्दश पूर्वान्दशापरान् ॥ ५४ ॥ त्यक्त्वास्वस्वा
मिनंयाचपरंगच्छतिकामतः ॥ नपुमान्नचवेश्याचकुलस्त्रीतत्रदुष्यति ॥ ५५ ॥ उपायेनचयासाध्यंकरोतिपरपूरुषम्
॥ सातिष्ठत्येवांधकूपेयावच्चंद्रदिवाकरौ ॥ ५६ ॥ स्ववेश्याचदिवंयातिसततंकुलधर्मतः ॥ ध्रुवंभवेत्सोपराधीतस्याश्च

प्यवमानतः ॥ ५७ ॥ तमुमायंकरिष्यामिशप्तोयत्रविशुद्ध्यति ॥ क्षणंतिष्ठजगन्नाथपापिनश्चभवार्णवे ॥ ५८ ॥ एत स्मिन्नंतरेकश्चिदाजगामहरेःपुरः ॥ द्वारपालःशीघ्रगामीत्युवाचनतकंधरः ॥ ५९ ॥ ॥ द्वारपालउवाच ॥ ॥ अन्यब्र ह्मांडाधिपतिर्ब्रह्मादशमुखःस्वयम् ॥ द्वारेतिष्ठन्महाभक्तस्त्वांद्रष्टुंस्वयमागतः ॥ ६० ॥ द्वारपालवचःश्रुत्वासचैवानुमतिं ददौ ॥ द्वारपालाज्ञयाब्रह्मातुष्टावागत्यभक्तितः ॥ ६१ ॥ स्तोत्रैरतिविचित्रैश्चचतुर्वक्त्राश्रुतैरहो ॥ स्तुत्वोवासाज्ञयावि ष्णोःकृत्वापश्चाच्चतुर्मुखम् ॥ ६२ ॥ नारायणोद्वारपालानित्युवाचचतुर्भुजान् ॥ आगंतुकंयंयमपिप्रवेशयतसादरम् ॥ ॥ ६३ ॥ एतस्मिन्नंतरेतत्रवृंदावनविनोदिनि ॥ आजगामातिप्रणतोब्रह्माशतमुखःस्वयम् ॥ ६४ ॥ दिव्यैःस्तोत्रैश्चतुष्टाव निगूढमतिसुंदरैः ॥ स्तुत्वोवासवरैःस्तोत्रैःसर्वेषामश्रुतैरहो ॥ ६५ ॥ तदनंतरयोरग्रेभक्त्याशतमुखःस्वयं ॥ जगद्विधौस भार्यांचतत्रतिष्ठतितत्क्षणे ॥ ६६ ॥ आजगामातिब्रह्मांडाधिपोब्रह्माहरेःपुरः ॥ सहस्रवदनःश्रीमान्भक्त्यानम्रात्मकंधरः ॥ ॥ ६७ ॥ स्तुत्वोवासवरैःस्तोत्रैःसर्वेषामश्रुतैरहो ॥ तंचपप्रच्छसर्वेषांब्रह्मांडानांचब्रह्मणाम् ॥ वार्ताविषयिणांचैवसुराणां चक्रमेणच ॥ ६८ ॥ चतुर्मुखस्यतान्दृष्ट्वादर्पभंगोबभूवह ॥ आत्मानंविष्णुसदृशंमन्यमानस्यदर्पतः ॥ ६९ ॥ अन्या न्दर्शयामासब्रह्मांडस्थान्विधीन्हरिः ॥ दृष्ट्वाचकृपयातत्रमृततुल्यंचतुर्मुखम् ॥ ७० ॥ यावंतिगात्रलोमानिसंतिना रायणस्यमे ॥ तत्प्रमाणाश्चब्रह्मांडाब्रह्मणःसंतिसंततम् ॥ ७१ ॥ नारायणंप्रणम्याशुजग्मुस्तेस्वालयंप्रति ॥ समेनेवि धिरात्मानमत्यल्पंविषयाधिपम् ॥ ७२ ॥ पप्रच्छप्रणतंविष्णुर्लज्जानम्रंचतुर्मुखम् ॥ वदतत्किमिदंदृष्टंस्वप्नवद्भवताधुना ॥ ॥ ७३ ॥ नारायणवचःश्रुत्वाविधिरित्युक्तवांस्तदा ॥ भूतंभव्यंभविष्यंचतवमायासमुद्भवम् ॥ ७४ ॥ इत्येवमुक्त्वासवि

धिस्तस्थौसंसदिलज्जया ॥ सर्वांतर्यामीभगवान्तस्योपायंविनिर्ममे ॥ ७५ ॥ इतिश्रीब्रह्मवैवर्तेम० मोहिनीशापब्रह्मदर्प
भंगोनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ श्रीकृष्णउवाच ॥ एतस्मिन्नंतरेतत्रशंकरःसमुपस्थितः ॥ सस्मितोवृषभेंद्रस्थोविभू
तिभूषणःस्वयम् ॥ १ ॥ व्याघ्रचर्मांबरधरोनागयज्ञोपवीतकः ॥ स्वर्णाकारजटाधारमर्धचंद्रंचसंदधत् ॥ २ ॥ त्रिशूलपट्टिश
करोबिभ्रत्खट्वांगमुत्तमम् ॥ सद्रत्नसाररचितस्वरयंत्रकरोमुदा ॥ ३ ॥ वाहनादवरुह्याशुभक्तिनम्रात्मकंधरः ॥ प्रणम्यक
मलाकांतंवामेचोवासभक्तितः ॥ ४ ॥ आजग्मुर्मुनयःसर्वेसुराःशक्रादयस्तथा ॥ आदित्यावसवोरुद्रामनवःसिद्धचारणाः ॥
॥ ५ ॥ पुलकांचितसर्वांगास्तुष्टुवुःपुरुषोत्तमं ॥ प्रणम्यतंशिवंसर्वेसुराश्चनम्रकंधराः ॥ ६ ॥ एतस्मिन्नंतरेतत्रसंगीतंशंकरो
जगौ ॥ कृत्वातीवसुतालंचस्वरयंत्रसमन्वितः ॥ ७ ॥ आवयोश्चगुणाख्यानंराससंबंधिसुंदरं ॥ समयोचितरागेणमनो
मोहनकारिणा ॥ ८ ॥ यत्रकंठैकतानेनएकमानेनचारुणा ॥ पदभेदविरामेणगुरुणालघुनाक्रमात् ॥ ९ ॥ गमकेनातिदी
र्घेणमदेनमधुरेणच ॥ भवेतिदुर्लभंसृष्टंप्रीत्यास्वेनविनिर्मितम् ॥ १० ॥ पुलकांचितसर्वांगःसाश्रुनेत्रःपुनःपुनः ॥ तदेवश्रु
तिमात्रेणमूर्च्छांप्रापविचेतनाः ॥ ११ ॥ बभूवूरुद्ररूपाश्चमुनयःपुरतःप्रिये ॥ रुद्ररूपाःसुराःसर्वेविधातृहरिपार्षदाः ॥ १२ ॥
नारायणश्चलक्ष्मीश्चगायकश्चशिवःस्वयम् ॥ जलपूर्णंचवैकुंठंदृष्ट्वात्रस्तोहमीश्वरि ॥ १३ ॥ गत्वामूर्तीर्विनिर्मायसर्वांश्च
तादृशीरिति ॥ तत्स्वरूपास्तदस्त्राश्चतत्स्ववाहनभूषणाः ॥ १४ ॥ तत्स्वभावास्तन्मनस्कास्तत्तद्विषयमानसाः ॥ स्थानंनि
र्मायपरितोवैकुंठस्यचतुर्दिशि ॥ १५ ॥ तदधिष्ठातृदेवींचआगतश्चस्वमालयम् ॥ शरीरजासुराणांसाबभूवसुरनिम्नगा ॥
॥ १६ ॥ मुक्तिदाचमुमुक्षूणांभक्तानांहरिभक्तिदा ॥ कोटिजन्मार्जितंपापंविविधंपापिनामहो ॥ १७ ॥ यस्याश्चस्पर्शवा

योऽश्वसंपर्केणविनश्यति ॥ किंवानजानेप्राणेशिस्पर्शदर्शनयोःफलम् ॥ १८ ॥ किमुतस्नानजन्यंचकथयामिनिरूपण
म् ॥ सर्वतिर्थात्परंपृथ्व्यांपुष्करंपरिकीर्तितम् ॥ १९ ॥ वेदोक्तंचतदेवास्याःकलांनार्हतिषोडशीं ॥ भगीरथेनचानीताते
नभागीरथीस्मृता ॥ २० ॥ गामागतास्रोतसंशाद्गंगातेनप्रकीर्तिता ॥ जानुद्वारापुरादत्ताजन्हुनापीयकोपतः ॥ २१ ॥ तस्य
कन्यास्वरूपासाजान्हवीतेनकीर्तिता ॥ भीष्मःस्वयंवसुर्जातस्तस्यांसातेनभीष्मसूः ॥ २२ ॥ धाराभिस्तिमृभिःस्वर्गेपृ
थिवीमतलंतथा ॥ ममाज्ञयाचगच्छंतीतेनत्रिपथगामिनी ॥ २३ ॥ प्रधानधारयास्वर्गेसाचमंदाकिनीस्मृता ॥ योजना
युतविस्तिर्णाप्रस्थेचयोजनास्मृता ॥ २४ ॥ क्षीरतुल्यजलाशश्वदत्त्युत्तुंगतरंगिणी ॥ वैकुंठाद्ब्रह्मलोकंचततःस्त्वर्गेसमा
गता ॥ २५ ॥ स्वर्गाद्धिमाद्रिमार्गेणपृथिवीमागतामुदा ॥ साधारालकनंदाख्यालवणोदेनमिश्रिता ॥ २६ ॥ शुद्धस्फटिक
संकाशाबहुवेगवतीसती ॥ पापिनांपापशुष्केंधंदग्धुंपावकरूपिणी ॥ २७ ॥ अहोसागरवंशेभ्योनिर्वाणमुक्तिदायिनी ॥ वै
कुंठगामिनीसाचसोपानरूपिणीवरा ॥ २८ ॥ अतोपिमृत्युसमयेसतांपुण्यस्वरूपिणाम् ॥ आदौपादौचसंन्यस्यमुखेतो
यंप्रदीयते ॥ २९ ॥ गंगासोपानमारुह्यसंतोयांतिनिरामयम् ॥ आब्रह्मलोकंसंलंघ्यरथस्थाश्चनिरापदः ॥ ३० ॥ दैवात्पुरा
प्राक्तनेनमग्नेचेत्कृतपातकैः ॥ लोमप्रमाणवर्षंचमोदंतेहरिमंदिरे ॥ ३१ ॥ ततोभोगोभवेत्तेषांनिश्चितंपापपुण्ययोः ॥ अति
स्वल्पेनकालेनकालव्यूहंचबिभ्रताम् ॥ ३२ ॥ ततःपुण्यवतांगेहेलब्ध्वाजन्मचभारते ॥ संप्राप्यनिश्चलांभक्तिंभवंतिहरि
रूपिणः ॥ ३३ ॥ मृतद्विजानांदेहांश्चदैवाच्छूद्रावहंतिचेत् ॥ पदप्रमाणवर्षंचतेषांचनरकेस्थितिः ॥ ३४ ॥ ततस्तेषांचसाहा
य्यंकरोतिहरिरूपिणी ॥ ददातिमुक्तिंतेभ्योपिक्रमेणचकृपामयि ॥ ३५ ॥ जन्मपुण्यवतांगेहेकारयित्वाचभारते ॥ स्थलं

ददातिवैकुंठेनिश्चितंजन्मभिस्त्रिभिः ॥ ३६ ॥ यात्रांकृत्वातुयःशुद्धौस्नातुंयातिसुरेश्वरीं ॥ पदप्रमाणवर्षंचवैकुंठेमोदतेध्रुवम् ॥ ३७ ॥ गंगांप्राप्यानुषंगेणस्नातिचेन्मौसलंनरः ॥ मुच्यतेसर्वपापेभ्यःपुनर्यदिनलिप्यते ॥ ३८ ॥ कलौपंचसहस्राब्दंस्थितिस्तस्याश्चभारते ॥ तस्यांचविद्यमानायांकःप्रभावःकलेरहो ॥ ३९ ॥ कलौदशसहस्राणिवर्षाणिप्रतिमाममम ॥ तिष्ठंतिचपुराणानिप्रभावस्तत्रकःकलेः ॥ ४० ॥ अतलंयातियाधारासाचभोगवतीस्मृता ॥ पयःफेननिभाशश्वददतिवेगवतीसदा ॥ ४१ ॥ आकाराम्मूल्यरत्नानांमणींद्राणांचसंततम् ॥ नागकन्याश्चयत्तीरेक्रीडंतिस्थिरयौवनाः ॥ ४२ ॥ स्वयंदेवीचवैकुंठेवेष्टयित्वाचसंततम् ॥ सहस्रयोजनाःप्रस्थेदैर्ध्येचलक्षयोजनाः ॥ ४३ ॥ अस्याविनाशःप्रलयेनास्त्येवदुहितुर्मम ॥ नानारत्नाकरंदिव्यंतत्तीरंसुमनोहरम् ॥ ४४ ॥ इत्येवंकथितंसर्वंजान्हवीजन्मपुण्यदम् ॥ ब्रह्मणश्चप्रतीकारोमोहिनीशापतःश्रृणु ॥ ४५ ॥ इतीश्रीब्रह्मवैव० म० जान्हवीजन्मप्रस्तावेचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ श्रीकृष्णउवाच ॥ ॥ नारायणश्चब्रह्माणमुवाचकृपयापुनः ॥ दृष्ट्वागंगांचसर्वेगांममायांचमेनिरे ॥ १ ॥ ॥ श्रीनारायणउवाच ॥ ॥ उत्तिष्ठगच्छभद्रंतेभविष्यतिचतुर्मुख ॥ अत्रस्नात्वाभिशप्तस्त्वंपूतोभवममाज्ञया ॥ २ ॥ त्वंचेत्सत्यंस्वयंपूतःस्पर्शंवांछंतितानिते ॥ वैष्णवेशस्यतीर्थानिसर्वाणिसततंमुने ॥ ३ ॥ तथापिशापमुक्तस्त्वमत्रप्रकृतिहेलनात् ॥ अहंकारश्चसर्वेषांपापबीजममंगलम् ॥ ४ ॥ शीघ्रंत्वंगच्छगोलोकंममालयपरात्परम् ॥ प्रकृत्यंशांमंगलदांतत्रप्राप्स्यसिभारतीं ॥ ५ ॥ प्रकृतिंभजकल्याणमृष्टिबीजस्वरूपिणीं ॥ अहोकल्पांतपर्यंततपस्तप्तंत्वयाधुना ॥ ६ ॥ तवमंत्रंनगृह्णंतिकेपिवेश्याभिशापतः ॥ यदन्यदेवपूजायांतवपूजाभविष्यति ॥ ७ ॥ त्वमेवजगतांधातास्वात्मारामश्चयोषितः ॥ सर्वरूपीचपूजाचसर्वदेहेषुसर्वतः ॥ ८ ॥

तदाममाज्ञयाब्रह्मन्स्नात्वाचजान्हवीजले ॥ शीघ्रंजगामगोलोकंमांप्रणम्यजगद्गुरुः ॥ ९॥ तेदेवामुनयःसर्वेप्रजग्मुःस्वा
लयंमुदा ॥ सुनिर्मलंममयशोगायंतश्चपुनःपुनः ॥ १० ॥ विधिरागत्यगोलोकंसंप्राप्यभारतींसतीं ॥ सर्वविद्याधिदेवींतां
मद्वक्त्राब्जविनिर्मिताम् ॥ ११ ॥ वागीश्वरींचसंप्राप्यब्रह्माप्रमुदितःस्वयम् ॥ कामास्त्राणांचव्यापारंस्वेनुमेनेस्वयंविभुः
॥ १२ ॥ ततआगत्यमांनत्वाप्राप्यत्रैलोक्यमोहिनीं ॥ क्रीडांचकारभगवान्स्थानेस्थानेतिदुर्जने ॥ १३ ॥ रतिंचिरतरंकृ
त्वाविररामस्वयंविधिः ॥ वागीश्वरीमुवाचेदंत्वंवैब्रह्माचकर्मणा ॥ १४ ॥ काचित्स्वकर्मणासाध्वीपूज्याचस्थिरयौवना
॥ तवैवकर्मयोगंचयुवानंपश्यसुंदरि ॥ १५ ॥ विदग्धायाविदग्धेनसंगमोगुणवान्भवेत् ॥ जरातुरोहंवृद्धश्चतपस्वीवैष्ण
वोद्विजः ॥ १६ ॥ अस्वतंत्रःपराधीनःकारतिःपुंश्चलीषुमे ॥ आजगामब्रह्मलोकंपुनरेवनिजालयम् ॥ १७ ॥ ददृशुर्ब्रह्म
लोकस्थास्तांदेवींकौतुकान्विताम् ॥ अतीवसुंदरींरम्यांशुभ्रवर्णांचसस्मितां ॥ १८ ॥ शरच्छीतांशुवदनांशरत्पंकजलोच
नाम् ॥ पक्वबिंबप्रभामुष्टदीप्तोष्ठाधरपल्लवां ॥ १९ ॥ मुक्तापंक्तिविनिंद्यैकदंतपंक्तिमनोहरां ॥ रत्नकेयूरवलयरत्ननूपुरशो
भितां ॥ २० ॥ रत्नकुंडलयुग्मेनकर्णमूलविराजितां ॥ रत्नेंद्रसारहारेणवक्षःस्थलसमुज्ज्वलां ॥ २१ ॥ वन्हिशुद्धांशुकंसूक्ष्मं
बिभ्रतींनवयौवनाम् ॥ अतीवकमनीयांचपीनश्रोणिपयोधराम् ॥ २२ ॥ वीणापुस्तकहस्तांचव्याख्यामुद्राकरांवराम् ॥
तेचनिर्मंच्छनंकृत्वाचक्रुःपरममंगलम् ॥ २३ ॥ पुरींप्रवेशयामासुर्ब्रह्माणंभारतींमुदा ॥ ब्रह्मातयासहक्रीडांचकारसदिवा
निशम् ॥ २४ ॥ अतीवसुखसंभोगेनिमग्नःसततंमुदा ॥ गूढंसर्वपुराणेषुकिंपुनःश्रोतुमिच्छसि ॥ २५ ॥ श्रीनारायणउ०॥
प्राणेशवचनंश्रुत्वाप्रहस्यपरमेश्वरी ॥ भूयोपिपरिपप्रच्छकौतुकान्मानसंपुरा ॥ २६ ॥ ॥ श्रीराधिकोवाच ॥ ॥ ब्रह्मा

कथंनजग्राहवेश्यांस्वयमुपस्थितां॥ नकर्मक्षेत्रेरहसिफलदाताचकर्मणाम्॥ २७॥ उपस्थितायास्त्यागेचमहान्दोषोहि
योषितः॥ ज्ञात्वादेवविधातासकथंतत्याजमोहिनीम्॥ २८ ॥ ॥ श्रीनाराणउवाच ॥ ॥ राधिकावचनंश्रुत्वाप्रहस्यमधु
सूदनः॥ पाद्मकल्पस्यवृत्तांतमुवाचपरमेश्वरीम्॥ २९ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुकांतेप्रवक्ष्यामिपुरावृत्तांतमिप्सि
तम्॥ अकथ्यंगोपनीयंचमहतामभिनिंदितम्॥ ३०॥ एकदाचप्रजाःस्रष्टुंविधाताप्रेरितोमया॥ ससर्जमनसापुत्रान्
ज्वलंतोब्रह्मतेजसा॥ ३१॥ सनकंचसनंदंचसनातनमनुत्तमम्॥ सनत्कुमारंवोढुंचकाविंपंचशिखंविभुं॥ ३२॥ असि
तंकपिलंसिद्धंसिद्धान्ममकलोद्भवान्॥ तान्नम्रान्पंचवर्षीयान्पितास्रष्टुंजगादह॥ ३३॥ प्रजाःस्रष्टुंप्रेरकंचजनकंतेवम
न्यच॥ प्रजग्मुस्तपसेतूर्णममार्चनपरायणाः॥ ३४॥ तदारुष्टोजगद्धातापुनःपुत्रान्विनिर्ममे॥ रुद्रानेकादशवरानरुद
तोभीमविग्रहान्॥ ३५॥ तस्मिन्प्रयुज्यतरसापुनःपुत्रान्विनिर्ममे॥ योगीयोगेनमांध्यात्वास्वात्मारामःस्वविग्रहे॥
॥ ३६॥ वसिष्ठंपुलहंचैवक्रतुमांगिरसंतथा॥ भृगुमत्रिंपुलस्त्यंचदक्षंकर्दममेवच॥ ३७॥ मरीचिंचविनिर्मायप्रजाः
स्रष्टुंनियुज्यच॥ प्रहृष्टमानसःपुत्रंकन्यैकांचससर्जह॥ ३८॥ कृष्णस्यकामिनःपुत्रःकामदेवोबभूवह॥ कन्याषोडश
वर्षीयारत्नभूषणभूषिता॥ ३९॥ उवाचपुत्रंसविधिःसुदीप्तंपुरतःस्थितम्॥ दुर्निवार्यंमत्कलांशंस्वात्मारामंमनोहरम्॥
॥ ४०॥ ॥ ब्रह्मोवाच॥ ॥ स्त्रीपुंसोःक्रीडनार्थायमुदात्वंचविनिर्मितः॥ त्वदियोगेनसर्वेषामधिष्ठानंकरिष्यसि॥ ४१॥
संमोहनंसमुद्वेगंबीजस्तंभितकारणम्॥ उन्मत्तबीजंज्वलदंशश्वच्चेतनहारकम्॥ ४२॥ प्रगृह्यैतान्मयादत्तान्सर्वान्सं
मोहनंकरु॥ दुर्निवार्योममवराद्भववत्सभवेषुच॥ ४३॥ बाणान्दत्वैवमुस्काचप्रहृष्टश्चजगद्विधिः॥ दृष्ट्वोवाचदुहितरंव

रंदातुंसमुद्यतः ॥ ४४ ॥ एतस्मिन्नंतरेकामोमनसालोच्यमंत्रणाम् ॥ कर्तुंशस्त्रपरिक्षांचबाणांश्चिक्षेपब्रह्मणि ॥ ४५ ॥ मं
त्रपूतैश्चबाणैश्चदुर्वार्यैःस्मरणेनच ॥ अतिविद्धोमहायोगीमूर्च्छितोहतचेतनः ॥ ४६ ॥ क्षणेनचेतनांप्राप्यददर्शाग्रेचक
न्यकाम् ॥ तांसंभोक्तुंमनश्चक्रेसादुद्रावभियासती ॥ ४७ ॥ दृष्ट्वापश्चाच्चपितरंधावंतंहतचेतनम् ॥ जगामशरणंशीघ्रं
भ्रातॄणांचतपस्विनाम् ॥ ४८ ॥ तेतांसमीपेसंस्थाप्यतमूचुःपितरंक्रुधा ॥ हितंतथ्यंचवेदोक्तंनीतिसारंपरंवचः ॥ ४९ ॥
॥ ॥ ऋषयऊचुः ॥ ॥ अहोकिमेतज्जनककर्मतेतिविगर्हितम् ॥ नीचानांचरितंयत्तत्करोषित्वंजगद्विधे ॥ ५० ॥ पश्यं
तिसततंसंतःप्रसूमिवपरस्त्रियम् ॥ येतेसर्वत्रपूज्याश्चपरत्रेहजितेंद्रियाः ॥ ५१ ॥ त्वंस्वयंवेदकर्ताचकन्यांसंभोक्तुमि
च्छसि ॥ कन्याचमातृवर्गेषुप्रविष्टाचश्रुतौश्रुता ॥ ५२ ॥ गुरोःपत्नीराजपत्नीविप्रपत्नीचयासती ॥ पत्नीचभ्रातृसुतयो
र्मित्रपत्नीचतत्प्रसूः ॥ ५३ ॥ प्रसूःपित्रोस्तथाभ्रातुःपत्नीस्वश्रूःस्वकन्यकाः ॥ जननीतत्सपत्नीचभगिनीसुरभीतथा ॥
॥ ५४ ॥ स्वाभीष्टसुरपत्नीचधात्रिकान्नप्रदायिका ॥ गर्भधात्रीस्वनाम्नाचभयात्त्रातुश्चकामिनी ॥ ५५ ॥ एतावेदप्र
णीताश्चसर्वेषांमातरःस्मृताः ॥ एतास्वपिचसर्वासुन्यूनतानास्तिकासुच ॥ ५६ ॥ कन्यादातान्नदाताचज्ञानदाताभयप्र
दः ॥ जन्मदोमंत्रदोज्येष्ठभ्राताचपितरःस्मृताः ॥ ५७ ॥ एतावहंतियेमूढायएतान्जनकानपि ॥ पच्यंतेनरकेतेचयाव
द्वैब्रह्मणोवयः ॥ ५८ ॥ तानंधकूपेसंस्थाप्यदूरतोयमकिंकराः ॥ कुर्वंतिताडनंशश्वत्पुरीषंपाययंतिच ॥ ५९ ॥ त्वमेववि
श्वकर्ताचशास्तावैशमनस्यच ॥ स्वयंविधाताजगतांतेनगृह्णासिकन्यकाम् ॥ ६० ॥ अस्माकंपुरतोदूरंगच्छकामार्तमान
स ॥ नकुर्मोभस्मसात्कर्तुंशक्ताश्चजनकंवयम् ॥ ६१ ॥ गुरोर्दोषसहस्राणिक्षंतुमर्हंतिपंडिताः ॥ सर्वघ्नंतंविनिघ्नंतिनीति

ज्ञाःस्वगुरुंविना ॥ ६२ ॥ गुरूंस्तंयदिसर्वस्वंशपंतंनिष्ठुरंगुरुम् ॥ साधवस्तंननिंदंतिप्रणमंतिस्वभक्तितः ॥ ६३ ॥ येद्विषंति
चनिंदंतिगुरुमिष्टंसुरात्परम् ॥ पच्यंतेतेंधकूपेचयावच्चंद्रदिवाकरौ ॥ ६४ ॥ पुरीषंभुंजतेनित्यंक्षुभितायमताडनैः ॥ सर्प
प्रमाणकीटैश्चदंशिताश्चदिवानिशम् ॥ ६५ ॥ इत्येवमुक्त्वामुनयःप्रणेमुस्तत्पदांबुजम् ॥ सर्वंभवतिदैवेनप्रशांतमनसाध्रु
वम् ॥ ६६ ॥ उन्मुखामुनयःसर्वेबभूवुश्चस्वकर्मणि ॥ ब्रह्माशरीरंसंत्यक्तुंब्रीडयाचसमुद्यतः ॥ ६७ ॥ योगेनभित्वाषट्
चक्रंसर्वान्प्राणान्निरुद्ध्यच ॥ ब्रह्मरंध्रंसमानीयतत्याजस्वेनवर्त्मना ॥ ६८ ॥ मनसाश्रीहरिंस्मृत्वानमस्कारंचकारह ॥
नमेमनःपरद्रव्येभवितालोलमीश्वर ॥ ६९ ॥ प्राणत्यागात्परंदुःखमयशश्चयशस्विनाम् ॥ बभूवत्द्दिकृत्वैवंब्रह्मालीं
नश्चब्रह्मणि ॥ ७० ॥ कन्यातातंमृतंदृष्ट्वाविलप्यचभृशंमुहुः ॥ योगेनदेहंतत्याजसाप्रलीनाचब्रह्मणि ॥ ७१ ॥ मृतंता
तंचभगिनींदृष्ट्वाचमुनिपुंगवाः ॥ सस्मरुःश्रीहरिंकोपात्स्वात्मारामंविलप्यच ॥ ७२ ॥ नारायणोमदंशश्चकृपयागत्य
सत्वरम् ॥ ब्रह्माणंजीवयामासब्रह्मज्ञानात्सुतांचताम् ॥ ७३ ॥ ब्रह्मापुरोहरिंदृष्ट्वावरंवव्रेस्ववांछितम् ॥ भक्तिंत्वच्चरणे
शश्वन्निश्चलामनपायिनीम् ॥ ७४ ॥ ब्रह्माणंविरसंदृष्ट्वातमुवाचकृपानिधिः ॥ प्रबोधवचनंसत्यंनीतिसारंमनोहरम् ॥
॥ ७५ ॥ ॥श्रीनारायणउवाच ॥ ॥ शृणुब्रह्मन्प्रवक्ष्येहंमुखमुत्तोल्यसांप्रतम् ॥ त्यजलज्जांजगन्नाथत्द्दयज्वररूपि
णीम् ॥ ७६ ॥ सत्कीर्तिरपकीर्तिर्वासुप्रतिष्ठाप्युपद्रवः ॥ क्षुद्राणांचैवमहतांभवंत्येवस्वकर्मणा ॥ ७७ ॥ सर्वेषामपि
सर्वेभ्यःस्वकर्मबलवत्तरम् ॥ तस्मात्संतःप्रकुर्वंतिनित्यंसत्कर्मसंततम् ॥ ७८ ॥ केचित्कुर्वंतिनिर्मूलंसर्वेषामपिकर्मणां
॥ कृतंकर्मपरंभुक्ताहरिपादाब्जचेतसः ॥ ७९ ॥ कुकर्मणश्चापकीर्तिस्ततोलजाभवेत्ध्रुवम् ॥ सुकर्मणःसुप्रतिष्ठासर्वत्र

निर्मलंयशः ॥ ८० ॥ कालेनरजसादेहोबलंरूपंशुभाशुभम् ॥ कीर्तिर्यात्रिगुणाचैवमोहश्चापयशोविधे ॥ ८१ ॥ ऋणत्र
णापवादाश्चजंतूनांयांतिकालतः ॥ महतांतौच पूर्वोक्तौनेतरश्चकदाचन ॥ ८२ ॥ सदापकीर्तिर्वसतिपरस्त्रीषुचवस्तुषु ॥
तस्मात्तेनैवगृह्णंतिसंतःस्वक्लेशकारणे ॥ ८३ ॥ स्मरमामंतरेब्राह्मेमदीयंविषयंकुरु ॥ अतस्तेनमनोलोलंभवितापरवस्तु
षु ॥ ८४ ॥ योषिद्रूपाचमेमायासर्वेषांमोहकारिणी ॥ लीलयाकुरुतेमोहंस्वात्मारामस्यसंततम् ॥ ८५ ॥ नानामुद्राश्च
येदेशेरागिणांसंततंरतिः ॥ स्तनाभिधेमांसपिंडेधरेलालालयेशुचौ ॥ ८६ ॥ श्रोणिवक्रस्तनंतासांकामदेवालयंसदा ॥ त
स्मात्तेनहिपश्यंतिसंतोहिधर्मभीरवः ॥ ८७ ॥ कोधर्मःकिंयशस्तेषांकाप्रतिष्ठाचकिंतपः ॥ किंबुद्धिर्विद्यादानंचपरस्त्रीषुच
यन्मनः ॥ ८८ ॥ इहाप्यपयशोदुःखंनरकेषुपरत्रच ॥ वासःप्रहारस्तेषांचताडनैःकृमिभक्षणैः ॥ ८९ ॥ दुःखबीजंसुखंम
त्वामूढाश्चदैवदोषतः ॥ परस्त्रीसेवनंप्रीत्याकुर्वंतिसंततंमुदा ॥ ९० ॥ उत्तमामत्पदांभोजंसत्कर्ममध्यमाःसदा ॥ स्मरंतिश
श्वदधमाःपरस्त्रीसेवनंमुदा ॥ ९१ ॥ विपत्तिःसंततंतस्यपरवस्तुषुयन्मनः ॥ विशेषतःपरस्त्रीषुसुवर्णेषुचभूमिषु ॥ ९२ ॥ दै
वात्परस्त्रियंदृष्ट्वाविरमेद्योहरिंस्मरन् ॥ दृष्ट्वापरसुवर्णंचहस्तप्रक्षालनाच्छुचिः ॥ ९३ ॥ सततंनैवसंसक्ताःसंतःस्वस्त्रीषुका
मतः ॥ यक्ष्मव्याधिर्ज्ञानहानिर्लोकनिंदाभयेनच ॥ ९४ ॥ तपस्विनस्तपस्यायांशास्त्रचिंतासुपंडिताः ॥ योगिनोयोग
चिंतासुवेदार्थेषुचवैदिकाः ॥ ९५ ॥ साध्व्यश्चपतिसेवासुगृहस्थागृहकर्मसु ॥ विषयेषुविषयिणोमद्भक्तामम सेवने ॥ ९६ ॥
एतेनियुक्ताएतेषुसभासुचप्रशंसिताः ॥ वेदोक्ताचरणेनैवतद्विरुद्धेननिंदिताः ॥ ९७ ॥ सर्वेनित्यंप्रशंसंतिशश्वत्सन्मार्ग
गामिनम् ॥ हालिकाअपिनिंदंतिकुवर्त्मगामिनंविधे ॥ ९८ ॥ भवितानपरस्त्रीषुपरवस्तुषुतेमनः ॥ अद्यप्रभृतिजीवंतं

निविष्टंमद्दूरेणच ॥ ९९ ॥ मदीयविषयेब्रह्मन्मयादत्तंकुरुप्रियम् ॥ अंतरामत्पदांभोजंचिंतांविघ्नविनाशिनीम् ॥ १०० ॥
कन्याभवतुमेब्रह्मन्कामदेवस्यकामिनी ॥ रतिर्नामपरित्याज्यारत्यधिष्ठातृदेवता ॥ १ ॥ इत्येवमुक्त्वाब्रह्माणमाश्वास्य
कमलापतिः ॥ जगामनित्यंवैकुंठंवृंदावनविनोदनः ॥ १०२ ॥ इतिश्रीब्रह्मवै० राधाकृष्णसंवादोनामपंचत्रिंशोऽध्यायः ॥
॥ ३५ ॥ श्रीराधिकोवाच ॥ ॥ एतेननियमेनैवब्रह्मातत्याजमोहिनीं ॥ कथंसकुलटाशापादपूज्यःसंबभूवह ॥ १ ॥ कथं
तस्यदर्पभंगंचकारकमलापतिः ॥ कथयस्वसर्वबीजंसर्वेषामीश्वरःस्वयम् ॥ २ ॥ श्रीनारायणउवाच ॥ रासेश्वरीवचःश्रु
त्वाप्रहस्यरसिकेश्वरः ॥ निगूढमितिहासंचतांवक्तुमुपचक्रमे ॥ ३ ॥ श्रीकृष्णउवाच ॥ ब्रह्माचिरंतपस्तप्त्वामत्तोलब्ध्वा
वरंवरम् ॥ सृष्टिंनानाविधांकृत्वाविधातासबभूवह ॥ ४ ॥ ब्रह्मांडेषुचसर्वेषुगर्वपर्यंतमुन्नतिः ॥ इतिमत्वाब्रह्मणश्चदर्पभं
गःकृतोमया ॥ ५ ॥ येषांयेषांभवेद्दर्पोब्रह्मांडेषुपरात्परः ॥ विज्ञायसर्वंसर्वात्मातेषांशास्ताहमेवच ॥ ६ ॥ प्रथमेब्रह्मणो
गर्वोमयाचूर्णीकृतःश्रुतः ॥ शंकरस्यचपार्वत्याश्चंद्रस्यचरवेस्तथा ॥ ७ ॥ वन्हेर्दुर्वाससश्चैवतथाधन्वंतरेःप्रिये ॥ क्रमेण
दर्पभंगंचकथयामिनिशामय ॥ ८ ॥ क्षुद्राणांमहतांचैवयेषांगर्वोभवेत्प्रिये ॥ एवंविधमहंतेषांचूर्णीभूतंकरोमिच ॥ ९ ॥
श्रीनारायणउवाच ॥ ॥ श्रीकृष्णस्यवचःश्रुत्वाशुष्ककंठोष्ठतालुका ॥ पप्रच्छराधायत्नेनसंत्रस्ताभयविह्वला ॥ १० ॥
श्रीराधिकोवाच ॥ ॥ तस्यकेनप्रभावेणमहादर्पोबभूवह ॥ त्वयाकेनप्रभावेणतस्यभंगःकृतःपुरा ॥ ११ ॥ कथयस्व
प्राणनाथसर्वेषांदर्पभंजन ॥ दर्पदोभयदःप्राणदानैककारणेश्वर ॥ १२ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ येनभूतंगर्वचूर्णंश्रुतं
त्रजगतांविधेः ॥ अन्येषांश्रूयतांराधेव्यासेनकथयामिते ॥ १३ ॥ स्वयंशिवोमदंशश्चसंहर्ताजगतांचयः ॥ तेजसामत्समः

पूर्णोज्ञानेनचगुणेनच ॥ १४ ॥ ध्यायंतियोगिनोयंसयोगींद्राणांगुरोर्गुरुः ॥ ज्ञानानंदस्वरूपोयंतस्याख्यानंश्रृणुप्रिये
॥ १५ ॥ युगषष्टिसहस्राणितपस्तप्त्वादिवानिशम् ॥ भूत्वाचमत्कलापूर्णोबभूवमत्समोविभुः ॥ १६ ॥ तपसातेजसाशश्व
त्तेजोराशिर्बभूवह ॥ सूर्यकोटिप्रभावश्चभक्तानांकल्पपादपः ॥ १७ ॥ ध्यायंध्यायंचयोगींद्रास्तत्तेजोबहुकालतः ॥ तदं
तरेचपश्यंतिस्वरूपमतिसुंदरम् ॥ १८ ॥ शुद्धस्फटिकसंकाशंपंचवक्त्रंत्रिलोचनम् ॥ त्रिशूलपट्टिशकरंव्याघ्रचर्मांबरंव
रम् ॥ १९ ॥ जपंतंस्वात्मनात्मानंश्वेताब्जबीजमालया ॥ ईषद्धास्यप्रसन्नास्यंचंद्रचूडंपरात्परम् ॥ २०॥ स्वर्णाकारंजटा
भारंदधतंशिरसामुदा ॥ शांतंकांतंत्रिजगतांभक्तानुग्रहकातरम् ॥ २१ ॥ अथस्वमीश्वरंमत्वाप्रदातासर्वसंपदां ॥ ददाति
सर्वंसर्वेभ्योवांछितंकल्पपादपः ॥२२॥ योयंवांच्छतितंतस्मैवरंदत्वावरेश्वरः॥ बभूवगर्वसंयुक्तःस्वात्मारामःस्वलीलया
॥ २३ ॥ एकदाचवृकोदैत्यस्तपस्तेपेशिवस्यच ॥ केदारेचकठोरेणवर्षमेकंदिवानिशम् ॥ २४ ॥ नित्यंयातितत्समीपं
कृपयाचकृपानिधिः ॥ वरंदातुंयथाभीष्टंनजग्राहासुरोवरम् ॥ २५ ॥ वर्षांतेशंकरःशश्वत्तस्थौतत्पुरतःस्वयम् ॥ वरदोभ
क्तिपाशेनक्षणंगंतुंनसक्षमः ॥ २६ ॥ सर्वैश्वर्यंसर्वसिद्धिंभुक्तिंमुक्तिंहरेःपदम् ॥ दैत्यःकिंचिन्नगृह्णातिपरितःशूलपाणिनः
॥ २७ ॥ ध्यायमानंतत्पदाब्जंदृष्ट्वात्रस्तोमहेश्वरः ॥ अयाचितारंनिश्चेष्टंरुरोदप्रेमविव्हलः ॥ २८ ॥ अतीवरोदनात्तस्य
ध्यानभंगोबभूवह ॥ ददर्शपुरतःसाक्षाद्दातारंसर्वसंपदाम् ॥ २९॥ यन्माययावरंवव्रेदैत्येंद्रोभक्तिपूर्वकम् ॥ हस्तंदधेचय
न्मूर्ध्निसभस्मभवितेतिच ॥ ३० ॥ ओमित्युक्त्वाप्रयातंतंदुद्रावदैत्यपुंगवः ॥ मृत्युंजयोमृत्युभयाद्दुद्रावत्रासविव्हलः
॥ ३२ ॥ पपातडमरुस्तस्यव्याघ्रचर्ममनोहरम् ॥ दिगंबरोदशदिशोभेजेदानवभीतये ॥३२ ॥ नहंतितंचकृपयाभक्तंच

भक्तवत्सलः ॥ दुष्टानुसारंसाधुश्चनकरोतिकदाचन ॥ ३३ ॥ साधवोघ्नंतिघ्नंतंचभृत्यंपुत्रंप्रियांविना ॥ प्रबोधितुंनशक्तश्च
स्वात्मानंकृपयासमम् ॥ ३४ ॥ शिवःस्वमृत्युंमत्वाचभीतश्चनिरहंकृतः ॥ स्मारंस्मारंचमांभद्रेमामेवशरणंययौ ॥ ३५ ॥
दृष्ट्वास्वाश्रममायांतंशुष्ककंठोष्ठतालुकम् ॥ हेहरेरक्षरक्षेतिजपंतंभयविव्हलम् ॥ ३६ ॥ संस्थाप्यतत्समीपेचसदैत्योबो
धितोमया ॥ पृष्टश्चसर्ववृत्तांतमुवाचमांक्रमेणच ॥ ३७ ॥ तदाममाज्ञयातूर्णंवंचितोमाययासुरः ॥ दत्वास्वमूर्ध्निहस्तं
चसद्योभस्मबभूवह ॥ ३८ ॥ तदासिद्धाःसुरेंद्राश्चमुनींद्रामनवोमुदा ॥ तुष्टुवुर्मांसुभक्त्याचलज्जयालज्जितःशिवः ॥ ३९ ॥
बभूवचूर्णस्तद्गर्वोजगामबोधितोमया ॥ वरंददातिवरदस्ततोवध्योत्यहंशिवः ॥ ४० ॥ अथगर्वान्वितोरुद्रोहंतुंत्रिपुरमु
ल्बणम् ॥ मत्वामनसिसंहर्तासर्वेषांजगतामिति ॥ ४१ ॥ कोयंपतंगवद्दैत्यइतिमत्वाययौरणम् ॥ विहायशूलमद्दत्तंमदीय
कवचंपरम् ॥ ४२ ॥ चिरंबभूवसमरंवर्षमेकंदिवानिशम् ॥ नकोपिजेतुंकंशक्तोद्वौसमौसमरेतदा ॥ ४३ ॥ पृथिव्यांचरणं
कृत्वादैत्येंद्रोमाययाप्रिये ॥ अत्यूर्ध्वंचसमुत्तस्थौपंचाशत्कोटियोजनम् ॥ ४४ ॥ उत्तस्थौशंकरस्तूर्णंहंतुंदैत्यंजगत्प्रभुः ॥
बभूवतत्रयुद्धंचमासमेकंनिराश्रये ॥ ४५ ॥ अस्त्राणिचापंचिच्छेदशंकरस्यासुरोबली ॥ रथंबभंजदैत्येंद्रश्चापमस्त्राणिशं
करात् ॥ ४६ ॥ जघानमुष्टिनारुद्रोदानवेंद्रंप्रकोपतः ॥ वज्रमुष्टिप्रहारेणसद्योमूर्च्छामवापसः ॥ ४७ ॥ क्षणेनचेतनांप्राप्य
कोपाद्दानवपुंगवः ॥ शिवंशयानमुत्तोल्यपातयामासभूतले ॥ ४८ ॥ सरथेपातितेरुद्रेदेवादेवर्षयोभिया ॥ तुष्टुवुर्मांपरित्रा
हिकृष्णेत्युक्त्वापुनःपुनः ॥ ४९ ॥ हरःसस्मारमामेवंनिर्भयोभयकारणम् ॥ तुष्टावभक्त्यास्तोत्रेणमयादत्तेनसंकटे ॥ ५० ॥
तदाहंकलयाशीघ्रंवृषरूपंविधायच ॥ शयानंशंकरंधृत्वाविषाणाभ्यामुरुक्रमम् ॥ ५१ ॥ ददौतस्मैस्वकवचंस्वशूलमरिम

र्दनं ॥ प्राप्यतद्दानवस्थानमत्यूर्ध्वंचनिराश्रयं ॥ ५२ ॥ मयादत्तेनशूलेनजघानत्रिपुरंहरः ॥ मामेवदर्पहंतारंपुष्टावब्रीडितः
पुनः ॥ ५३ ॥ सद्यःपपातदैत्येंद्रश्चूर्णीभूतश्चभूतले ॥ देवतामुनयःसर्वेतुष्टुवुःशंकरंमुदा ॥ ५४ ॥ तत्याजशंकरोदर्पंविघ्नबीजंत
तोविभुः ॥ ज्ञानानंदस्वरूपश्चनिर्लिप्तःसर्वकर्मसु ॥ ५५ ॥ ततोहंवृषरूपेणवहामितेनतंप्रियं ॥ ममप्रियतमोनास्तित्रैलोक्ये
षुशिवात्परः ॥ ५६ ॥ मनःस्वरूपोब्रह्मामेज्ञानरूपोमहेश्वरः ॥ बुद्धिर्भगवतीदुर्गामूलप्रकृतिरीश्वरी ॥ ५७ ॥ निद्रादयःशक्त
योयास्ताःसर्वाःप्रकृतेःकलाः ॥ रागाधिष्ठातृदेवीयासास्वयंचसरस्वती ॥ ५८ ॥ ममकल्याणाधिदेवोहर्षरूपोगणेश्वरः ॥
परमार्थःस्वयंधर्मोममभक्तोहुताशनः ॥ ५९ ॥ सर्वैश्वर्याधिदेवीमेसर्वगोलोकवासिनः ॥ तेजःस्वरूपःसूर्यश्चप्राणामेवाय
वःस्मृताः ॥ ६० ॥ जलाधिदेवोवरुणःपृथिवीमेमलोद्भवा ॥ ममशून्योमहाकाशोमदनोमानसोद्भवः ॥ ६१ ॥ इंद्रादयःसुराः
सर्वेमत्कलांशांशसंभवाः ॥ एतानिसृष्टिबीजानिमहदादीनिचैवहि ॥ ६२ ॥ सर्वेषांबीजरूपोहंस्वयमात्मानिराश्रयः ॥ जी
वोमेप्रतिबिंबश्चकर्मभोगाधिकारकः ॥ ६३ ॥ अहंसाक्षीनिरीहश्चनभोगीसर्वकर्मसु ॥ भक्तध्यानार्थदेहोयंममस्वेच्छामय
स्यच ॥ ६४ ॥ प्रकृतिःपुरुषोहंचएकएवपरात्परः ॥ इत्येवंकथितंराधेशिवदर्पविमोचनं ॥ ६५ ॥ सृष्टिबीजंचशृणुमेपार्व
तीदर्पमोचनम् ॥ ॥ श्रीनारायणउवाच ॥ ॥ इत्युक्तवंतंश्रीकृष्णंपरमात्मानमीश्वरम् ॥ ६६ ॥ पप्रच्छराधिकादेवीनि
गूढमभिवांछितम् ॥ ॥ श्रीराधिकोवाच ॥ ॥ भगवन्सर्वतत्वज्ञसर्वबीजसनातन ॥ ६७ ॥ वदमेवांछितंप्रश्नंसर्वसंदेहभंज
नं ॥ सर्वज्ञानाधिधेवश्चशंकरःसर्वतत्ववित् ॥ ६८ ॥ मृत्युंजयःकालकालोभगवान्तत्समोमहान् ॥ कथंविभूतिगात्रश्चपंच
वक्त्रस्त्रिलोचनः ॥ ६९ ॥ दिगंबरोजटाधारीनागसंघातभूषणः ॥ वृषेणाटतिदेवेंद्रोविहायवरवाहनम् ॥ ७० ॥ नबिभर्तिक

थंरत्नंसारनिर्माणभूषणम् ॥ वन्हिशुद्धांशुकंत्यक्त्वाधत्तेशार्दूलचर्मकम् ॥ ७१ ॥ धत्तेधत्तूरकुसुमंपारिजातंविहायच ॥
नास्तिरत्नकिरीटेच्छाजटायांप्रीतिरुत्तमा ॥ ७२ ॥ दिव्यलोकंपरित्यज्यस्मशानेषुस्पृहाविभोः ॥ चंदनागुरुकस्तूरीसु
गंधिकुसुमानिच ॥ ७३ ॥ त्यक्त्वास्पृहाबिल्वपत्रेबिल्वकाष्ठानुलेपने ॥ एतद्वेदितुमिच्छामिव्यासेनकथयप्रभो ॥ ७४ ॥
श्रोतुंकौतूहलंनाथवर्द्धतेमेमनःस्पृहा ॥ राधिकावचनंश्रुत्वाप्रहस्यमधुसूदनः ॥ ७५ ॥ कथांकथितुमारेभेकृत्वाराधांस्ववक्ष
सि ॥ ॥ श्रीकृष्णउवाच ॥ ॥ युगषष्टिसहस्राणितपःकृत्वामहेश्वरः ॥ ७६ ॥ विरराम पूर्णतमोध्यात्वामांमनसामुदा ॥ ए
तस्मिन्नंतरेमांचददर्शपुरतःस्थितम् ॥ ७७ ॥ अतीवकमनीयांगंकिशोरंश्यामसुंदरं ॥ अहोनिर्वचनीयंचदृष्ट्वारूपमनुत्त
मं ॥ ७८ ॥ नवभूववितृष्णश्चलोचनाभ्यांत्रिलोचनः ॥ पश्यन्निमेषरहितइतिमत्वास्वमानसे ॥ ७९ ॥ भक्त्युद्रेकान्महाभक्तो
रुरोदप्रेमविह्वलः ॥ सहस्रवदनोनंतोभाग्यवांश्चचतुर्मुखः ॥ ८० ॥ बहुभिर्लोचनैर्दृष्ट्वातुष्टावबहुभिर्मुखैः ॥ पश्यामिकिं
वाकिंस्तौमिसंप्राप्यनाथमीदृशम् ॥ ८१ ॥ आस्यैकेनलोचनाभ्यांचतुर्द्वासपुनःपुनः ॥ स्वमानसेकुर्वतीदंशंकरेचतपस्वि
नि ॥ ८२ ॥ तद्बभूवचतुर्वक्त्रंपूर्वेणसहपंचमम् ॥ एकैकवक्त्रंशुशुभेलोचनैश्चत्रिभिस्त्रिभिः ॥ ८३ ॥ बभूवतेनतन्नामपंचव
क्त्रस्त्रिलोचनः ॥ स्तवनादधिकप्रीतिःशिवस्यदर्शनेमम ॥ ८४ ॥ तेनाधिकानितस्यैवंबभूवुर्लोचनानिच ॥ चक्षूंषिगुण
रूपाणितस्यब्रह्मस्वरूपिणः ॥ ८५ ॥ सत्वंरजस्तमइतितस्यहेतुंनिशामय ॥ संहारकालेसंहर्तुरग्निराविर्भवेत्क्रुधा ॥
॥ ८६ ॥ कोटितालप्रमाणश्चसूर्यकोटिसमप्रभः ॥ लेलिहानोदीर्घशिखस्त्रैलोक्यंदग्धुमीश्वरः ॥ ८७ ॥ विभूतिगात्रःसवि
भुःसतीसंस्कारभस्मना ॥ धत्तेतस्याअस्थिमालाप्रेमभावेनभस्मच ॥ ८८ ॥ स्वात्मारामोयद्यपीशस्तथापिपूर्णमब्द

कम् ॥ सतीशवंगृहीत्वाचभ्रामंभ्रामंरुरोदह ॥ ८९ ॥ प्रत्यंगंचापितस्याश्चपपातयत्रयत्रह ॥ सिद्धपीठस्तत्रतत्रबभू
वमंत्रसिद्धिकृत् ॥ ९० ॥ तदाशवावशेषंचकृत्वावक्षसिशंकरः ॥ पपातमूर्च्छितोभूत्वासिद्धिक्षेत्रेचराधिके ॥ ९२ ॥
तदागत्वामहेशंतंकृत्वाक्रोडेप्रबोध्यच ॥ अददद्दिव्यतत्वंचतस्मैशोकहरंपरम् ॥ ९२ ॥ तदाशिवश्चसंतुष्टःस्वंलोकंचज
गामह ॥ मूर्त्यंतरेणकालेनतांसंप्रापप्रियांसतीं ॥ ९३ ॥ दिव्यस्रग्धारियोगेननेच्छानित्येपरेविभोः ॥ जटातपस्याकाली
नाधत्तेद्यापिविवेकतः ॥ ९४ ॥ नचेच्छाकेशसंस्कारेस्वांगवेषेणयोगिनः ॥ समताचंदनेपंकेलोष्टेरत्नेमणीश्वरे ॥ ९५ ॥
गरुडद्वेषिणोनागाःशंकरंशरणंययुः ॥ बिभर्तिकृपयास्वांगेतानेवशरणागतान् ॥ ९६ ॥ वाहनंवृषरूपोहमन्यस्तंवोढुमक्ष
मः ॥ त्रिपुरस्यवधेपूर्वंमत्कलांशसमुद्भवः ॥ ९७ ॥ पारिजातादिकंपुष्पंसुगंधिचंदनादिकम् ॥ मयिसंन्यस्यतेष्वेवंप्री
तिर्नास्तिकदाचन ॥ ९८ ॥ धत्तूरेतत्सदाप्रीतिर्बिल्वपत्रानुलेपने ॥ गंधहीनेसुगंधेचयोगीष्टेव्याघ्रचर्मणि ॥ ९९ ॥ दिव्य
लोकेदिव्यतल्पेजनतायांनतन्मनः ॥ स्मशानेतीवरहसिध्यायतेमामहर्निशम् ॥ १०० ॥ आब्रह्मस्तंबपर्यंतंसमंचमन्यते
शिवः ॥ ममानिर्वचनीयेत्ररूपेतन्मग्नमानसम् ॥ १ ॥ ब्रह्मणःपतनेनापिशूलपाणेःक्षणोभवेत् ॥ तस्यायुषःप्रमाणंचना
हंजानामिकाश्रुतिः ॥ २ ॥ ज्ञानंमृत्युंजयःशूलंधत्तेमत्तेजसासमम् ॥ विनामयानकश्चित्तंशंकरंजेतुमीश्वरः ॥ ३ ॥ शंक
रःपरमात्मामेप्राणेभ्योपिपरःशिवः ॥ त्र्यंबकेमन्मनःशश्वन्नप्रियोमेभवात्परः ॥ ४ ॥ ब्रह्मांडनिकरंछन्नंमयामन्मायया
सदा ॥ सकंपतिहरंशश्वन्नचतंमोहितुंक्षमः ॥ ५ ॥ नसंवसामिगोलोकेवैकुंठेतववक्षसि ॥ सदाशिवस्यत्हृदयेनिबद्धःप्रेमपा
शतः ॥ ६ ॥ स्वरसिद्धिंसुतानेनपंचवक्त्रेणशंकरः ॥ शश्वद्गायतिमद्गाथांतेनाहंतत्समीपतः ॥ ७ ॥ स्रष्टुंशक्तोहिनष्टुंचभ्रूभंग

लीलयापियः ॥ ब्रह्मांडनिकरंयोगान्नयोगीशंकरात्परः ॥ ८ ॥ दिव्यज्ञानेनयःस्रष्टुंनष्टुंभ्रूभंगलीलया ॥ मृत्युंकालादिकंशक्तोनज्ञानीशंकरात्परः ॥ ९ ॥ ममभक्तिंचदास्यंचमुक्तिंचसर्वसंपदः ॥ सर्वसिद्धिंदातुमीशोनदाताशंकरात्परः ॥ १० ॥ पंचवक्त्रेणमन्नामयशोगायत्यहर्निशम् ॥ मद्रूपंध्यायतेशश्वन्नभक्तःशंकरात्परः ॥ ११ ॥ अहंसुदर्शनंशंभुस्तेजसाचवयंसमाः ॥ ब्रह्मास्रष्टाचयोगेननास्माभिस्तेजसासमः ॥ १२ ॥ इत्येवंकथितंसर्वंशंकरस्ययशोमलम् ॥ तथाप्यस्यदर्पभंगंकिंभूयःश्रोतुमिच्छसि ॥ ११३ ॥ ॥ इतिश्रीब्रह्मवैव० म० शंकरप्रशंसानामषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ श्रीराधिकोवाच ॥ ॥ एवंभूतस्यचविभोःसर्वेशस्यमहात्मनः ॥ नशस्तंकथमुच्छिष्टंब्रूहिसंदेहभंजन ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुदेविप्रवक्ष्येहमितिहासंपुरातनम् ॥ पापेंधनानांदहनेज्वलदग्निशिखोपमम् ॥ २ ॥ सनत्कुमारोवैकुंठमेकदाचजगामह ॥ ददर्शभुक्तवंतंचनाथंनारायणंद्विजः ॥ ३ ॥ तुष्टावगूढैस्तोत्रैश्चप्रणम्यभक्तितोमुदा ॥ अवशेषंददौतस्मैसंतुष्टोभक्तवत्सलः ॥ ४ ॥ प्राप्तमात्रेणतत्रैवभुक्तंतेनैवाकिंचन ॥ किंचिद्रक्षवंधूनांभक्षणायचदुर्लभम् ॥ ५ ॥ सिद्धाश्रमेचतद्दत्तंगुरवेशूलपाणिने ॥ भक्त्युद्रेकाच्चतत्सर्वंभुक्तंचप्राप्तिमात्रतः ॥ ६ ॥ भुक्त्वासुदुर्लभंवस्तुननर्तप्रेमविह्वलः ॥ पुलकांकितसर्वांगःसाश्रुनेत्रोमुदान्वितः ॥ ७ ॥ गायन्ममगुणान्भक्त्यासुकंठःपंचवक्त्रतः ॥ रागभेदैकतानेनतालमानेनसुंदरम् ॥ ८ ॥ पपातडमरुर्हस्तात्शृंगंचव्याघ्रचर्मच ॥ स्वयंनिपत्यपत्याच्चरुदन्मूर्च्छामवापह ॥ ९ ॥ अतीवकमनीयंतद्रूपंध्यात्वैकमानसः ॥ सहस्रदलमध्यस्थंमांपश्यन्हृत्सरोरुहे ॥ १० ॥ एतस्मिन्नंतरेदेवीदुर्गादुर्गार्तिनाशिनी ॥ मुदाजगामशीघ्रंतत्प्रसन्नवदनेक्षणा ॥ ११ ॥ रुदंतंमूर्च्छितंदृष्ट्वानिपतंतंचभक्तितः ॥ प्रहस्यवार्तांपप्रच्छकुमारंशूलपाणिनः

॥ १२ ॥ सर्वंतांकथयामासकुमारःसंपुटांजलिः ॥ श्रुत्वामनोहरंस्तोत्रंनशशापशिवंशिवा ॥ १३ ॥ दुष्टंचक्रेतदुच्छिष्टमभक्ष्यंविदुषामपि ॥ नलोकानांप्रभावश्चतपःसौभाग्यतेजसाम् ॥ १४ ॥ ब्रह्मांडेसर्वसंहर्ताचकंपेपार्वतीमहो ॥ उवाचतंजगन्मातानीतिसारंपरंवचः ॥ १५ ॥ गणप्रसूःसकोपाचरक्तपंकजलोचना ॥ अहोतपःप्रभावश्चतेजसश्चनजोविनां ॥ १६ ॥ सब्रह्मांडस्यसंहर्ताचकंपेशैलकन्यका ॥ पार्वत्युवाच ॥ त्वंपोष्टाजगतांपातामैवचविशेषतः ॥ १७ ॥ वक्ताचतुर्णांवेदानांजनकश्चस्वयंविभुः ॥ मुक्तिप्रदाताभक्तानांदाताचसर्वसंपदां ॥ १८ ॥ त्वंचेत्कारोषिदुर्नीतिंकोवाधर्मंचपातिवै ॥ सदातेपरिपाल्याहंपोष्याभक्त्याचकिंकरी ॥ १९ ॥ वंचिताकर्मदोषेणहरनिर्माल्यभक्षणे ॥ किंचिच्छुद्धंहिरण्येनकिंचिद्वस्तुचवायुना ॥ २० ॥ किंचित्प्रक्षालनेनैवसर्वंविष्णोर्निवेदनात् ॥ विष्णोर्निवेदितान्नेनयष्टव्याःसर्वदेवताः ॥ २१ ॥ पितरोतिथयश्चैवमितिवेदेषुनिश्चितम् ॥ अनिवेद्यमभक्ष्यंचनैवेद्यमुदरेहरेः ॥ २२ ॥ त्यक्त्वाकरोतियोभक्त्यापार्षदप्रवरोभवेत् ॥ अमृतंसर्ववस्तूनांमिष्टसारंसुदुर्लभम् ॥ २३ ॥ विष्णोर्निवेदितान्नस्यकलांनार्हतिषोडशीम् ॥ हंत्यकालिकमृत्युंतदमृतंमूढरंजनम् ॥ २४ ॥ नैवेद्यंचहरेरेवहरितुल्यंकरोत्यहो ॥ यदृच्छयातंनैवेद्यंयोभुंक्तेसाधुसंगतः ॥ २५ ॥ षष्टिवर्षसहस्राणांप्राप्नोतितपसःफलम् ॥ योनिवेद्यहरिंभुंक्तेभक्त्यभक्तश्चनित्यशः ॥ २६ ॥ किंवातपस्यांकर्ताचसहरेस्तेजसासमः ॥ श्रुतंपुरात्वन्मुखतःपुष्करेमुनिसंसदि ॥ २७ ॥ अहंवेदविधातानकिमहंवक्तुमीश्वरी ॥ सुचिरंचतपस्तप्त्वामयालब्धस्त्वमीश्वरः ॥ २८ ॥ त्वयाविष्णोःप्रसादेनवंचिताहंकथंप्रभो ॥ यतोनदत्तंनैवेद्यंविष्णोर्मह्यंत्वयाधुना ॥ २९ ॥ अतोमत्तोगृहाणैतत्फलमेवमहेश्वर ॥ अद्यप्रभृतियेलोकानैवेद्यंभुंजतेतव ॥ ३० ॥ तेजन्मैकंसारमेयाभविष्यंत्येवभारते ॥ इत्युक्त्वा

पार्वतीमातारुरोदपुरतोविभोः॥ ३१ ॥ दृष्टिःपपाततत्कंठेनीलकंठोबभूवह ॥ तदाशिवःशिवांभक्त्याकृत्वावक्षसिसादरम्॥
॥ ३२ ॥ तन्मानभंगस्तोत्रेणविनयेनचकारह ॥ करेणचक्षुषोनीरंसंमृज्यचपुनःपुनः ॥ ३३ ॥ बोधयामासविविधैर्नीति
वाक्यैर्मनोहरैः ॥ परितुष्टाचसादेवीभर्तारंसमुवाचह ॥ ३४॥ कलेवरंचत्यक्ष्यामिनैवेद्येनविनाहरेः ॥ बिभर्तिदेहंसततंतव
सौभाग्यवर्द्धनं ॥ ३५॥ कथंवहामिसौभाग्यरहितंचकलेवरम्॥ अपूर्वंतवनैवेद्यंजन्ममृत्युजराहरं ॥ ३६ ॥ कृतंदुष्टंचय
त्तस्मात्पश्यदेहंत्यजामिच ॥ लिंगोपरिचयद्दत्तंतदेवाग्राह्यमीश्वर ॥ ३७ ॥ सुपवित्रंभवेत्तस्यविष्णोर्नैवेद्यमिश्रितम्॥
इत्येवमुक्त्वासादेवीदेहंत्यक्तुंसमुद्यता ॥ ३८ ॥ त्रस्तोहरस्तत्पुरतःस्तुत्वाचस्वीचकारह॥ ॥ शंकरउवाच॥ ॥ स्थिराभव
महादेविचंडिकेजगदंबिके ॥ ३९ ॥ ममापराधमखिलंक्षंतुमर्हसिसुंदरि ॥ मांभृत्यंतपसाक्रीतंकृपांकुरुममोपरि ॥ ब्रह्म
विष्णुमहेशानांबीजभूतेसनातनि ॥ ४०॥ अहोगोलोकनाथस्यगुणातीतस्यनिर्गुणे॥ सर्वशक्तिस्वरूपेचसदैवसहचारिणि
॥ ४१ ॥ साकारेचनिराकारेनित्येस्वेच्छामयेप्रिये ॥ कृपयातद्विभोरेवममवक्षसिसांप्रतम्॥ ४२॥ सर्वबीजस्वरूपेचम
हामायेमनोहरे ॥ सर्वसिद्धिप्रदेदेविमुक्तिदेकृष्णभक्तिदे॥ इच्छैवंश्रीहरेःसाक्षान्नाहंदातुमपिक्षमः ॥ ४३ ॥ तदादेहंपरित्य
ज्यनिर्गुणंव्रजनिर्गुणे ॥ इत्येवमुक्त्वापुरतस्तस्थौचचंद्रशेखरः ॥ ४४ ॥ बभूवसुप्रसन्नासाप्रणनामहरंपरं ॥ इत्येवंपार्व
तीस्तोत्रंशंकरेणकृतंपुरा ॥ ४५ ॥ यःपठेद्विपदाग्रस्तःसभयादेवमुच्यते॥ मित्रभेदोभवेद्दूरंतत्संप्रीतिर्भवेत्पुरा ॥ ४६ ॥ पा
र्वतीपरितुष्टाचनात्यजत्तस्यमंदिरम्॥ ॥ श्रीकृष्णउवाच ॥ ॥ श्रुत्वाप्रतिज्ञांनाथस्यपरितुष्टाबभूवसा ॥ ४७ ॥ जगामस्व
र्णदींतूर्णंस्नानार्थंशंकराज्ञया ॥ स्नात्वासंपूज्यभक्त्याचसुरमिष्टंचनिर्गुणम्॥ ४८ ॥ चकारप्रस्तुतंशीघ्रंमिष्टान्नंव्यंजना

निच ॥ शिवःस्नात्वाचसंपूज्यब्रह्मज्योतिःसनातनम् ॥ ४९ ॥ तुष्टावपरयाभक्त्यामामेवहृदयस्थितम् ॥ गत्वासर्वमहं
भुक्त्वातस्मैदत्वाभिवांछितम् ॥ ५० ॥ नैवेद्यंपार्वतीलेभेतवमूलंसमागता ॥ भुक्त्वावशेषंसादेवीसहभर्त्रामुदान्विता ॥ ५१ ॥
तुष्टावशंकरंभक्त्याप्रणनाममुहुर्मुहुः ॥ इत्येवंकथितंसर्वंत्वयापृष्टंसुरेश्वरि ॥ अभिशप्तंशंकरस्यनिर्माल्यंयेनहेतुना ॥
॥ ५२ ॥ इतिश्रीब्रह्मवै० हरनिर्माल्यशापप्रसंगेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥श्रीकृष्णउवाच ॥ ॥ दर्पभंगःश्रुतोदेविशं
करस्यजगद्गुरोः ॥ अधुनाश्रूयतांमत्तोदुर्गादर्पविमोचनम् ॥ १ ॥ तेजसासर्वदेवानामाविर्भूयजगत्प्रभूः ॥ दधारकामि
नीरूपंकमनीयंमनोहरम् ॥ २ ॥ निहत्यदानवेंद्रांश्चररक्षदेवताकुलम् ॥ लेभेजन्मततोदेवीजठरेदक्षयोषितः ॥ ३ ॥ पिना
कपाणिंजग्राहसादेवीसुरसादनम् ॥ शश्वत्परमभक्त्याचसिषेवेस्वामिनंसती ॥ ४ ॥ दक्षेणसार्द्धंदेवेनबभूवशिवशत्रुता ॥
निरर्थकंदैवयोगात्पुरावैसुरसंसदि ॥ ५ ॥ दक्षश्चकारयज्ञंचततआगत्यकोपतः ॥ सर्वान्विज्ञापयामासतत्रैवशंकरंविना
॥ ६ ॥ सस्त्रीकादेवताःसर्वाआजग्मुर्दक्षमंदिरम् ॥ सगणःशंकरःकोपान्नाजगामाभिमानतः ॥ ७ ॥ नतंचालयितुंशक्ता
बभूवचंचलास्वयम् ॥ ८ ॥ आजगामपितुर्गेहंदर्पात्तस्यविनाज्ञया ॥ तस्यशापेनतस्याश्चदर्पभंगोबभूवह ॥ ९ ॥ नहि
संभाषणंचक्रेवाङ्मात्रेणपिताचताम् ॥ श्रुत्वाचनिंदांभर्तुश्चदेहंतत्याजमानतः ॥ १० ॥ एवंप्रियेनिगदितंसतीदर्पविमो
चनम् ॥ तस्यजन्मांतरंनित्यंदर्पभंगश्चश्रूयताम् ॥ ११ ॥ लेभेजन्मसतीशीघ्रंजठरेशैलयोषितः ॥ शिवस्तस्याश्चिताभ
स्मंचास्थिंजग्राहभक्तितः ॥ १२ ॥ चकारमालामस्थ्नांचभस्मनातनुलेपनम् ॥ स्मारंस्मारंसतींप्रेम्णाभ्रामंभ्रामंपुनः
पुनः ॥ १३ ॥ सुषावमेनातांदेवीमतीवसुमनोहराम् ॥ सृष्टौविधातुस्तस्याश्चकोपोनास्तिकदाचन ॥ १४ ॥ गुणप्रसूर्गुणा

न्सर्वान्सर्वरूपान्बिभर्तिसा ॥ सर्वाश्चदेवपत्न्यस्तत्कलांनार्हंतिषोडशीम् ॥ १५ ॥ बभूववर्द्धमानासाशुक्लेचंद्रकलायथा ॥
अतीवयौवनस्थाचशैलगेहेदिनेदिने ॥ १६ ॥ बभूवाकाशवाणीचतांसंबोध्यजगत्प्रसूं ॥ शिवेशिवंचतपसाकठोरेणलभे
तिच ॥ १७ ॥ विनेश्वरंनतपसाप्राप्ताहिगर्भसंभवं ॥ प्रहस्यतस्थौश्रुत्वेतिसाचयौवनगर्विता ॥ १८ ॥ ममजन्मांतरीयंच
भस्मास्थिचबिभर्तियः ॥ समांप्रौढांकथंदृष्ट्वानगृह्लात्यत्रजन्मनि ॥ १९ ॥ योविदग्धश्चब्रह्मांडंबभ्रामममशोकतः ॥ स
कथंमांनगृह्लातिदृष्ट्वापरमसुंदरीम् ॥ २० ॥ दक्षयज्ञंयोबभंजममहेतोःकृपानिधिः ॥ सकथंमांनगृह्लातिपत्नींजन्मनिज
न्मनि ॥ २१ ॥ यायस्यपत्नीयोयस्याभर्ताप्राक्कनतःपुरा ॥ कुतोविश्वेतयोर्भेदोनिषेकोनान्यथाभवेत् ॥ २२ ॥ सर्वरूप
गुणाधारंमत्वास्वमतिमानतः ॥ नचकारतपःसाध्वीनविज्ञायतमीश्वरम् ॥ २३ ॥ सुंदरीषुचसर्वासुमत्तोनास्त्येवसुंदरी
त्वदीतिमत्वागर्वेणनचकारतपःशिवा ॥ २४ ॥ रूपयौवनवेषाणांपुमान्ग्राहीस्वयोषिताम् ॥ शिवोमच्छ्रुतिमात्रेणमांगृ
ह्लातिविनातपः ॥ २५ ॥ त्वदीतिमत्वागिरिजातस्थौहिमगिरेर्गृहे ॥ शश्वत्सहचरीमध्येक्रीडोन्मत्तादिवानिशम् ॥ २६ ॥
एतस्मिन्नंतरेतूर्णंततःशैलेंद्रसंसदि ॥ उवाचागत्यमधुरंतत्पुरःसंपुटांजलिः ॥ २७ ॥ ॥ दूतउवाच ॥ ॥ उत्तिष्ठोत्तिष्ठशैलें
द्रगच्छाक्षयवटांतिकम् ॥ आजगाममहादेवःसगणोवृषवाहनः ॥ २८ ॥ मधुपर्कादिकंदत्वाभक्तिनम्रात्मकंधरः ॥ पूजनं
कुरुशैलेंद्रदेवेंद्रंतमतींद्रियम् ॥ २९ ॥ सिद्धिस्वरूपंसिद्धेशंयोगींद्राणांगुरोर्गुरुम् ॥ मृत्युंजयंकालकालंब्रह्मज्योतिःसना
तनं ॥ ३० ॥ परमात्मस्वरूपंचसगुणंनिर्गुणंविभुम् ॥ भक्तध्यानार्थममलंदधानंदेहमीश्वरम् ॥ ३१ ॥ शैलोदूतवचःश्रुत्वा
समुत्तस्थौमुदान्वितः ॥ मधुपर्कादिकंनीत्वाजगामशंकरांतिकम् ॥ ३२ ॥ देवीदूतवचःश्रुत्वाप्रसन्नवदनेक्षणा ॥ त्वदीतिमे

नेमद्वेतोराजगाममहेश्वरः ॥ ३३ ॥ चकारवेषमतुलंदधारवस्त्रमुत्तमम् ॥ रत्नेंद्रसारालंकारान्रत्नमालांमनोहरां ॥ ३४ ॥ पारिजातप्रसूनानांमालांचंदनसंयुताम् ॥ चकारशंकरार्थंचमत्वामालांमनोहराम् ॥ ३५ ॥ रत्नसिंहासनस्थासाददर्शदर्पणेमुखम् ॥ कस्तूरीबिंदुनासार्द्धंसिंदूरबिंदुभूषितं ॥ ३६ ॥ आरक्तनेत्रयुगलंनिर्मलांजनसंयुतम् ॥ शरन्मध्यान्हममलंयथालिपंक्तिवेष्टितम् ॥ ३७ ॥ सुकोमलोष्ठयुगुलंतांबूलरागसंयुतम् ॥ अतीवसुंदरंरम्यंपक्वबिंबफलंयथा ॥ ३८ ॥ रत्नकुंडलदीप्त्याचगंडस्थलविराजितम् ॥ सूर्योदयेनज्वलितंसुमेरुशिखरंयथा ॥ ३९ ॥ अत्यनिर्वचनीयंचदंतपंक्तिमनोहरम् ॥ यथामुक्तसमूहंचसजलंजलदागमे ॥ ४० ॥ गजमुक्तासमायुक्तंसुचारुनासिकोत्तमम् ॥ सुशोभितंयथामेरुंस्वर्णदीजलधारया ॥ ४१ ॥ मालतीमाल्यसंयुक्तकवरीभारसंयुतम् ॥ बकपंक्तिसुशोभाढ्यंनवीनंजलदंयथा ॥ ४२ ॥ तप्तकांचनवर्णाभंचारुवक्षःस्थलोज्वलम् ॥ रत्नेंद्रसारहारोक्तंकस्तूरीकुंकुमान्वितम् ॥ ४३ ॥ चारुचंपकवर्णाभंस्तनयुग्मंमनोहरम् ॥ बदरीफलतुल्यंचचारुपत्रकशोभितम् ॥ ४४ ॥ मध्यंमनोहरंक्षीणंनिम्ननाभिस्थलोज्वलम् ॥ अतीवसुंदरंरम्यंसुंदरंवर्तुलाकृति ॥ ४५ ॥ रंभास्तंभविनिंद्यैकमूरुयुग्मंमनोहरम् ॥ कामालयंसुकठिनंनिगूढमंशुकेनच ॥ ४६ ॥ स्थलपद्मप्रभामुष्टपदयुग्मंमनोहरम् ॥ रत्नपाशकसंयुक्तंसिद्धालक्तकभूषितम् ॥ ४७ ॥ बिभ्रत्सद्रत्नमुकुरंलीलाकमलमुज्वलम् ॥ रत्नांगुलीयमतुलंदधत्तत्सुमनोहरम् ॥ ४८ ॥ दृष्ट्वास्वरूपमतुलंदध्यौशंकरमीश्वरं ॥ विशिष्यमनसाशश्वद्भर्तुश्चरणपंकजं ॥ ४९ ॥ पितरंमातरंबंधुंसाध्वीवर्गंसहोदरं ॥ अंतरेसानसस्मारकिंचिद्देवंशिवंविना ॥ ५० ॥ अथशैलेश्वरस्तत्रददर्शचंद्रशेखरं ॥ स्वर्णदीपुलिनाद्रम्यादुत्पतंतंचसस्मितं ॥ ५१ ॥ दधंतंसंस्कृतांमालांजपंतंममनामकं ॥ तप्तस्वर्ण

प्रभाजुष्टजटाराशिविराजितं ॥ ५२ ॥ वृषभस्थंशूलपाणिंसर्वभूषणराजितं ॥ नागयज्ञोपवीतंचसर्पभूषणभूषितं ॥ ५३ ॥ शु
द्धस्फटिकसंकाशंव्याघ्रचर्मधरंपरं ॥ विभूतिभूषितांगंतमस्थिमालंदिगंबरं ॥ ५४ ॥ पंचवक्त्रंत्रिनयनंसूर्यकोटिसमप्रभं ॥ द
दर्शरुद्रान्परितोज्वलतोब्रह्मतेजसा ॥ ५५ ॥ शिवंवामेमहाकालंदक्षिणेनंदिकेश्वरं ॥ भूतप्रेतपिशाचांश्चकूष्मांडान्ब्रह्मरा
क्षसान् ॥ ५६ ॥ वेतालान्क्षेत्रपालांश्चभैरवान्भीमविक्रमान् ॥ सनकंचसनंदंचकुमारंचसनातनं ॥ ५७ ॥ जैगीषव्यंदेवलंच
काणादंगौतमंतथा ॥ पिप्पलादंकणखनंवोढुंपंचशिखंकठं ॥ ५८ ॥ जाजलिंकरखंकर्णंलोमशंसूर्यवर्चसम् ॥ कात्या
यनंपाणिनिंचशंखंदुर्वाससंततः ॥ ५९ ॥ शातातपंपारिभद्रमष्टावक्रंमरुद्रवम् ॥ एतान्पुरोगमान्नत्वाप्रणनामशिवंगिरिः
॥ ६० ॥ मूर्ध्नानिपत्यभूमौसदंडवत्संपुटांजलिः ॥ अथोऽत्यल्पतयाभक्त्याधृत्वातच्चरणांबुजम् ॥ ६१ ॥ ननामचाश्रुनेत्रः
सपुलकांचितविग्रहः ॥ धर्मदत्तेनस्तोत्रेणतुष्टावपरमेश्वरम् ॥ ६२ ॥ तुष्टेब्राह्मेदिनेतीतेपुष्करेसूर्यपर्वणि ॥ ॥ हिमाल
यउवाच ॥ ॥ त्वंब्रह्मासृष्टिकर्ताचत्वंविष्णुःपरिपालकः ॥ ६३ ॥ त्वंशिवःशिवदोनंतःसर्वसंहारकारकः ॥ त्वमीश्वरोगु
णातीतोज्योतीरूपःसनातनः ॥ ६४ ॥ प्रकृतःप्रकृतीशश्चप्राकृतःप्रकृतेःपरः ॥ नानारूपविधातात्वंभक्तानांध्यानहेतवे ॥ ६५
येषुरूपेषुयत्प्रीतिस्तत्तद्रूपंबिभर्षिच ॥ सूर्यस्त्वंसृष्टिजनकआधारःसर्वतेजसाम् ॥ ६६ ॥ सोमस्त्वंसस्यपाताचसततंशीत
रश्मिना ॥ वायुस्त्वंवरुणस्त्वंचविद्वांश्चविदुषांगुरुः ॥ ६७ ॥ मृत्युंजयोमृत्युमृत्युःकालकालोयमांतकः ॥ वेदस्त्वंवेदकर्ता
चवेदंवेदांगपारगः ॥ ६८ ॥ विदुषांजनकस्त्वंचविद्वांश्चविदुषांगुरुः ॥ मंत्रस्त्वंहिजपस्त्वंहितपस्त्वंतत्फलप्रदः ॥ ६९ ॥ वा
क्त्वंरागाधिदेवित्वंतत्कर्तातद्गुरुःस्वयम् ॥ अहोसरस्वतीबीजंकस्त्वांस्तोतुमिहेश्वरः ॥ ७० ॥ इत्येवमुक्त्वाशैलेंद्रस्तस्थौ

धृत्वापदांबुजम् ॥ तत्रोवासतमाबोध्यचावरुह्यवृषाच्छिवः ॥ ७१ ॥ स्तोत्रमेतन्महापुण्यंत्रिसंध्यंयःपठेन्नरः ॥ मुच्यतेसर्वपापेभ्योभयेभ्यश्चभवार्णवे ॥ ७२ ॥ अपुत्रोलभतेपुत्रंमासमेकंपठेद्यदि ॥ भार्याहीनोलभेद्भार्यांसुशीलांसुमनोहराम् ॥ ७३ ॥ चिरकालगतंवस्तुलभतेसहसाध्रुवम् ॥ राज्यभ्रष्टोलभेद्राजंशंकरस्यप्रसादतः ॥ ७४ ॥ कारागारेस्मशानेचशत्रुग्रस्तेतिसंकटे ॥ गभीरेतिजलाकीर्णेभग्नपोतेविषादने ॥ ७५ ॥ रणमध्येमहाभीतेहिंस्रजंतुसमन्विते ॥ सर्वतोमुच्यतेस्तुत्वाशंकरस्यप्रसादतः ॥ ७६ ॥ ॥ इतिश्रीब्रह्मवै० अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ इतिस्तुत्वाहिमगिरिर्वसतःशंकरस्यच ॥ उवासपुरतोदूरेलब्धाज्ञःसर्वसंमतः ॥ १ ॥ मधुपर्कादिकंतस्मैप्रददौभक्तिपूर्वकम् ॥ मुनीन्संपूजयामासततःशंकरपार्षदान् ॥ २ ॥ तदातत्रसमागत्यमेनकास्त्रीगणैःसह ॥ ददर्शवटमूलस्थंशंकरंचंद्रशेखरम् ॥ ३ ॥ ईषद्धास्यप्रसन्नास्यंवसंतंव्याघ्रचर्मणि ॥ मध्येमुनिगणानांचज्वलंतंब्रह्मतेजसा ॥ ४ ॥ यथाकाशेतारकाणांद्विजराजंविराजितम् ॥ परमाल्हादकंरूपंकंदर्पकोटिसन्निभम् ॥ ५ ॥ विहायवार्द्धकावस्थांदधंतंनवयौवनम् ॥ अतीवसुंदरंरम्यंचित्तचोरंचयोषिताम् ॥ ६ ॥ कामंकामातुराणांचसतीनांचसुतंयथा ॥ वैष्णवानांमहाविष्णुंशैवानांचसदाशिवम् ॥ ७ ॥ शक्तिस्वरूपंशाक्तानांसौराणांसूर्यरूपिणम् ॥ कालस्वरूपंदुष्टानांशिष्टानांपरिपालकम् ॥ ८ ॥ कालकालसमंमृत्योर्मृत्युंमृत्युंभयानकम् ॥ व्याघ्रचर्मचारुवस्त्रंवभूवभस्मचंदनम् ॥ ९ ॥ सर्पाःसुंदरमाल्यानिकस्तूरियाविषप्रभा ॥ जटासुललिताचूडाचंद्रमेलकचंदनम् ॥ १० ॥ सुचार्वीमालतीमालागंगाधारामनोहरा ॥ अस्थिमालारत्नमालाधत्तूरंचारुचंपकम् ॥ ११ ॥ एकीभूतंपंचवक्त्रंनेत्रयुग्माब्जशोभितम् ॥ शरत्पार्वणचंद्राभंप्रस्छाद्यदीप्तमुत्तमम् ॥ १२ ॥ बंधुजीववि

निंद्यैकमोष्ठाधरमनोहरम् ॥ श्वेतश्चंद्रोवृषेंद्रश्चभूताद्यानर्तकाइव ॥ १३ ॥ सद्योव्यतिक्रमंसर्वंमहेशस्यमहेश्वरी ॥ दृष्ट्वैवं
शिवरूपंचमेनातुष्टाबभूवह ॥ १४ ॥ काश्चिन्निमेषरहिताःकामेनपुलकांचिताः ॥ अतिकामातुराःसत्यःप्रापुर्मूर्च्छांचकाश्च
न ॥ १५ ॥ काश्चिद्विनिंद्यकांतांश्चप्रशशंसुर्महेश्वरम् ॥ मनोरथेनमनसासमाश्लिष्यंतिकाश्चन ॥ १६ ॥ काचिन्मानसिकं
कामात्कुर्वंतीचुंबनंमुदा ॥ ध्रुवंकामंकरिष्यामोवयंचकामसागरे ॥ १७ ॥ अस्माकमेवभर्ताचेत्परत्रैवयशोभवेत् ॥ इहै
वंकिंकरिष्यामोवयंकांतैरतैरलम् ॥ १८ ॥ दृष्ट्वातपस्यासुचिरमितिजल्पंतिकाश्चन ॥ काश्चिद्दृष्ट्वाशिवंकिंचिन्मुखमा
च्छाद्यवाससा ॥ १९ ॥ सस्मितावक्रनयनाःपश्यंत्येवंपुनःपुनः ॥ वयंगृहंनयास्यामोयास्यामःशिवसन्निधिम् ॥ २० ॥
शरत्सुधांशुवदनंद्रक्ष्यामोहर्निशंमुदा ॥ संसारंनकरिष्यामःप्रविशामोहुताशनं ॥ २१ ॥ भवितानःशिवःस्वामीत्येवंजल्पं
तिकाश्चन ॥ अहोपुण्यवतीदुर्गाश्लाघ्यतेजन्मभारते ॥ २२ ॥ यस्याअयंशिवःस्वामीत्येवंजल्पंतिकाश्चन ॥ मुदामेना
शिवंदृष्ट्वागृहंताभिर्जगामह ॥ २३ ॥ शिवंसंपूज्यशैलेंद्रःप्रणम्यस्वगृहंययौ ॥ कृत्वानुस्नानंरहसिगिरिशोमेनयासह ॥
॥ २४ ॥ दुर्गांप्रस्थापयामासशिवायशिवसंन्निधिं ॥ पार्वतीसखिभिःसार्द्धंवेषंकृत्वामनोहरम् ॥ २५ ॥ भावानुरक्ताहर्षेण
जगामशिवसंन्निधिं ॥ दृष्ट्वाशिवाशिवंशांतंप्रसन्नवदनेक्षणम् ॥ २६ ॥ सप्तप्रदक्षिणंकृत्वासस्मिताप्रणनामसा ॥ अनन्य
भावंगुणिनमपरंज्ञानिनांवरं ॥ २७ ॥ सुंदरंलभभर्तारंसुंदरीत्याशिषंददौ ॥ भवितातवसौभाग्यंशुभेस्वामिनिसंततं ॥ २८ ॥
पुत्रस्तेभवितासाध्विनारायणसमोगुणैः ॥ भवितातेपरापूजात्रैलोक्येजगदंबिके ॥ २९ ॥ ब्रह्मांडेषुचसर्वेषुसर्वेषांचप
राभव ॥ सप्तप्रदक्षिणाःकृत्वायतोभक्त्यात्वयानतम् ॥ ३० ॥ सप्तजन्मनितुष्टेहंतत्फलंलभसुंदरि ॥ तीर्थेकांतेभीष्टदेवेगु

रोमंत्रेभवौषधे ॥ ३१ ॥ आस्थाचयादृशीयासांसिद्धिस्तासांचतादृशी ॥ इत्युक्त्वाशंकरस्तूर्णंब्रह्मज्योतिःपरंचमाम् ॥
॥ ३२ ॥ दध्यौयोगासनंकृत्वायोगीशोव्याघ्रचर्मणि ॥ प्रक्षाल्यचरणौदेवीपपौतच्चरणोदकं ॥ ३३ ॥ चकारमार्जनंभक्त्या
वन्हिशौचेनवाससा ॥ रत्नसिंहासनंरम्यंविश्वकर्मादिनिर्मितम् ॥३४॥ अपूर्वंकांस्यपात्रस्थंनैवेद्यंप्रददौकिल ॥ अर्घ्यंमं
दाकिनीतोयसंयुक्तंचरणेददौ ॥ ३५ ॥ सुगंधिचंदनंचारुकस्तूरीकुंकुमान्वितम् ॥ प्रददौमालतीमालांगलेगरलसुंदरे ॥
॥ ३६ ॥ भक्त्यापूजांचकाराथपुष्पवृष्टिंचतुष्टये ॥ पीयूषंस्वर्णपात्रस्थंप्रददौमधुरंमधु ॥ ३७ ॥ रत्नप्रदीपशतकंसमंता
द्धूपमुत्तमम् ॥ त्रैलोक्यदुर्लभंवस्त्रंस्वर्णयज्ञोपवीतकं ॥३८॥ सुगंधिशीततोयंचपानार्थंपार्वतीददौ ॥ अतीवसुंदरंरम्यं
रत्नसारेंद्रभूषणम् ॥ ३९ ॥ दुर्लभांकामधेनुंचस्वर्णशृंगसमन्विताम् ॥ स्नानीयंतीर्थतोयंचतांबूलंचमनोहरम् ॥ ४० ॥
दत्वाषोडशोपचारंप्रणनामपुनःपुनः ॥ संपूज्यशूलिनंभक्त्याययौनित्यंपितुर्गृहम् ॥४१॥ शुश्रावाप्सरसांवक्त्राद्देवीमिंद्रो
महेश्वरः ॥ श्रुत्वावार्तांशुनासीरोननर्तहर्षसयुतः ॥ ४२ ॥ दूतद्वाराकामदेवमानिनायत्वरान्वितः ॥ इंद्राज्ञयाकामदेवःप्रज
गामामरावतीम् ॥ ४३ ॥ तूर्णंप्रस्थापयामासतंचयत्रशिवःशिवा ॥ पंचसायकसंयुक्तोजगामपंचसायकः ॥ ४४ ॥ प्र
सन्नवदनश्रीमान्यत्रशक्तियुतःशिवः ॥ गत्वाददर्शमदनःशिवायुक्तंशिवंविभुम् ॥ ४५ ॥ शांतंत्रैलोक्यकांतंचप्रसन्नव
दनेक्षणम् ॥ कामःस्थितोंतरिक्षेचधृत्वाचसशरंधनुः ॥ ४६ ॥ चिक्षेपास्त्रंदुर्निवार्यममोघंशंकरेमुदा ॥ बभूवामोघमस्त्रं
चमोघंतत्परमात्मनि ॥ ४७ ॥ आकाशइवनिर्लिप्तेनिर्लिप्तेपरमात्मनि ॥ मोघीभूतेचशस्त्रेचभयमापचमन्मथः ॥ ४८ ॥ च
कंपेपुरतःस्थित्वादृष्ट्वामृत्युंजयंविभुम् ॥ सस्मारत्रिदशान्कामःशक्रादीन्भयविव्हलः ॥ ४९ ॥ आययुर्देवताःसर्वाःशंभु

कोपेनवेपिताः ॥ चक्रुस्तुतिंचस्तोत्रेणशंकरंत्रिदशेश्वरम् ॥ ५० ॥ कोपाग्निमुद्गिरंतंतंकपाललोचनादहो ॥ स्तुतिंकुर्वत्सु देवेषुसवन्हिःशंभुसंमतः ॥ ५१ ॥ जज्वालोर्ध्वशिखोदीप्तःप्रलयाग्निशिखोपमः ॥ उत्पत्यगगनेघूर्णंनिपत्यधरणीतले ॥ भ्रामंभ्रामंचपरितःपपातमदनोपरि ॥ ५२ ॥ बभूवभस्मसात्कामःक्षणेनहरकोपतः ॥ विषण्णादेवताःसर्वानतवक्त्राचपार्वती ॥ ५३ ॥ विललापबहुतरंहरस्यपुरतोरतिः ॥ तुष्टुवुर्देवताःसर्वाःकोपिताश्चंद्रशेखरम् ॥ ५४ ॥ रतिमूचुःसुराःसर्वेरुरुदुश्चमुहुर्मुहुः ॥ किंचिद्भस्मगृहीत्वाचरक्षमातर्भयंत्यज ॥ ५५ ॥ वयंतंजीवयिष्यामोलभिष्यसिप्रियंपुनः ॥ हरकोपापनयनेसुप्रसन्नेदिनेतथा ॥ ५६ ॥ दृष्ट्वारतेर्विलापंचमूर्च्छांसंप्रापपार्वती ॥ अतींद्रियंगुणातीतंतुष्टावचंद्रशेखरम् ॥ ५७ ॥ रुदंतींपार्वतींत्यक्त्वास्वस्थानंप्रययौशिवः ॥ सद्योबभूवतत्रैवपार्वतीदर्पमोक्षणम् ॥ ५८ ॥ रूपयौवनयोर्गर्वंतत्याजशैलकन्यका ॥ मुखंदर्शयितुंलज्जातद्बभूवसखीगणे ॥ ५९ ॥ सुराश्चरतिमाश्वास्यसर्वेजग्मुःस्वमंदिरम् ॥ प्रणम्यदंडवद्रुद्रंशोकादुद्विग्नमानसाः ॥ ६० ॥ स्तुत्वारुदित्वाशोकेनभयेनकामकामिनी ॥ कोपरक्तेक्षणंरुद्रंराधिकेस्वालयंययौ ॥ ६१ ॥ नजगामपितुर्गेहेपार्वतीसखिलज्जया ॥ स्वालिभिर्वार्यमाणापिजगामतपसेवनम् ॥ ६२ ॥ प्रजग्मुःसहचारिण्यस्तत्पश्चाच्छोकविह्वलाः ॥ मातृभिर्वार्यमाणासास्वर्णदीतीरजंवनम् ॥ ६३ ॥ सुचिरंचतपस्तप्त्वासासंप्रापत्रिलोचनम् ॥ रतिःसंप्रापमदनंशंकरस्यवरेणच ॥ ६४ ॥ इत्येवंकथितंसर्वंपार्वतीदर्पमोक्षणम् ॥ निगूढचरितंराधेकिंभूयःश्रोतुमिच्छसि ॥ ६५ ॥ ॥ इतिश्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे श्रीकृष्णराधिकासंवादे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ श्रीराधिकोवाच ॥ ॥ अहोविचित्रंचरितमपूर्वंकिंश्रुतंविभो ॥ सुंदरंश्रुतिपीयूषंनि

गूढंज्ञानकारणम् ॥ १ ॥ नविशेषंसमासंचश्रुतंनव्यासमीप्सितम् ॥ अधुनाश्रोतुमिच्छामिविस्तीर्णंकथयप्रभो ॥ २ ॥
किंकिंतपःकठोरंचचकारपार्वतीस्वयम् ॥ कंकंवरंवासंप्राप्यकथमापमहेश्वरम् ॥ ३ ॥ रतिःकेनप्रकारेणजीवयामास
मन्मथम् ॥ पार्वतीशिवयोःकृष्णविवाहंवर्णयप्रभो ॥ ४ ॥ तयोरहसिसंभोगंपापिनीपापमोचनम् ॥ कथ्यतांकरुणा
सिंधोदुःखिनीदुःखमोचनम् ॥ ५ ॥ दंपतीविरहोक्तिश्चकर्णज्वालाचयोषितः ॥ श्रोतुंकौतूहलंकृष्णपुनःसंमीलनंतयोः
॥ ६ ॥ अग्निज्वालाविषज्वालाक्षमासोढुंचयोषितः ॥ दंपतीविरहज्वालानश्रोतुंचक्षणंक्षमा ॥ ७ ॥ राधिकावचनंश्रुत्वा
विस्मितश्चकितानन‍ः ॥ विस्तीर्णवक्तुमारेभेत्हृदयेनविदूयता ॥ ८ ॥ दंपतीविरहोक्तिंचयाराधाश्रोतुमक्षमा ॥ विच्छेदे
शतवर्षीयेकिमस्याभवितामम ॥ ९ ॥ इत्येवंमानसेकृत्वामायेशोमाययान्वितः ॥ कृपासिंधुश्चकृपयाकथांकथितुमुद्य
तः ॥ १० ॥ ॥ श्रीकृष्णउवाच ॥ ॥ प्राणाधिकेराधिकेत्वंश्रूयतांप्राणवल्लभे ॥ प्राणाधिदेविप्राणेशिप्राणाधारेमनोहरे
॥ ११ ॥ वटमूलाद्गतेरुद्रेपार्वतीतपसेययौ ॥ पुनःपुनःस्वमात्राचपित्राचविनिवारिता ॥ १२ ॥ गत्वासास्वर्णदीतीरंस्नात्वा
त्रिषवणंमुदा ॥ संदेशेचमयादत्तंजजापतंमनुंमुदा ॥ १३ ॥ वर्षमेकंचसंपूर्णमनाहारास्वभक्तितः ॥ तत्वातपःकठोरंच
चकारजगदंबिका ॥ १४ ॥ ग्रीष्मेचपरितोवन्हिंप्रज्वलंतंदिवानिशम् ॥ कृत्वाप्रतस्थौतन्मध्येसंततंजपतीमनुम् ॥ १५ ॥
शश्वत्स्मशानेवर्षासुकृत्वायोगासनंशिवा ॥ शिलांदृष्ट्वाचसंसिक्ताबभूवजलधारया ॥ १६ ॥ शीतेजलांतरेशश्वत्प्रतस्थौ
भक्तिपूर्वकम् ॥ अनाहाराशरद्रौद्रनीहारासुनिशासुच ॥ १७ ॥ एवंकृत्वापरंवर्षमप्राप्यशंकरंसती ॥ शुचाकृत्वाग्निकुंडंच
प्रवेष्टुंसासमुद्यता ॥ १८ ॥ तामग्निकुंडंविशतींतपसातिकृशांसतीम् ॥ दृष्ट्वाशिवःकृपासिंधुःकृपयातांजगामह ॥ १९ ॥ अ

तीववामनोबालोविप्ररूपीस्वतेजसा ॥ प्रज्वलन्मनसात्द्दष्टोदंडीछत्रीजटाधरः ॥ २० ॥ शुक्लयज्ञोपवीतीचशुक्लवासाश्वस
स्मितः ॥ श्वेताब्जबीजमालांचबिभ्रत्तिलकमुज्वलम् ॥ २१ ॥ निर्जनेबालकंद्दष्ट्वास्निग्धासातिजगादह ॥ तत्तेजसाति
प्रच्छन्नातत्याजचतपःस्वयम् ॥ २२ ॥ कोभवानितिपप्रच्छतंशिशुंपुरतःस्थितम् ॥ मनसालिंगनंकर्तुमिच्छंतीपरमादर
म् ॥ २३ ॥ श्रुत्वाशैलसुताप्रश्नंप्रहस्यपरमेश्वरः ॥ उवाचातीवमधुरंकर्णपीयूषमीश्वरीम् ॥ २४ ॥ ॥ शंकरउवाच ॥ ॥
इच्छागामीबटुरहंतपस्वीविप्रबालकः ॥ कात्वंकांतातिकांतारेतपश्चरसिसुंदरि ॥ २५ ॥ वदकस्यकुलेजाताकस्यकन्या
चकाभिधा ॥ तपसःफलदात्रीत्वंकस्माद्धेतोस्तपस्तव ॥ २६ ॥ अहोवातपसांराशिःस्वयंमुर्तिमतीसती ॥ तपोवालोकशि
क्षार्थंकरोषिकमलेक्षणे ॥ २७ ॥ स्वयंतेजःस्वरूपावामूलप्रकृतिरीश्वरी ॥ विधायभक्तध्यानार्थंविग्रहंभारतेजनुः ॥२८॥
किंवात्रिलोकलक्ष्मीस्त्वंसंपद्रूपासनातनी ॥ रक्षांविधातुंजगतामागताधातुरंतिके ॥ २९ ॥ किंवांबिकात्वंदेवानांस्वयंमू
र्तिमतीसती ॥ सावित्रीभारतेजन्मस्वेच्छयालब्धुमागता ॥ ३० ॥ रागाधिष्ठातृदेवीवास्वयंसाक्षात्सरस्वती ॥ सर्वविद्याः
प्रकटितुंस्वेच्छयाजन्मभारते ॥ ३१ ॥ एतासुमध्येकावात्वंनाहंतर्कितुमीश्वरः ॥ यासाभवतिकल्याणीपरितुष्टाचमांभव
॥ ३२ ॥ सतित्वयिप्रसन्नायांप्रसन्नःपरमेश्वरः ॥ पतिव्रतायांतुष्टायांतुष्टोनारायणःस्वयम् ॥ ३३ ॥ तुष्टेनारायणेदेवेशश्व
त्तुष्टंजगत्त्रयम् ॥ तरुमूलेषुसिक्तेषुशाखाःसिक्तायथाप्रिये ॥ ३४ ॥ शिशोस्तद्वचनंश्रुत्वाप्रहस्यपरमेश्वरी ॥ उवाचवच
नंचारुकर्णपीयूषमीश्वरी ॥ ३५ ॥ ॥ पार्वत्युवाच ॥ ॥ नाहंवेदप्रसूर्लक्ष्मीरागाधिष्ठातृदेवता ॥ जन्ममेभारतेवर्षेसांप्र
तंशैलकन्यका ॥ ३६ ॥ पूर्वजन्मदक्षगेहेसतीशंकरकामिनी ॥ योगेनत्यक्तदेहाहंतातभर्तृविनिंदया ॥ ३७ ॥ अत्रजन्म

निपुण्येनसंप्राप्तेशंकरेद्विज ॥ मांत्यक्त्काभस्मसात्कृत्वामन्मथंसजगामह ॥ ३८ ॥ प्रयातेशंकरेतापाद्व्रीडयाहंपितुर्गृहा
त् ॥ अगमत्तपसेचित्तंममेदंस्वर्णदीतटे ॥ ३९ ॥ तपःकृत्वाकठोरंचसुचिरंप्राणवल्लभम् ॥ अप्राप्याग्निंप्रवेष्टुंचत्वांचदृष्ट्वा
क्षणंस्थिता ॥ ४० ॥ गच्छत्वंप्रविशाम्यग्नौप्रलयाग्निशिखोपमे ॥ कृत्वास्वकामनांविप्रहरप्राप्तिमनीषितम् ॥ ४१ ॥ य
त्रयत्रजनुर्लब्ध्वालभिष्यामिशिवंपरम् ॥ प्राणाधिकंप्रियंकांतंविभुंजन्मनिजन्मनि ॥ ४२ ॥ सर्वाहिस्वप्रियंलब्धुं
लभंतिजन्मवांछितम् ॥ तज्जन्मपतिलाभार्थंसर्वासांचश्रुतौश्रुतम् ॥ ४३ ॥ प्राक्तनीयोहियोभर्तासतासांप्रतिजन्मनि ॥
यास्त्रीयेषांसुनियतासातेषांजन्मजन्मनि ॥ ४४ ॥ तद्देहमिहनप्राप्यकृत्वाघोरतरंतपः ॥ कृत्वाग्निकुंडेकाम्यंचलभिष्या
मिपरत्रतम् ॥ ४५ ॥ इत्युत्क्कापार्वतीतत्रतत्पुरःप्रविवेशह ॥ निषिध्यमानापुरतोब्राह्मणेनपुनःपुनः ॥ ४६ ॥ वन्हिप्रवे
शंकुर्वंत्याःपार्वत्याःपरमेश्वरि ॥ बभूवतपसासद्योवन्हिश्चंदनवत्ध्रुवम् ॥ ४७ ॥ क्षणंतदंतरेस्थित्वाचोत्पतंतींशिवांशिवः ॥
पुनःपप्रच्छसहसावृंदावनविनोदिनि ॥ ४८ ॥ ॥ श्रीमहादेवउवाच ॥ ॥ अहोतपस्तेकिंभद्रेनबुद्धंकिंचिदेवहि ॥ नदग्धो
वन्हिनादेहोनचप्राप्तोमनीषितः ॥ ४९ ॥ शिवंकल्याणरूपंचभर्तारंकर्तुमिच्छसि ॥ अविग्रहंपतिंकृत्वाकिंवातेवांछितंभ
वेत् ॥ ५० ॥ संहर्तारंचभर्तारंयदिच्छसिशुचिस्मिते ॥ कांतमिच्छतिकावास्त्रीसर्वसंहारकारणम् ॥ ५१ ॥ मोक्षंवांछसि
चेद्देविकृत्वाकांतस्वरूपिणम् ॥ सर्वमुक्तिप्रदात्वंचतपस्याविफलातव ॥ ५२ ॥ शिवश्चमंगलेमोक्षेसंहर्तानचदृश्यते ॥ शि
वशब्दस्वचान्यार्थौनहिवेदेनिरूपितः ॥ ५३ ॥ तंचसंहारकर्तारंयदिवांच्छसिसुंदरि ॥ लभिष्यसेरतंरुद्रंसर्वलोकभयंकर
म् ॥ ५४ ॥ नभविष्यतिमोक्षस्तेस्वाभीष्टंदेवसेवनम् ॥ हरिस्मृतिरमोघाचसर्वमंगलदासदा ॥ ५५ ॥ शीघ्रंपितुर्गृहंगच्छ

तत्रद्रक्ष्यसिशंकरम् ॥ ममाशिषास्वतपसांफलेनचसुदुर्लभम् ॥ ५६ ॥ इत्युक्त्वापार्वतींविप्रस्तत्रैवांतरधीयत ॥ दुर्गाय यौपितुर्गेहंमहादेवेतिवादिनी ॥ ५७ ॥ पार्वतीगमनंश्रुत्वामेनकाचहिमालयः ॥ दिव्यंयानंपुरस्कृत्यप्रययौहर्षविह्वलः ॥ ५८ ॥ संस्थाप्यमंगलघटान्राजवर्त्मनिराधिके ॥ चंदनागुरुकस्तूरीफलशाखासमन्वितान् ॥ ५९ ॥ पट्टसूत्रसन्निब द्धरसालपल्लवान्वितैः ॥ परितःपरितोरंभास्तंभवृंदसमन्विते ॥ ६० ॥ पतिपुत्रवतीयोषित्समूहैर्दीपहस्तकैः ॥ पूर्णैर्लाजा धान्यदूर्वाफलपुष्पसमन्वितैः ॥ ६१ ॥ सुपुण्यैर्ब्राह्मणैश्चापिमुनिभिर्ब्रह्मचारिभिः ॥ नटीभिर्नर्तकीभिश्चगजेंद्रैःपरिशो भिते ॥ ६२ ॥ पुरोहितैश्चसंयुक्तैःकुर्वद्भिर्मंगलध्वनिम् ॥ सुचारुमालतीमालाहस्तैःशस्तैःप्रशंसितैः ॥ ६३ ॥ नानाप्रका रवाद्यैश्चशंखध्वनिसुनादितैः ॥ सिंदूररेणुभिश्चारुचंदनद्रवपंकिलम् ॥ ६४ ॥ प्रविश्यनगरंदुर्गाददर्शपितरौपुरः ॥ सुप्र सन्नौप्रधावंतौहर्षाश्रुपुलकान्वितौ ॥ ६५ ॥ प्रसन्नवदनादेवीचालिभिःप्रणनामतौ ॥ संयुज्याथाशिषंतौचचक्रतुस्तांच वक्षसि ॥ ६६ ॥ हेवत्सेवत्सेत्युच्चार्यरुदंतौप्रेमविह्वलौ ॥ तदातांचरथेकृत्वाजग्मतुर्निजमंदिरम् ॥ ६७ ॥ स्त्रियोनिर्मंच्छ नंचक्रुर्विप्रायुयुजुराशिषम् ॥ ब्राह्मणेभ्यश्चबंदिभ्यःपर्वतेंद्रोधनंददौ ॥ ६८ ॥ मंगलंकारयामासपाठयामासछांदसम् ॥ एवंस्वकन्ययासार्द्धंतस्थतुस्तौस्वमंदिरे ॥ ६९ ॥ सुखेनवसतौतौहिहर्षनिर्भरमानसौ ॥ एकदाचतपःकर्तुंजगामस्वर्णदींगि रिः ॥ ७० ॥ मेनकाकन्ययासार्द्धमुवासप्रांगणेमुदा ॥ एतस्मिन्नंतरेभिक्षुर्नर्तकश्चसुगायनः ॥ ७१ ॥ सहसैकआजगाम मेनकासन्निधिंमुदा ॥ श्रृंगवाद्यंवामहस्तेडमरुंदक्षिणेतथा ॥ ७२ ॥ कृत्वाविभूतिगात्रोतिवृद्धोतीवजरातुरः ॥ पृष्ठकंथो रक्तवासाःसुकंठोतिमनोहरः ॥ ७३ ॥ जगौममगुणारव्यानंकृत्वानृत्यंमनोहरम् ॥ वादयामासश्रृंगंचक्षणंडमरुकंतथा

॥ ७४ ॥ आजग्मुर्नागराबालाबालिकाहर्षविह्वलाः ॥ वृद्धायुवानोयुवतीसमूहोवृद्धयोषितः ॥ ७५ ॥ श्रुत्वातुसुंदरंगीतंसु
तानस्वरसंयुतम् ॥ सहसामुमुहुःसर्वेतेनमूर्च्छामवापुवम् ॥ ७६ ॥ मूर्च्छांसंप्रापसादुर्गाददर्शत्हदिशंकरम् ॥ त्रिशूलपट्टि
शकरंव्याघ्रचर्मधरंपरम् ॥ ७७ ॥ विभूतिभूषणंरम्यमस्थिमालांसुनिर्मलाम् ॥ ईषद्धास्यप्रसान्नास्यंसुप्रसन्नंत्रिलोच
नम् ॥ ७८ ॥ मालाहस्तंपंचवक्त्रंनागयज्ञोपवीतकम् ॥ वरंवृणिवत्युक्तवंतंसुंदरंचंद्रशेखरम् ॥ ७९ ॥ त्हदयस्थंहरंदृष्ट्वा
मनसातंननामसा ॥ वरंवव्रेमानसेसात्वंपतिर्मेभवेतिच ॥ ८० ॥ एवंदत्वाशिवस्तस्यैचांतर्धानंचकारसः ॥ नदृष्ट्वात्हदितं
दुर्गासंप्राप्यचेतनांपुनः ॥ ८१ ॥ ददर्शचक्षुरुन्मील्यभिक्षुकंगायकंपुरः ॥ नृत्यसंगीततःसाहीभिक्षुकस्यचमेनका ॥ ८२ ॥
दातुंययौसारत्नानिस्वर्णपात्रस्थितानिच ॥ भिक्षांययाचेभिक्षुस्तांदुर्गानान्यांगृहीतवान् ॥ ८३ ॥ पुनश्चनर्तनंकर्तुमुद्य
तःकौतुकेनच ॥ मेनातद्वचनंश्रुत्वाचुकोपविस्मयंययौ ॥ ८४ ॥ भिक्षुकंभर्त्सयामासबहिःकर्तुमुवाचतम् ॥ पत्नीत्रिलोक
नाथस्यशिवस्यपरमात्मानः ॥ ८५ ॥ याञ्चामिमांप्रकुर्वंतंदूरंकुरुसुभाषिणम् ॥ एतस्मिन्नंतरेतत्रवागिरिःस्वालयमाय
यौ ॥ ८६ ददर्शपुरतोभिक्षुंप्रांगणस्थंमनोहरम् ॥ कृत्वानाराणार्चांचगंगातीरेमनोहरे ॥ ८७ ॥ तन्मूर्तिंध्यानविश्लेषशो
कादुद्विग्नमानसः ॥ श्रुत्वामेनामुखाद्वार्तांजहासचचुकोपसः ॥ ८८ ॥ आज्ञांचकारस्वचरंबहिःकर्तुंचभिक्षुकम् ॥ आका
शमिवदुःस्पर्शंप्रज्वलंतंस्वतेजसा ॥ ८९ ॥ नशशाकबहिःकर्तुंसमीपंगंतुमक्षमः ॥ ददर्शभिक्षुकंशैलःक्षणंचारुचतुर्भुज
म् ॥ ९० ॥ किरीटिनंकुंडलिनंपीतांबरधरंपरम् ॥ सुवेषंसुंदरश्याममीषद्धास्यंमनोहरम् ॥ ९१ ॥ चंदनोक्षितसर्वांगंभक्ता
नुग्रहकातरम् ॥ यद्यत्पुष्पंप्रदत्तंचपूजाकालेगदाभृते ॥ ९२ ॥ गात्रेशिरसितत्सर्वंभिक्षुकस्यददर्शह ॥ धूपःप्रदीपोयो

याश्च भरेणच ॥ ३६ ॥ भाराक्रांतोहिशेषश्चतद्भरार्तोपिकच्छपः ॥ कच्छपस्य भरेणैवसर्वाधाराःसमीरणाः ॥ ३७ ॥ महाविक्लवयुक्ताश्चसर्वप्राणाश्चस्तंभिताः ॥ स्तंभितेषुसमीरेषुत्रिलोकाभयविह्वलाः ॥ ३८ ॥ ब्रह्मादयःसुराःसर्वेवैकुंठंशरणंययुः ॥ सर्वेनिवेदनंचक्रुर्नारायणपदांबुजे ॥ ३९ ॥ नारायणश्चभगवानुवाचकमलोद्भवम् ॥ ॥ श्रीनारायणउवाच ॥ ॥ शृंगारभोगसमयोभवितानाधुनाविधे ॥ ४० ॥ कालप्रयुक्तंकार्यंचसिद्धंनासमयोचितम् ॥ पूर्णेवर्षसहस्रेचस्वेच्छयाविरमिष्यति ॥ ४१ ॥ शंभोःसंभोगमिष्टंचकोभेदंकर्तुमीश्वरः ॥ स्त्रीपुंसोरतिविच्छेदमुपायेनकरोतियः ॥ ४२ ॥ तस्यस्त्रीपुंसयोर्भेदोभवेज्जन्मनिजन्मनि ॥ यात्यंतेकालसूत्रेचवर्षलक्षंसपातकी ॥ ४३ ॥ भ्रष्टज्ञानोनष्टकीर्तिरलक्ष्मीकोभवेदिह ॥ रंभायुक्तंशक्रमिमंचकारविरतंरतौ ॥ ४४ ॥ महामुनींद्रोदुर्वासातत्स्त्रीभेदोबभूवह ॥ पुनरन्यांससंप्राप्यनिषेव्यशूलपाणिनम् ॥ ४५ ॥ दिव्यवर्षसहस्रंचविजहौविरहज्वरम् ॥ रोहिणीसहितंचंद्रंचकारविरतंरतौ ॥ ४६ ॥ महर्षिर्गौतमस्तस्यस्त्रीविच्छेदोबभूवह ॥ पुनःशिवंसमाराध्यप्राप्यहल्यांचपुष्करे ॥ ४७ ॥ दिव्यवर्षसहस्रंचविजहौविरहज्वरम् ॥ मुनिःस्वभार्यासंसक्तेदिवसेनिर्जनेवने ॥ ४८ ॥ ब्रह्मांडकसुतंनीत्वाचकारविरतंरुषा ॥ बभूवपुत्रविच्छेदस्तस्यकल्पांतरेपुनः ॥ ४९ ॥ शिवंनिषेव्यसंप्राप्यपुत्रंतत्याजविक्लवम् ॥ हरिश्चंद्रोहालिकंचवृषल्यासहसंयुतम् ॥ ५० ॥ वारयामासनिश्चेष्टंनिर्जनेतत्फलंशृणु ॥ भ्रष्टःश्रीराज्यवित्तेभ्यस्तंचकारावलीलया ॥ ५१ ॥ विश्वामित्रोमहर्षिश्चताडयामासतंपुरा ॥ ततःशिवंसमाराध्यदातारंसर्वसंपदाम् ॥ ५२ ॥ सद्योजगामवैकुंठंसगणोममंदिरम् ॥ अजामिलंद्विजश्रेष्ठंवृषल्यासहसंयुतम् ॥ ५३ ॥ नभियावारयामासुःसुरास्तंचापिकेचन ॥ निष्पन्नेकर्मभोगेचसमद्भक्तोमुमोचह ॥ ५४ ॥ मन्नामस्मृतिमात्रेणचाजगा

ममममालयम् ॥ सर्वंनिषेकसाध्यंचनिषेकोबलवान्विधे ॥ ५५ ॥ निषेकःफलदाताहंनिषेकःकेनवार्यते ॥ दिव्यंवर्षसहस्रं
चशंभोःसंभोगकर्मकृत् ॥ ५६ ॥ निषेकफलदातुस्तुनिषेकफलसंचयम् ॥ पूर्णेवर्षसहस्रेचगत्वातत्रमहेश्वरः ॥ ५७ ॥ ये
नवीर्यंपतद्भूमौतत्करिष्यतिनिश्चितम् ॥ तत्रवीर्येचभवितास्कंदकोभक्ततारकः ॥ ५८ ॥ सदाभद्रस्वरूपोहंभयंकिंवोमयि
स्थिते ॥ अधुनात्वंगृहंगच्छभगवन्स्वगणैःसह ॥ ५९ ॥ करोतुशंभुःसंभोगंपार्वत्यासहनिर्जने ॥ इत्युक्त्वाकमलाकांतः
शीघ्रंस्वांतःपुरंययौ ॥ ६० ॥ स्वालयंप्रययुर्देवाःशिवःस्वस्थोरतौरतः ॥ ॥ नारायणउवाच ॥ ॥ इत्युक्त्वाराधिकांकृष्णःस
कटाक्षांचसस्मिताम् ॥ ६१ ॥ जगामचंदनवनंनिर्जनेचतयासह ॥ अतीवमूर्च्छितःकृष्णोराधांगस्पर्शमात्रतः ॥ ६२ ॥
तस्थतुस्तत्रसंयुक्तौराधारासेश्वरौमुने ॥ अतीवरतिनिश्चेष्टौकिंभूयःश्रोतुमिच्छसि ॥ ६३ ॥ इत्येवंमंगलंकर्मयःशृणोति
समाहितः ॥ कदाचिद्बंधुविच्छेदोनभवेत्तस्यनारद ॥ ६४ ॥ महाशोकार्णवेमग्नोभेदेपुत्रकलत्रयोः ॥ मद्भृत्यानांचबंधूनां
मासंश्रुत्वालभेद्ध्रुवम् ॥ ६५ ॥ ॥ सूतउवाच ॥ ॥ इत्युक्त्वाधर्मपुत्रश्चविरराममहामुनिः ॥ पुनःसंप्रष्टुमारेभेदेवर्षिःकौतुका
न्वितः ॥ ६६ ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणे॰मंगलवर्णनंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ नारदउवाच ॥ ॥ अथ
क्रीडांतरेराधाकिंपप्रच्छहरिंविभुम् ॥ कांकथांकथयामासकथ्यतांकरुणानिधे ॥ १ ॥ श्रीनारायणउवाच ॥ ॥ उत्थाय
सुखसंभोगाद्राधांकृत्वापुरोहरिः ॥ उवासमलयद्रोणींवटमूलेमनोहरे ॥ २ ॥ राधांतांपरिपप्रच्छसस्मितंसुमनोहरम् ॥ द
र्पभंगंवज्रभृतोनिगूढंश्रुतिसुंदरम् ॥ ३ ॥ ॥ श्रीराधिकोवाच ॥ ॥ श्रुतंयशःशूलभृतोदर्पभंगश्चदैवतः ॥ पार्वत्यादर्पभंग
श्चविवाहश्चतयोरहो ॥ ४ ॥ अधुनाश्रोतुमिच्छामिदर्पभंगंहरेर्हरे ॥ शेषाणांचक्रमेणैववदव्यस्यजगद्गुरो ॥ ५ ॥ श्रीकृष्णउ

वाच ॥ ॥ दर्पभंगंसुरपतेस्त्रिषुलोकेषुविश्रुतम् ॥ कर्णपीयूषमतुलंसुंदरंश्टणुसुंदरि ॥ ६ ॥ पुराशतमुखोदर्पात्कृत्वाशत
मुखंमुदा ॥ बभूवसर्वदेवानामध्यक्षःसंपदायुतः ॥ ७ ॥ दिनेदिनेतदैश्वर्यंवर्द्धतेतपसःफलात् ॥ दीक्षांतंकारयामाससिद्धमं
त्रंबृहस्पतिः ॥ ८ ॥ सजजापमहामंत्रंपुष्करेशतवत्सरम् ॥ बभूवमंत्रसिद्धश्चपरिपूर्णमनोरथः ॥ ९ ॥ ब्रह्मस्वरूपंप्रकृतिं
संपन्मूढोनमन्यसे ॥ सातंशशापस्वगुरोःशापंलेभेतिकोपतः ॥ १० ॥ एकदाप्रकृतेःशापाद्धतबुद्धिःस्वसंसदि ॥ गुरुंदृष्ट्वासमु
त्थायननमामुदान्वितः ॥ ११ ॥ बृहस्पतिस्ततःकोपान्नोवासगृहमाययौ ॥ नतस्थौतारकाभ्याशेतपसेकाननंययौ ॥
॥ १२ ॥ उवाचमनसादीनोयातुसंपद्धरेरिति ॥ अथशक्रोमतिंप्राप्यक्वगतोतोमदीश्वरः ॥ १३ ॥ इत्युक्त्वावेगतःपीठाज्ज
गामतारकांतिकम् ॥ प्रणम्यमातरंभक्त्यानतस्कंधःपुटांजलिः ॥ १४ ॥ सर्वंनिवेदनंकृत्वारुरोदोच्चैर्मुहुर्मुहुः ॥ पुत्रस्य
रोदनंदृष्ट्वारुरोदतारकाभृशम् ॥ १५ ॥ वत्सगच्छगृहंनैवगुरुंद्रक्ष्यसिसांप्रतम् ॥ दुर्दिनांतेगुरुंपाप्यपुनर्लक्ष्मीमवाप्स्य
सि ॥ १६ ॥ अधुनाकर्मणांभोगंभुंक्ष्वमूढदुराशय ॥ दुर्दिनेस्वगुरौदोषःसुदिनेपरितोषणम् ॥ १७ ॥ सुदिनंदुर्दिनंशक्र
कारणंसुखदुःखयोः ॥ इत्युक्त्वातारकादेवीविररामपतिव्रता ॥ १८ ॥ जगामशक्रःस्नानार्थंस्वर्णदींसुमनोहराम् ॥ द
दर्शतत्ररुचिरांमार्जंतींचनितंबिनीम् ॥ १९ ॥ सस्मितांसकटाक्षांतामहल्यांगौतमप्रियाम् ॥ दृष्ट्वाचविपुलश्रोणींस्तन
युग्मंमनोहरम् ॥ २० ॥ सतस्याःशक्रःसंपश्यन्मुमोहकाममोहितः ॥ पुनःसचेतनांप्राप्यविहायस्नानमीश्वरीम् ॥ २१ ॥
मूर्तिंविधायतद्भर्तुस्तत्समीपंजगामह ॥ गत्वातुस्निग्धवस्त्रांतांसमाकृष्यस्मरातुरः ॥ २२ ॥ चकारविविधंतत्रश्टंगारंसु
मनोहरम् ॥ मूर्छांसंप्रापकामेनतंद्रांचमुनिकामिनी ॥ २३ ॥ निश्चेष्टासुखसंभोगान्निश्चेष्टस्त्रिदशाधिपः ॥ एतस्मिन्नंतरे

तद्द्वासमागत्यमुनीश्वरः ॥ २४ ॥ ददर्शगेहेमिथुनंमैथुनेचरतिप्रिये ॥ दृष्ट्वाचुकोपसमुनिर्ज्वलन्निवहुताशनः ॥ २५ ॥
विज्ञानेनातिरोषेणत्र्यंजसुरतिक्षणम् ॥ शक्रःसचेतनांप्राप्यदृष्ट्वाचमुनिपुंगवम् ॥ २६ ॥ कालस्वरूपंत्रासेनदधारचर
णांबुजम् ॥ कोपरक्तास्यनयनोदेवंपादानतंभिया ॥ २७ ॥ उवाचनीतिवचनंजगामशरणागतम् ॥ ॥ गौतमउवाच ॥
धिक्त्वामिंद्रसुरश्रेष्ठकश्यपात्मजपंडित ॥ २८ ॥ प्रपौत्रजगतांस्रष्टुर्बुद्धिस्तेकथमीदृशी ॥ मातामहःस्वयंदक्षोदितिर्माता
पतिव्रता ॥ २९ ॥ कर्मसाध्यःस्वभावश्चकुलधर्मप्रबाधते ॥ वेदंविज्ञायज्ञानीत्वंयोनिलुब्धोसिकर्मणा ॥ ३० ॥ योनीनां
चसहस्रंचतवगात्रेभवत्विह ॥ पूर्णवर्षंचसततंयोनिगंधंत्वमाप्नुहि ॥ ३१ ॥ ततःसूर्यसमाराध्ययोनिश्चक्षुर्भविष्यति ॥
ममप्राणेश्वरीदुष्टायेनमूढत्वयाकृता ॥ ३२ ॥ मच्छापेनगुरोःकोपाद्भ्रष्टश्रीर्भवसांप्रतम् ॥ गुरोरपेक्षयामूढप्राणानापत्ह
तास्तव ॥ ३३ ॥ तेजस्विनोतिबंधोर्मेबंधुभेदभियासुर ॥ उत्तिष्ठोत्तिष्ठदेवेंद्रगच्छवत्सस्वमंदिरम् ॥ ३४ ॥ शुभाशुभंचय
त्किंचित्सर्वंकर्मोद्भवंभवेत् ॥ महामुनींद्रवचनाद्गतशक्रश्चपुष्करम् ॥ ३५ ॥ चकाराराधनंभक्त्यानैष्कृत्यंचचकारह ॥ पा
दानतामहल्यांतामुवाचमुनिपुंगवः ॥ ३६ ॥ वनंगत्वाचिरंतिष्ठविधायमूर्तिमश्मनः ॥ अकामांचकमेशक्रःसर्वंजानाम्यहं
प्रिये ॥ ३७ ॥ तथाचपरभोग्यामेनचभोग्याव्रजाधमे ॥ परवीर्यंयदुदरेकामतोकामतोपिवा ॥ ३८ ॥ अहल्येयातिदैवेन
तदुपायंनिशामय ॥ अकामतोनदुष्टासाप्रायश्चित्तेनशुद्ध्यति ॥ ३९ ॥ कामभोगेनत्याज्यासाकर्मभोगेनशुद्ध्यति ॥ पि
तृपाकेदैवपाकेपूजायांनाधिकारिणी ॥ ४० ॥ षष्टिर्वर्षसहस्राणिकालसूत्रंप्रयातिसा ॥ षष्टिर्वर्षसहस्राणिक्षयंकृत्वास्व
कर्मणः ॥ ४१ ॥ स्वामिनोवचनात्सातुप्रणम्यस्वामिनंप्रिया ॥ नाथनाथेतिकुर्वंतीरुदंतीवनमापसा ॥ ४२ ॥ षष्टिर्वर्षसह

स्नाणिभुत्काभोगंमुनिप्रिया ॥ श्रीरामचरणस्पर्शात्सद्यःशुद्धाबभूवह ॥ ४३ ॥ त्रैलोक्यमोहनंरूपंविधायमुनिकामिनी ॥
जगामगौतमाभ्याशंमुनिःसंप्राप्यसुंदरीम ॥ ४४ ॥ अथशक्रस्यवृत्तांतंपरमंश्रृणुसुंदरि ॥ पापघ्नंपुण्यबीजंतत्संव्यस्य
कथयामिते ॥ ४५ ॥ एकदाचगुरोःकोपात्प्रकृतेरेवहेलनात् ॥ ब्रह्महत्यावज्रभृतोबभूवहतचेतसः ॥ ४६ ॥ शक्रस्त्यस्यगु
रुर्दैवग्रस्तेदैत्यनिपीडितः ॥ जगामशरणंभीतोब्रह्माणंजगतांगुरुम् ॥ ४७ ॥ तदाज्ञयाविश्वरूपंचकारचपुरोहितम् ॥ ब
भूवतत्रविश्वस्तोदैवाद्बुद्धिहतोहरिः ॥ ४८ ॥ दैत्यदौहित्रस्यभावंविज्ञायचविचक्षणः ॥ प्रचिच्छेदशिरस्तस्यतीक्ष्णबा
णेनलीलया ॥ ४९ ॥ विश्वरूपपितात्वष्टाश्रुत्वासद्यश्चुकोपह ॥ इंद्रशत्रोविवर्द्धस्वेत्युत्कायज्ञंचकारह ॥ ५० ॥ यज्ञकुं
डात्समुत्तस्थौवृत्रोनाममहासुरः ॥ चकारनिग्रहंकोपाद्देवानामवलीलया ॥ ५१ ॥ शक्रोमहामुनेरस्थ्नांवज्रंकृत्वासुदा
रुणम् ॥ जघानवृत्रंदेवानांकंडकंदैत्यमर्दनः ॥ ब्रह्महत्याशुनासीरंदुद्रावहतचेतनम् ॥ ५२ ॥ रक्तवस्त्रपरीधानावृत्रस्त्री
वेषधारिणी ॥ सप्ततालप्रमाणासाशुष्ककंठोष्ठतालुका ॥ ५३ ॥ ईषाप्रमाणदशनामहाभीतंचकारतम् ॥ धावंतंपरि
धावंतीबलिष्ठाहतचेतनम् ॥ ५४ ॥ खड्गहस्तादयाहीनावेगेनपरिधावति ॥ इंद्रोदृष्ट्वाचतांघोरांस्मारंस्मारंगुरोःपदम् ॥
॥ ५५ ॥ विवेशमानससरोमृणालसूक्ष्मसूत्रतः ॥ तत्रगंतुंनशक्तासाब्रह्मणःशापकारणात् ॥ ५६ ॥ सातस्थौवटशाखा
यांसरसस्तटसन्निधौ ॥ अथात्रनहुषोभूपस्त्रिलोकेशोबभूवह ॥ ५७ ॥ सययाचेशचींदेवान्बलिष्ठोदुर्बलानपि ॥ शचीश्रु
त्वामहाभीतातारकांशरणंययौ ॥ ५८ ॥ तारानिर्भत्स्यस्वपतिंभृत्यपत्नींररक्षच ॥ शचीमाश्वास्यस्वगुरुर्जगामतत्सरो
मुदा ॥ ५९ ॥ आजुहावशुनासीरंकातरंहतचेतनम् ॥ ॥ बृहस्पतिरुवाच ॥ ॥ उत्तिष्ठोत्तिष्ठहेवत्सभयंकिंतेमयिस्थिते

॥ ६० ॥ सदीश्वरस्त्वंचैवनिशामयभयंत्यज ॥ स्वरंबृहस्पतेर्ज्ञात्वासर्वसिद्धीश्वरोहरिः ॥ ६१ ॥ सूक्ष्मरूपंपरित्यज्यस्वरू
पंचदधारसः ॥ उत्थायसद्यःसंभ्रांतोगुरुंतंसूर्यवर्चसम् ॥ ६२ ॥ दृष्ट्वाननामसंप्रीत्यासंप्रीतंत्यक्तकोपकम् ॥ पादांबुजे
निपतितंरुदंतंभयविह्वलम् ॥ ६३ ॥ निधायवक्षसिप्रेम्णारुरोदप्रेमविह्वलः ॥ ॥ इंद्रउवाच ॥ ॥ क्षमस्वभगवन्दोषंकृपां
कुरुकृपानिधे ॥ ६५ ॥ भृत्यापराधंसततंनगृह्णातिसदीश्वरः ॥ स्वभार्यासुस्वशिष्येषुस्वभृत्येषुसुतेषुच ॥ ६६ ॥ दुर्बलः
सबलोवापिकोदंडंकर्तुमक्षमः ॥ त्रिषुकोटिषुदेवेषुदेवकोहमपंडितः ॥ ६७ ॥ त्वत्प्रसादात्सुरश्रेष्ठकृपयावर्द्धितस्त्वया ॥ सं
हर्तुमीशस्त्वत्सर्वमहंकोवापिकीटवत् ॥ ६८ ॥ स्वयंविधातुःपौत्रश्चपुनःस्रष्टुंस्वयंक्षमः ॥ इतितस्यस्तवंश्रुत्वापरितुष्टोगु
रुःस्वयम् ॥ ६९ ॥ उवाचवचनंप्रीत्याप्रसन्नवदनेक्षणः ॥ ॥ गुरुरुवाच ॥ ॥ स्थिरोभवमहाभागनिश्चलांकमलांलभ ॥
॥ ७० ॥ संप्राप्यपरमैश्वर्यंपूर्वस्माच्चचतुर्गुणम् ॥ गच्छामरावतींवत्सराज्यंकुरुपुरंदर ॥ ७१ ॥ हतशत्रुमत्प्रसादाद्गत्वा
पश्यशचींसतीम् ॥ इत्येवमुक्त्वासगुरुःसशिष्योगंतुमुद्यतः ॥ ७२ ॥ ददर्शपुरतोघोरांब्रह्महत्यांसुदुःसहाम् ॥ दृष्ट्वाशक्रो
महाभीतस्तंगुरुंशरणंययौ ॥ ७३ ॥ बृहस्पतिर्महाभीतःसस्मारमधुसूदनम् ॥ एतस्मिन्नंतरेतत्रवाग्बभूवाशरीरिणी ॥
॥ ७४ ॥ स्वल्पाक्षराचबह्वर्थातांशुश्रावबृहस्पतिः ॥ संसारविजयंनामसर्वाशुभविनाशनम् ॥ ७५ ॥ राधिकेवचनंश्रुत्वा
शिष्यंरक्षाधुनेतिच ॥ तदातत्कवचंदत्वाशिष्यायशिष्यवत्सलः ॥ ७६ ॥ चकारभस्मसात्तांचहुंकारेणैवलीलया ॥ तदा
शिष्यंगृहीत्वाचगत्वाताममरावतीम् ॥ ७७ ॥ ददर्शच्छिन्नभग्नांचशत्रुणावचनाद्गुरोः ॥ भर्तुरागमनंश्रुत्वाशचीसंहृष्ट
मानसा ॥ ७८ ॥ प्रणम्यस्वगुरुंभक्त्यास्वकांतंप्रणनामसा ॥ श्रुत्वागमनमिंद्रस्यसमाजग्मुःसुराःप्रिये ॥ ऋषयोमुन

यश्चैवहर्षगद्गदमानसाः ॥ ७९ ॥ योजयामाससत्कारंनिर्मातुममरावतीम् ॥ पूर्णमब्दशतंशिल्पीनिर्ममेत्वमरावतीम् ॥
॥ ८० ॥ नानारत्नविचित्राढ्यांमणिरत्नेंद्रनिर्मिताम् ॥ मनोहरांनिरुपमांनहितुष्टोययाहरिः ॥ ८१ ॥ विश्वकर्मागृहंगंतु
नशशाकविनाज्ञया ॥ परमोद्विग्नचित्तश्चब्रह्माणंशरणंययौ ॥ ८२ ॥ विज्ञायतदभिप्रायंतमुवाचविधिःस्वयम् ॥ तवक
र्मक्षयादेवतावच्छ्रेयोभवितेतिच ॥ ८३ ॥ श्रुत्वातद्वचनंकारुःशीघ्रंप्रापामरावतीम् ॥ ब्रह्माजगामवैकुंठंप्रणम्योवाचमा
तरं ॥ ८४ ॥ हरिर्ब्रह्माणमाश्वास्यप्रस्थाप्यस्वगृहंचतम् ॥ विप्ररूपंसमास्थायचाजगामामरावतीम् ॥ ८५ ॥ दंडीछ
त्रीशुक्लवासाबिभ्रत्तिलकमुज्वलम् ॥ अतिखर्वःशुक्लदंतःसस्मितःसुमनोहरः ॥ ८६ ॥ वयसातिशिशुर्बुद्ध्याज्ञानवृद्ध्या
विचक्षणः ॥ स्वयंविधातुर्धाताचदाताचसर्वसंपदाम् ॥ ८७ ॥ इंद्रद्वारेसमुत्तिष्ठन्द्वारपालमुवाचह ॥ ब्रूहीदंब्राह्मणोद्वारे
शीघ्रंत्वांद्रष्टुमागतः ॥ ८८ ॥ इत्येवंवचनंश्रुत्वाद्वारिज्ञानंचकारतम् ॥ सचशीघ्रंसमागम्यददर्शब्राह्मणार्भकम् ॥ ८९ ॥
बालकानांबालिकानांसमूहैःपरिवेष्टितम् ॥ हसद्भिश्चमहोत्साहात्सस्मितंतेजसान्वितम् ॥ ९० ॥ प्रणनामहरिर्भक्त्यातंहरिं
शिशुरूपिणम् ॥ आशिषंयुयुजेप्रीत्यातंहरिर्भक्तवत्सलः ॥ ९१ ॥ मधुपर्कादिकंदत्वाशक्रःपूजांचकारतम् ॥ पप्रच्छा
गमनंकस्माद्वदेतिविप्रबालकम् ॥ ९२ ॥ इंद्रस्यवचनंश्रुत्वातमुवाचद्विजार्भकः ॥ मेघगंभीरयावाचाबृहस्पतिगुरोर्गुरुः ॥
॥ ९३ ॥ ब्राह्मणउ० ॥ समागतोहंत्वांद्रष्टुंप्रष्टुंवचनमीप्सितं ॥ चित्रंनगरनिर्माणंसमाकर्ण्याद्भुतंहरे ॥ ९४ ॥ कतिवर्षैचनिर्मा
णेभवान्संकल्पितोयथा ॥ कतिचित्तांविश्वकर्मानिर्माणंवाकरिष्यति ॥ ९५ ॥ एवंभूतंचनिर्माणंनकेनेंद्रेणनिर्मितम् ॥ नै
वंविधंसुनिर्माणेविश्वकर्मापरःक्षमः ॥ ९६ ॥ बालकस्यवचःश्रुत्वाजहाससुरेश्वरः ॥ संपन्मदातिमत्तश्चपुनःपप्रच्छबाल

कम् ॥ ९७ ॥ कतींद्राणांसमूहश्चत्वयादृष्टःश्रुतोथवा ॥ विश्वकर्मांकतिविधस्तंमेब्रूहिशिशोधुना ॥ ९८ ॥ शक्रस्यवचनंश्रु
त्वाप्रहस्यविप्रबालकः ॥ तमुवाचश्रुतिसुखंपीयूषसदृशंवचः ॥ ९९ ॥ ॥ ब्राह्मणउ० ॥ ॥ जानामिकश्यपंताततवतातं
प्रजापतिम् ॥ मुनिंमरीचिनामानंतत्रालंचतपोनिधिम् ॥ १०० ॥ नाभिपद्मोद्भवंविष्णोःस्तुत्वातंविधिमीश्वरम् ॥ रक्षि
तारंचतंविष्णुंपरंसत्वगुणान्वितम् ॥ १ ॥ एकार्णवंचप्रलयंसत्वशून्यंभयानकम् ॥ सृष्टिंकतिविधांशक्रकल्पंकतिविधं
ध्रुवम् ॥ २ ॥ ब्रह्मांडंचकतिविधंब्रह्मविष्णुमहेश्वरान् ॥ ब्रह्मांडेषुकतिविधानिंद्रान्कोगंतुमीश्वरः ॥ ३ ॥ यदिसंख्यास्ति
रेणूनांधरायांचसुराधिप ॥ तथापिसंख्याशक्राणांनास्त्येवेतिविदुर्बुधाः ॥ ४ ॥ शक्रस्यायुश्चाधिकारोयुगानामेकसप्ततिः
॥ अष्टाविंशतिशक्राणांपतनेहर्निशंविधेः ॥ ५ ॥ विधेरष्टोतरशतमायुरेवप्रमाणतः ॥ रसेंद्राणांचकासंख्यानास्तिसंख्यावि
धेरपि ॥ ६ ॥ ब्रह्मांडसंख्यायत्रक्वब्रह्मविष्णुमहेश्वराः ॥ महाविष्णोर्लोमकूपोद्भवेतोयेसुनिर्मले ॥ ७ ॥ ब्रह्मांडेस्तियथानौ
काभवतोयेचकृत्रिमा ॥ एवंलोम्नःप्रमाणेनब्रह्मांडाःसंत्यसंख्यकाः ॥ ८ ॥ ब्रह्मांडेचकतिविधाःसुराःसंत्येवत्वत्समाः ॥ ए
तस्मिन्नंतरेतत्रददर्शपुरुषोत्तमः ॥ ९ ॥ पिपीलिकासमूहंचव्यायतंधनुषांशतम् ॥ क्रमशस्तान्संनिरीक्ष्यजहासोच्चैर्द्विजा
र्भकः ॥ १० ॥ नोवाचकिंचिन्मौनीचगंभीरःसगणोयथा ॥ दृष्ट्वाहास्यंविप्रबटोर्गाथांश्रुत्वातिविस्मितः ॥ ११ ॥ पप्रच्छ
चपुनर्विप्रंशुष्ककंठोष्ठतालुकः ॥ ॥ इंद्रउवाच ॥ ॥ कथंहससिविप्रेंद्रमांशीघ्रंकारणंवद ॥ १२ ॥ त्वंवाकोमाययाच्छन्नः
शिशुरूपीगुणार्णवः ॥ इंद्रस्यवचनंश्रुत्वातमुवाचद्विजार्भकः ॥ १३ ॥ आध्यात्मिकंनीतिसारंज्ञानबीजंपरंवरम् ॥ ॥ ब्रा
ह्मणउ० ॥ ॥ दृष्टःपिपीलिकासंघोहेतुरस्यनिगूढकः ॥ १४ ॥ मामांपृच्छशांकबीजंतवान्यज्ञानकारणम् ॥ संसारिकाणां

संसारवृक्षमूलनिकृंतनम् ॥ १५ ॥ अज्ञानतमसिच्छन्नंज्ञानदीपमनुत्तमम् ॥ निगूढंसर्ववेदेषुसिद्धानामपिदुर्लभम् ॥ १६॥ योगिनांप्राणतुल्यंचमूढाहंकारभंजनं ॥ इत्युक्तातत्रसंतस्थौसस्मितोद्विजपुंगवः ॥ १७ ॥ पुनःपप्रच्छशक्रस्त्वंशुष्ककंठोष्ठतालुकः ॥ ॥ शक्रउवाच ॥ ॥ ब्रूहिविप्रबटोशीघ्रंज्ञानदीपंपुरातनम् ॥ १८ ॥ नजानामिशिशुःकस्त्वंज्ञानराशिःस्वमूर्तिमान् ॥ इंद्रस्यवचनंश्रुत्वाविप्ररूपीजनार्दनः ॥ १९ ॥ ज्ञानंभाषितुमारेभेयोगींद्राणांसुदुर्लभम् ॥ ॥ ब्राह्मणउवाच ॥ सृष्टःपिपीलिकासंघएकैकंक्रमशोमया ॥ २० ॥ सर्वेस्वकर्मणाशक्रशक्रीभूताःसुरालये ॥ अधुनाकर्मणासर्वेक्रमशोभूतजन्मनाम् ॥ २१ ॥ अतीतकालेसंप्राप्ताभूतजातिंपिपीलिकाम् ॥ कर्मणाजीविनोयांतिवैकुंठंचनिरामयम् ॥ २२ ॥ कर्मणाब्रह्मलोकंचशिवलोकंचकर्मणा ॥ स्वर्गंस्वर्गसमास्थानंपातालंचस्वकर्मणा ॥ २३ ॥ कर्मणानरकंघोरंस्वात्मदुःखैककारणम् ॥ कर्मणाशूकरीगर्भेकर्मणाक्षुद्रजीवनम् ॥ २४ ॥ कर्मणापशुपत्नीनांकर्मणापक्षियोषिताम् ॥ कर्मणाकीटयोनिंचवृक्षत्वंचस्वकर्मणा ॥ २५ ॥ स्वकर्मणासुखीदुःखीसेव्यःसेवकएवच ॥ कर्मणाब्राह्मणत्वंचदेवंचापिस्वकर्मणा ॥ २६ ॥ स्वकर्मणाचप्रेतत्वंब्रह्मत्वंचस्वकर्मणा ॥ कर्मणाव्याधियुक्तश्चकर्मणैवातिसुंदरः ॥ २७ ॥ कर्मणास्वांगहीनश्चस्वांगवृद्धश्चकर्मणा ॥ विधाताकर्मसूत्रेणफलदाताचजीविनाम् ॥ २८ ॥ कर्मस्वभावसाध्यंचस्वभावोभ्यासजीवकः ॥ इत्येवंकथितंसर्वमाध्यात्मिकपरंवचः ॥ २९ ॥ सुखदंपुण्यदंसारंनरकार्णवतारकम् ॥ संसारःस्वप्नवत्सर्वंदेवेंद्रसचराचरम् ॥ ३० ॥ मृत्युश्चमस्तकस्थायीसर्वेषांकालयोगतः ॥ जलबुद्बुदवत्सर्वंजीविनांचशुभाशुभम् ॥ ॥ ३१ ॥ शक्रःशश्वद्भ्रमत्येवनाविष्टस्तत्रपंडितः ॥ इत्येवमुक्त्वाविप्रश्चतत्रतस्थौचसस्मितः ॥ ३२ ॥ विस्मितस्त्रिदशाध्य

क्षोनात्मानंबहुमन्यते ॥ एतस्मिन्नंतरेशीघ्रमाजगाममुनीश्वरः ॥ ३३ ॥ अतिवृद्धोमहायोगीज्ञानेनवयसामहान् ॥ कृ
ष्णाजिनीजटाधारीबिभ्रत्तिलकमुज्ज्वलम् ॥ ३४ ॥ वक्षःस्थलेरोमचक्रंबिभर्तिमस्तकेकटम् ॥ स्थितंसर्वंमध्यदेशेकिं
चिदुत्पाटितंस्फुटम् ॥ ३५ ॥ समागत्यद्वयोर्मध्येतस्थौस्थाणुवदेवसः ॥ महेंद्रोब्राह्मणंदृष्ट्वाप्रणनाममुदान्वितः ॥
॥ ३६ ॥ मधुपर्कादिकंदत्वापूजयामासभक्तितः ॥ पप्रच्छकुशलंविप्रंचकारविनयंपुनः ॥ ३७ ॥ तुष्टावातिथिभावेनमु
दासादरपूर्वकम् ॥ विप्रार्भकस्तेनसार्द्धंसंभाषांचचकारसः ॥ ३८ ॥ स्ववांछितंपरंप्राहसर्वंविनयपूर्वकम् ॥ ॥ बालकउ
वाच ॥ ॥ कुतस्त्वमागतोविप्रकिन्नामतववावद ॥ ३९ ॥ कोवात्रागमनेहेतुर्निवासःकेनहेतुना ॥ कटंकथंमस्तकेतेलो
मचक्रंचवक्षसि ॥ ४० ॥ अत्युन्नतंमध्यदेशेकिंचिदुत्पाटितंमुने ॥ मांचेत्कृपास्तितेविप्रसर्वंसंव्यस्यकथ्यताम् ॥ ४१ ॥
अत्यद्भुतमिदंसर्वंश्रोतुंकौतूहलंमम ॥ सशिशोर्वचनंश्रुत्वातमुवाचमहामुनिः ॥ ४२ ॥ सर्वंस्वकीयवृत्तांतंशक्रस्यपुरतो
मुदा ॥ ॥ मुनिरुवाच ॥ ॥ अल्पायुषामयाविप्रकुत्रापिनकृतागृहाः ॥ ४३ ॥ नविवाहश्चोपजीव्यंभिक्षोपजीविनाधु
ना ॥ लोमशेतिचमन्नामहेतुर्विप्रस्यदर्शनम् ॥ ४४ ॥ वर्षणातपशांत्यर्थंमस्तकस्थंकटंमम ॥ वक्षःस्थलस्थितंरोमचक्रंत
त्कारणंशृणु ॥ ४५ ॥ संसारिकाणांभयदंविवेकजननंपरम् ॥ आयुःसंख्याप्रमाणंमेलोमचक्रंचवक्षसि ॥ ४६ ॥ शक्रैक
पतनंविप्रलोम्नैकोत्पाटनंमम ॥ उत्पाटितानिलोमानितेनमध्येस्थितानिच ॥ ४७ ॥ ब्रह्मणोद्विपरार्धेचममभृत्युर्निरूपितः
॥ असंख्यविधयोब्रह्मन्मरिष्यंतिमृताअपि ॥ ४८ ॥ कलत्रेणचपुत्रेणगृहेणकिंप्रयोजनं ॥ ब्रह्मणःपतनेचक्षुर्निमेषश्चह
रेर्भवेत् ॥ ४९ ॥ तत्पादपद्मंमतुलंचिंतयामिनिरंतरं ॥ दुर्लभंश्रीहरेर्दास्यंभक्तिर्मुक्तेर्गरीयसी ॥ ५० ॥ स्वप्नवत्सर्वमैश्वर्यंत

द्भक्तिव्यवधायकम् ॥ इदंमद्गुरुणादत्तंशंभुनाज्ञानमुत्तमम् ॥ ५१ ॥ विनाभक्तिंनगृह्णामिसालोक्यादिचतुष्टयम् ॥ इत्येव मुक्त्वासमुनिर्जगामशिवसन्निधिम् ॥ ५२ ॥ शिशुरूपीहरिस्तत्रैवांतर्धानंचकारह ॥ इंद्रस्तुस्वप्नवद्दृष्ट्वाबभूवतत्रविस्मितः ॥ ५३ ॥ तृष्णामात्रंचसंपत्तौनास्त्येवपरमेश्वरे ॥ विश्वकर्माणमानीयप्रियमुक्त्वाशतक्रतुः ॥ ५४ ॥ दत्वारत्नानिसंपूज्यतंप्रस्थापितवान्गृहम् ॥ सर्वंविन्यस्यपुत्रेचशरणंगंतुमुद्यतः ॥ ५५ ॥ शचींराज्यश्रियंत्यक्त्वाविवेकीक्षयकामुकः ॥ दृष्ट्वाविवेकिनंकांतंत्वहृदयेनविदूयता ॥ ५६ ॥ शचीजगामशोकार्तासंत्रस्ताशरणंगुरोः ॥ सर्वंनिवेदनंकृत्वासमानीय बृहस्पतिम् ॥ ५७ ॥ बोधयामासशक्रंतंनीतिसारेणकामिनी ॥ गुरोःशास्त्रविशेषंचदंपतीरससंयुतम् ॥ ५८ ॥ विधायच स्वयंप्रीत्यापाठयामासतंमुदा ॥ मुनिःशास्त्रविशेषंचबोधयामासवाक्पतिः ॥ ५९ ॥ सचकारतदाराज्यंवृंदावनविनोदिनि ॥ इत्येवंकथितंसर्वंशक्रदर्पविमोचनम् ॥ साक्षाद्दृष्टोदर्पभंगोनंदयज्ञेसुरेश्वरि ॥ १६० ॥ ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णराधासंवादेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ श्रीराधिकोवाच ॥ ॥ कथितोभवतामत्त्यंदर्पभंगःश्रुतोहरेः ॥ दर्पभंगंरवेश्चापिश्रोतुमिच्छामितत्वतः ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ एकदैवोदयंकृत्वारविरस्तंजगामह ॥ मालीसुमालीदैत्येंद्रोदीप्तिंकर्तुंसमुद्यतौ ॥ २ ॥ महासंपन्मदोन्मत्तौशंकरस्यवरेणच ॥ तयोश्चप्रभयारात्रिर्नभवेदितिसुंदरि ॥ ३ ॥ रुष्टःसूर्यःस्वशूलेनतौजघानावलीलया ॥ पतितौसूर्यशूलेनमूर्छितौधरणीतले ॥ ४ ॥ भक्तापायंचविज्ञायशंकरो भक्तवत्सलः ॥ आगत्यजीवयामासमहाज्ञानेनतौविभुः ॥ ५ ॥ तौचनत्वाशिवंभक्त्याजग्मतुर्निजमंदिरम् ॥ दुद्रावचमहादेवःसूर्यंहंतुंरुषाज्वलन् ॥ ६ ॥ दृष्ट्वासंहारकर्तारंजिघांसंतंहरंरविः ॥ भियापलायमानश्चब्रह्माणंशरणंययौ ॥ ७ ॥ दु

द्रावचमहादेवोब्रह्मणोनिलयंरुषा ॥ शूलमत्यर्थमुद्यम्यकालकालोविधेर्विधिः ॥ ८ ॥ दृष्ट्वाब्रह्माहरंरुष्टंतुष्टावपरमेश्वर
म् ॥ चतुर्वक्त्रेणवेदोक्तस्तोत्रेणजगतांपतिः ॥ ९ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रसीददक्षयज्ञघ्नसूर्यमच्छरणागतम् ॥ त्वयै
वसृष्टःसृष्टेश्वसमारंभेजगद्गुरो ॥ १० ॥ आशुतोषमहाभागप्रसीदभक्तवत्सल ॥ कृपयाचकृपासिंधोरक्षरक्षदिवानिशम् ॥
॥ ११ ॥ ब्रह्मस्वरूपभगवन्सृष्टिस्थित्यंतकारण ॥ स्वयंरविंचनिर्मायस्वयंसंहर्तुमिच्छसि ॥ १२ ॥ स्वयंब्रह्मास्वयंशेषो
धर्मःसूर्योहुताशनः ॥ चंद्रइंद्रादयोदेवास्त्वत्तोभीताःपरात्पर ॥ १३ ॥ ऋषयोमुनयश्चैवत्वांनिषेव्यतपोधनाः ॥ तपसांफ
लदातात्वंतपस्त्वंतपसांफलम् ॥ १४ ॥ इत्येवमुक्त्वाब्रह्मातंसूर्यमानीयभक्तितः ॥ प्रीत्यासमर्पयामासशंकरेदीनवत्सले ॥
॥ १५ ॥ शंभुस्तमाशिषंकृत्वाविधिंनत्वाजगद्विधिः ॥ प्रसन्नवदनःश्रीमानालयंप्रययौमुदा ॥ १६ ॥ इतिधातृकृतंस्तो
त्रंसंकटेयःपठेन्नरः ॥ भयात्प्रमुच्यतेभीतोबद्धोमुच्येतबंधनात् ॥ १७ ॥ राजद्वारेस्मशानेचमग्नपोतेमहार्णवे ॥ स्तोत्रस्म
रणमात्रेणमुच्यतेनात्रसंशयः ॥ १८ ॥ इतिश्रीब्र०म०श्रीकृष्णज० अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ श्रीकृष्णउवाच ॥
सूर्यःप्रणम्यब्रह्माणंमुदायुक्तस्तदाज्ञया ॥ चकारविनयंप्रीत्यातेजस्वीत्रिगुणात्मकः ॥ १ ॥ अथवन्हेरुपाख्यानंसाव
धानंनिशामय ॥ गोपनीयंपुराणेषुकर्णपीयूषमुत्तमं ॥ २ ॥ त्रैलोक्यंभस्मसात्कर्तुमेकदाग्निःसमुद्यतः ॥ शततालप्रमा
णांतांशिखांकृत्वाभयानकीम् ॥ ३ ॥ क्षुभितःकुपितश्चैवभृगोःशापस्यकारणात् ॥ स्वंचतेजस्विनंमत्वातुच्छंमत्वान्य
मात्मनः ॥ ४ ॥ एतस्मिन्नंतरेविष्णुराजगामावलीलया ॥ वन्हेस्तांदाहिकींशक्तिंतांजहारपुरःस्थितः ॥ ५ ॥ माययाशिशु
रूपीचतमुवाचजनार्दनः ॥ सस्मितोविनयंकृत्वाभक्तिनम्रात्मकंधरः ॥ ६ ॥ शिशुरुवाच ॥ कथंरुष्टोसिभगवन्भवान्मांका

रणंवद ॥ त्रैलोक्यंभस्मसात्कर्तुमुद्यतोसिनिरर्थकः ॥ ७ ॥ त्वमेवभृगुणाशप्तोभृगोश्वदमनंकुरु ॥ एकापराधात्त्रैलोक्यं
भस्मकर्तुंनचार्हसि ॥ ८ ॥ विश्वंचब्रह्मणासृष्टंतस्यपातास्वयंहरिः ॥ संहर्ताभगवान्रुद्रएवमेवक्रमोभवेत् ॥ ९ ॥ तत्कथंभ
स्मसात्कर्तुमीश्वरेशंकरेस्थिते ॥ रक्षितारंहरिंजित्वासंहारंकुरुसत्वरम् ॥ १० ॥ इत्युक्त्वाब्राह्मणबटुःशरपत्रंपुरस्थितम् ॥
अतिशुष्कंकरेधृत्वादग्धंकर्तुंददौमुदा ॥ ११ ॥ दृष्ट्वाशुष्केंधनेवन्हिर्लेलिहानोभयानकः ॥ सवव्रेशिखयाविप्रंमेघेनशशिनं
यथा ॥ १२ ॥ नचदग्धंशुष्कपत्रंलोमैकंचशिशोस्तथा ॥ दृष्ट्वाव्रीडायुतोवन्हिर्निस्तब्धोहिशिशोःपुरः ॥ १३ ॥ कृत्वावन्हेर्दर्प
भंगमंतर्धानंचकारसः ॥ वन्हिःस्वमूर्तिंसंव्हृत्यस्वस्थानंभीतवद्ययौ ॥ १४ ॥ उक्तोवन्हेर्दर्पभंगःपरंवैश्रोतुमिच्छसि ॥ नित्य
नूतनमाख्यानंदेवानांदर्पमोचनं ॥ १५ ॥ श्रीराधिकोवाच ॥ शेषाणांदर्पभंगंचक्रमेणकथयप्रभो ॥ कथापीयूषधारांते
श्रुत्वातृप्येतकोभुवि ॥ १६ ॥ श्रीनारायणउवाच ॥ राधिकावचनंश्रुत्वासस्मितोभगवान्प्रभुः ॥ कथांकथितुमारेभेश्रुत्वा
रम्यांपुरातनीम् ॥ १७ ॥ ॥ इतिश्रीब्रह्मवैवर्ते० अग्निदर्पमोचनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ श्रीकृष्णउवाच ॥
दुर्वाससोदर्पभंगंकथयामिश्रृणुप्रिये ॥ महामुनेर्योगतश्वरुद्रांशश्वातितेजसः ॥ १ ॥ एकदाचांबरीषश्वकृत्वाचद्वादशीव्रत
म् ॥ पारणंकर्तुमारेभेभोजयित्वाद्विजान्बहून् ॥ २ ॥ एतस्मिनंतरेतत्रचाजगाममुनिःस्वयम् ॥ क्षुधार्तश्वतृषार्तश्वव‍ि
ष्णुव्रतपरायणः ॥ ३ ॥ मांभोजयमहाभागेत्येवंसनृपमुक्तवान् ॥ राजाभक्त्याददौतस्मैपरमान्नंसुधोपमं ॥ ४ ॥ सकेशंपा
यसंदृष्ट्वाराजानंशप्तुमुद्यतः ॥ जटांनिकृत्यशिरसःस्थापयामासभूतले ॥ ५ ॥ जटामध्यात्समद्भूतोज्वलदग्निशिखोपमः
सप्ततालप्रमाणश्वपुरुषःप्रलयांतकः ॥ ६ ॥ नृपश्रेष्ठंसराजानंकोपेनहंतुमुद्यतः ॥ भयेनकंपिताःसर्वेशुष्ककंठोष्ठतालुकाः ॥

॥ ७ ॥ सस्मारचमहाभीतोराजाममपदांबुजम् ॥ सर्वविघ्नस्योपशमःस्मृतिमात्राद्बभूवह ॥ ८ ॥ एतस्मिन्नंतरेचक्रंदुर्नि
वार्यंसुदर्शनम् ॥ तेजसाममतुल्यंचकोटिसूर्यप्रभोपमं ॥ ९ ॥ आविर्बभूवसहसासभामध्येचघूर्णितम् ॥ निकृत्यकृत्या
पुरुषंदुद्रावमुनिपुंगवः ॥ १० ॥ सशैलसागरांपृथ्वींकांचनींभूमिमुत्तमाम् ॥ भ्रामयित्वामहींसर्वांपुनर्दुद्रावतंमुनिं ॥ ११ ॥
धावंतंमुक्तकेशंतंभीतंकातरमातुरम् ॥ तेजसाच्छाद्यसूर्यंतंदीप्तिंकुर्वंतमुत्तमाम् ॥ १२ ॥ कैलासंसप्तवर्गंचब्रह्मलोकमना
मयम् ॥ विप्रेंद्रोभ्रमणंकृत्वावैकुंठंशरणंययौ ॥ १३ ॥ पादपद्मेपतंतंचददर्शविप्रपुंगवम् ॥ कृपयाचकृपासिंधुर्ददौविप्रा
यनिर्भयम् ॥ १४ ॥ नारायणवरेणैवबभूवविज्वरोद्विजः ॥ पुनर्ययौहरिंस्तुत्वानृपगेहंतदाज्ञया ॥ १५ ॥ राजामुनींद्रंसं
प्राप्यभोजयामासपायसम् ॥ स्वयंचपारणंचक्रेसस्त्रीकःसहबांधवः ॥ १६ ॥ राजानमाशिषंकृत्वाभुक्त्वाविप्रोगृहंययौ
॥ मयानियोजितंचक्रंभक्तानांरक्षणायच ॥ १७ ॥ नश्यंतिसर्वेप्रलयेनमेभक्तःप्रणश्यति ॥ सर्वेदेवाममप्राणाभक्ताःप्रा
णाधिकाममम ॥ १८ ॥ त्वंचलक्ष्मीर्महामायासावित्रीवासरस्वती ॥ ब्रह्माशंभुरनंतश्चधर्मश्चब्राह्मणास्तथा ॥ १९ ॥ गोपां
गनाश्चगोपाश्चसर्वेप्रियतमामम ॥ तेभ्यःप्रियाःपराभक्ताःप्रियोभक्तान्नकश्चन ॥ २० ॥ दत्वासुदर्शनंचक्रंभक्तानांरक्ष
णायच ॥ तथापिनप्रतीतिर्मेस्वयंद्रष्टुंप्रयामितान् ॥ २१ ॥ दुर्वाससोदर्पभंगःश्रुतोमत्तःसुरेश्वरि ॥ आज्ञापयमहाभागेकिं
भूयःश्रोतुमिच्छसि ॥ २२ ॥ श्रीराधिकोवा० ॥ धन्वंतरेर्दर्पभंगंकथयस्वजगद्गुरो ॥ पुराणेगोपनीयंचश्रोतुंकौतूहलंमम ॥
॥ २३ ॥ श्रीनारायणउ० ॥ राधिकावचनंश्रुत्वाजहासमधुसूदनः ॥ कथांकथितुमारेभेश्रुतिरम्यांपुरातनीम् ॥ २४ ॥ इति
श्रीब्र०मपुरा० दुर्वाससोदर्पभंगोनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ श्रीकृष्णउवाच ॥ ॥ नारायणांशोभगवान्स्वयं

धन्वंतरिर्महान् ॥ पुरासमुद्रमथनेसमुत्तस्थौमहोदधेः ॥ १ ॥ सर्ववेदेषुनिष्णातोमंत्रतंत्रविशारदः ॥ शिष्योहिवैनतेयस्य
शंकरस्योपशिष्यकः ॥ २ ॥ शिष्याणांचसहस्रेणागतःकिलासमीश्वरि ॥ ददर्शतक्षकंमार्गेलेलिहानंभयानकम् ॥ ३ ॥
लक्षनागैःपरिवृतंशैलतुल्यंविषोल्बणम् ॥ भोकुंकोपात्समायांतमेवंदृष्ट्वाजहासच ॥ ४ ॥ दंभीधन्वंतरेःशिष्योधृत्वात
क्षकमुल्बणम् ॥ मंत्रेणजृंभितंकृत्वानिर्विषंतंचकारह ॥ ५ ॥ अमूल्यंमणिरत्नंचजहारमस्तकेस्थितम् ॥ करेणभ्रामयि
त्वाचप्रेरयामासदूरतः ॥ ६ ॥ निश्चेष्टस्तक्षकस्तस्थौतत्रमार्गेयथामृतः ॥ गणानिवेदनंचक्रुर्गत्वावासुकिसन्निधिम् ॥ ७ ॥
वासुकिस्तत्समाकर्ण्यप्रज्वलन्नतिकोपतः ॥ सर्पान्प्रस्थापयामासासंख्यांश्चैवविषोल्बणान् ॥ ८ ॥ सर्पसेनाग्रणीनां
चमुख्यान्पंचविशारदान् ॥ द्रोणकालीयककर्कोटपुंडरीकधनंजयान् ॥ ९ ॥ सर्वेनागाःसमाजग्मुर्यत्रधन्वंतरिःस्वयम् ॥
भयमापुःशिष्यगणादृष्ट्वानागानसंख्यकान् ॥ १० ॥ नागनिश्वासवातेनसर्वेशिष्यमृताइव ॥ निश्चेष्टाज्ञानरहिताःशेरते
धरणीतले ॥ ११ ॥ धन्वंतरिश्चभगवान्पीयूषवर्षणेनच ॥ जीवयामासशिष्यांश्चमंत्रेणचगुरुंस्मरन् ॥ १२ ॥ चेतनांकार
यित्वाचशिष्याणांचजगद्गुरुः ॥ चकारजृंभितंमंत्रैःसर्पसंघंविषोल्बणम् ॥ १३ ॥ सर्वेबभूवुर्निश्चेष्टाजृंभितास्तेमृताइव ॥
कोपिनालंततोदेविवार्तांदातुगणेषुच ॥ १४ ॥ वासुकीबुबुधेसर्वंसर्वज्ञःसर्वसंकटम् ॥ आजुहावजगद्गौरींभगिनींज्ञानरूपि
णीं ॥ १५ ॥ वासुकिरु० ॥ मनसेत्वंसमागच्छनागान्रक्षातिसंकटात् ॥ जगत्त्रयेमहाभागेपूजातवभविष्यति ॥ १६ ॥ वा
सुकेर्वचनंश्रुत्वाप्रहस्योवाचकन्यका ॥ वाक्यंपीयूषतुल्यंचविनयावनतस्थिता ॥ १७ ॥ मनसोवाच ॥ नागेंद्रश्शृणुम
द्वाक्यंयास्यामिसमरंप्रति ॥ भद्राभद्रंदैवसाध्यंकरिष्यामियथोचितं ॥ १८ ॥ तंशत्रुंसंहरिष्यामिलीलयासमरस्थले ॥

अहंयंनिहनिष्यामितंकोरक्षितुमीश्वरः ॥ १९ ॥ यदिब्रह्मादयोदेवाःसमायातेरणस्थले ॥ तथापितवशत्रुंचप्रजेष्या
मिनसंशयः ॥ २० ॥ गुरुर्मेभगवान्शेषःसिद्धमंत्रंचदत्तवान् ॥ नारायणस्यजगतामीशस्यपरमाद्भुतम् ॥ २१ ॥ बिभर्मिक
वचंकंठेपरंत्रैलोक्यमंगलम् ॥ संसारंभस्मसात्कृत्वापुनःस्रष्टुमहंक्षमा ॥ २२ ॥ शिष्याहंमंत्रशास्त्रेषुशंभोर्भगवतःपुरा ॥
महाज्ञानंदत्तवान्समत्यंचकृपयाविभुः ॥ २३ ॥ शंभोश्चशिष्योगरुडोगणयामिनतंध्रुवं ॥ धन्वंतरिस्तच्छिष्याणामेकःकिं
गणयामितम् ॥ २४ ॥ इत्युक्त्वासाजगामैकात्यक्त्वानागगणान्रुषा ॥ प्रणम्यश्रीहरिंशंभुंशेषंचत्दृष्टमानसा ॥ २५ ॥ यत्र
धन्वंतरिर्देवःप्रसन्नवदनेक्षणः ॥ तत्राजगामसादेवीकोपरक्तेक्षणारुषा ॥ २६ ॥ दृष्टिमात्रेणसर्वांश्चजीवयामाससुंदरी
॥ विषदृष्ट्याशत्रुशिष्यान्निश्चेष्टांश्चचकारह ॥ २७ ॥ धन्वंतरिस्तुभगवान्मंत्रशास्त्रविशारदः ॥ मंत्रेणयत्नंकृतवान्नोत्थाप
यितुमीश्वरः ॥ २८ ॥ दृष्ट्वाधन्वंतरिंदेवीप्रहस्योवाचसत्वरम् ॥ बहूक्तिमर्थयुक्ताचसाहंकारांसुरेश्वरि ॥ २९ ॥ मनसोवाच ॥
मंत्रार्थंमंत्रशिल्पंचमंत्रभेदंमहौषधम् ॥ वदजानासिकिंसिद्धशिष्योसिगरुडस्यच ॥ ३० ॥ अहंचवैनतेयश्चशिष्यौशंभो
श्चविश्रुतौ ॥ सुकल्पकालंसुचिरमहंधन्वंतरेश्टणु ॥ ३१ ॥ इत्युक्त्वासरसःपद्मंसमानीयजगत्प्रसूः ॥ मंत्रसंवलितंकृत्वाप्रे
रयामासकोपतः ॥ ३२ ॥ दृष्ट्वागतंपद्मपुष्पंज्वलदग्निशिखोपमम् ॥ धन्वंतरिश्चनिश्वासैर्भस्मसात्तच्चकारह ॥ ३३ ॥ तं
चधन्वंतरिर्दृष्ट्वासमंत्रेरेणुमुष्टिना ॥ चकारनिष्फलंभस्मतांप्रहस्यावलीलया ॥ ३५ ॥ देवीजग्राहशक्तिंचग्रीष्मसूर्यसम
प्रभाम् ॥ मंत्रसंवलितांकृत्वाप्रेरयामासतंरिपुम् ॥ ३६ ॥ दृष्ट्वाजाज्वल्यमानांतांशक्तिंधन्वंतरिःस्वयम् ॥ विष्णुदत्तेनशूले
नसतुविच्छेदलीलया ॥ ३७ ॥ तांचशक्तिंवृथादृष्ट्वाप्रजज्वालेश्वरीरुषा ॥ जग्राहनागपाशंचघोरमव्यर्थमुल्बणम् ॥ ३८

नागलक्षसमायुक्तंसिद्धमंत्रेणमंत्रितम् ॥ प्रेरयामासकोपेनकालांतकसमप्रभम् ॥ ३९ ॥ धन्वंतरिर्नागपाशंदृष्ट्वाचसस्मितोमुदा ॥ सस्मारगरुडंतूर्णमाजगामखगेश्वरः ॥ ४० ॥ सर्पास्त्रमागतंदृष्ट्वागरुडोहरिवाहनः ॥ विधायचंचुनाशीघ्रंबुभुजेक्षुधितश्चिरम् ॥ ४१ ॥ नागास्त्रंनिष्फलंदृष्ट्वाकोपरक्तेक्षणाभृशम् ॥ जग्राहभस्ममुष्टिंचशिवदत्तांपुराप्रिये ॥ ४२ ॥ भस्ममुष्टिंमंत्रपूतांदृष्ट्वाचप्रेरितांयथा ॥ पक्षवातेनचिक्षेपशिष्यंपश्चान्निधायच ॥ ४३ ॥ निरस्तांभस्ममुष्टिंचदृष्ट्वादेवीचुकोपह ॥ जग्राहशूलमव्यर्थंहंतुंधन्वंतरिंस्वयम् ॥ ४४ ॥ शिवदत्तंचशूलंचशतसूर्यसमप्रभम् ॥ अव्यर्थंशूलंलोकेषुप्रलयाग्निसमप्रभम् ॥ ४५ ॥ अथपद्मातथाशंभुराजगामरणाजिरम् ॥ धन्वंतरेश्चरक्षार्थंशमनार्थंखगस्यच ॥ ४६ ॥ दृष्ट्वाशंभुंजगद्धौरीविधिंचजगतांपतिम् ॥ भक्त्याननामतावेवनिःशंकाशूलधारिणी ॥ ४७ ॥ धन्वंतरिश्चगरुडःप्रणनामसुरेश्वरौ ॥ तुष्टावपरयाभक्त्यातौचचक्रतुराशिषम् ॥ ४८ ॥ उवाचब्रह्मामधुरंहितंधन्वंतरिंमुदा ॥ पूजार्थंमनसायाश्चलोकानांहितकाम्यया ॥ ४९ ॥ ॥ ब्रह्मोवाच ॥ ॥ धन्वंतरेमहाभागसर्वशास्त्रविशारद ॥ रणंतेमनसासार्द्धंनहिसाम्यंचमेमतम् ॥ ५० ॥ शिवदत्तेनशूलेनदुर्निवार्येणसर्वतः ॥ त्रैलोक्यंभस्मसात्कर्तुंक्षमेयंत्रिदशेश्वरी ॥ ५१ ॥ ध्यानंकौथुमशाखोक्तंकृत्वाभक्त्यासमाहितः ॥ दत्वाषोडशोपचारंदेव्याश्चकुरुपूजनम् ॥ ५२ ॥ आस्तिकोक्तेनस्तोत्रेणस्तवनंकर्तुमर्हसि ॥ परितुष्टाचमनसावरंतुभ्यंप्रदास्यति ॥ ५३ ॥ ब्रह्मणोवचनंश्रुत्वाचकारानुमतिंशिवः ॥ वैनतेयश्चसंप्रीत्याबोधयामासयत्नतः ॥ ५४ ॥ एषांचवचनंश्रुत्वास्नात्वाशुचिरलंकृतः ॥ विधिंपुरोहितंकृत्वापूजांकर्तुंसमुद्यतः ॥ ५५ ॥ धन्वंतरिरुवाच ॥ ॥ इहागच्छजगद्धौरिगृहाणममपूजनम् ॥ पूजात्वंत्रिषुलोकेषुपुराकश्यपकन्यके ॥ ५६ ॥ त्वयाजि

तंजगत्सर्वंदेविविष्णुस्वरूपया ॥ तेनतेस्त्वप्रयोगश्चनकृतोरणभूमिषु ॥ ५७ ॥ इत्युक्त्वासंयतोभूत्वाभक्तिनम्रात्मकंधरः ॥ गृहीत्वाशुक्लकुसुमंध्यानंकर्तुंसमुद्यतः ॥ ५८ ॥ चारुचंपकवर्णाभांसर्वांगसुमनोहराम् ॥ ईषद्धास्यप्रसन्नास्यांसर्वविद्या विशारदाम् ॥ ५९ ॥ नागेंद्रवाहिनींदेवींभजेनागेश्वरींपराम् ॥ ध्यात्वैवंकुसुमंदत्वानानाद्रव्यसमन्वितम् ॥ ६० ॥ दत्वा षोडशोपचारंपूजयामासतांप्रिये ॥ स्तोत्रंचकारयत्नाच्चपुलकांचितविग्रहः ॥ ६१ ॥ पुटांजलियुतोभूत्वाभक्तिनम्रात्म कंधरः ॥ ॥ धन्वंतरिःउवाच ॥ ॥ नमःसिद्धिस्वरूपायैसिद्धिदायैनमोनमः ॥ ६२ ॥ नमःकश्यपकन्यायैवरदायैनमोनमः ॥ नमःशंकरकन्यायैशंकरायैनमोनमः ॥ ६३ ॥ नमस्तेनागवाहिन्यैनागेश्वर्यैनमोनमः ॥ नमआस्तीकजननिजनन्यैज गतांमम ॥ ६४ ॥ नमोजगत्कारणायैजगत्कारुस्त्रियैनमः ॥ नमोनागभगिन्यैचयोगिन्यैचनमोनमः ॥ ६५ ॥ नमश्चि रंतपस्विन्यैसुखदायैनमोनमः ॥ नमस्तपस्यारूपायैफलदायैनमोनमः ॥ ६६ ॥ सुशीलायैचसाध्व्यैचशांतायैचनमोन मः ॥ इत्येवमुक्त्वाभक्त्याचप्रणनामप्रयत्नतः ॥ ६७ ॥ तुष्टादेवीवरंदत्वासत्वरंस्वालयंययौ ॥ ब्रह्मारुद्रवैनतेयाःसमा जग्मुर्निजालयम् ॥ ६८ ॥ धन्वंतरिश्चभगवान्जगामनिजमंदिरम् ॥ जग्मुर्नागापद्दृष्टाश्चफणाराजिविराजिताः ॥ ६९ इत्येवंकथितंसर्वंस्तवराजंमयातव ॥ विधिनामातरंभक्तिमास्तिकश्चचकारह ॥ ७० ॥ तदातुष्टाजगद्गौरीपुत्रंतंमुनिपुंग वम् ॥ इदंस्तोत्रंमहापुण्यंभक्तियुक्तश्चयःपठेत् ॥ वंशजानांनागभयंनास्तितस्यनसंशयः ॥ ७१ ॥ इतिश्रीब्रह्मवैवर्ते० म० धन्वंतरिदर्पभंगमनसाविजयोनामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ श्रीकृष्णउ० ॥ ॥ सर्वेषांदर्पभंगश्चकथितश्चश्रुत स्त्वया ॥ क्षुद्राणांमहतांचैवंकुतएवनसंशयः ॥ १ ॥ अधुनाचसमुत्तिष्ठगच्छवृंदावनंवनम् ॥ गोपिकाविरहार्ताचशीघ्रंप

श्यामिसुंदरि ॥ २ ॥ ॥ श्रीनारायणउवाच ॥ ॥ इत्येवंवचनंश्रुत्वामानिनीरसिकेश्वरी ॥ उवाचकृष्णंनयमांनशक्तागं
तुमीश्वरम् ॥ ३ ॥ राधिकावचनंश्रुत्वाप्रहस्यमधुसूदनः ॥ मामारुहेत्येवमुक्त्वासोंतर्धानंचकारह ॥ ४ ॥ सामनोयायिनी
राधाकृत्वाचरोदनंक्षणम् ॥ इतस्ततस्तमन्वेष्यवृंदारण्यंजगामसा ॥ ५ ॥ विवेशचंदनवनंरुदंतीशोककातरा ॥ ददर्श
गोपिकास्तत्रशोकार्ताभयविह्वलाः ॥ ६ ॥ ताम्रास्याघूर्णनयनाभ्रमंतीःसर्वकाननम् ॥ नाथनाथेतिकुर्वंतीर्निराहारारु
षान्विताः ॥ ७ ॥ तादृष्ट्वाराधिकासाचप्रेमविच्छेदकातरा ॥ कथयामासवृत्तांतंमलयभ्रमणादिकम् ॥ ८ ॥ ताभिःसार्धंच
साराधारुरोदविरहातुरा ॥ हानाथनाथेत्युच्चार्यविलप्यचमुहुर्मुहुः ॥ ९ ॥ विनिंद्यकृष्णंकोपेनतर्जयामासचक्षणम् ॥ क्ष
णंशरीरमुत्स्रष्टुंकोपात्सर्वाःसमुद्यताः ॥ १० ॥ एतस्मिन्नंतरेकृष्णस्तत्रचंदनकानने ॥ स्वात्मानंदर्शयामासराधिकांगो
पिकांक्षणम् ॥ ११ ॥ राधागोपांगनाभिश्चदृष्ट्वाप्राणेश्वरंमुदा ॥ सस्मिताचप्रदुद्रावपुलकांचितविग्रहा ॥ १२ ॥ तूर्णंकृ
ष्णंसमाश्लिष्यजहारमुरलींरुषा ॥ मालांचपीतवसनंभग्नंकृत्वाचमानिनी ॥ १३ ॥ पुनःसंराधयामासवस्त्रंमालांमनोह
राम् ॥ विनोदमुरलींतुष्टावृंदावनविनोदिनी ॥ १४ ॥ चंदनागुरुकस्तूरीकुंकुमाक्तंचकातरम् ॥ मुहुर्मुहुर्मुखंवीक्ष्यचुचुं
बपरमादरम् ॥ १५ ॥ क्षणंसंतर्जयामासक्षणंस्तोत्रंचकारह ॥ सकर्पूरंचतांबूलंक्षणंतस्मैददौमुदा ॥ १६ ॥ अथगोपांगनाः
सर्वारुरुदुःप्रेमविह्वलाः ॥ सर्वंनिवेदनंचक्रुःस्वदुःखंविरहोद्भवम् ॥ १७ ॥ देहत्यागंचस्नानंचस्वाहारस्यविसर्जनम् ॥
वनेवनेहर्निशंचशश्वद्भ्रमणमेवच ॥ १८ ॥ क्षणंतंभर्त्सयामासुःस्तोत्रंचक्रुःक्षणंमुदा ॥ क्षणंददुर्भूषणंचक्षणंतस्मैचचंद
नम् ॥ १९ ॥ काश्चिदूचुःप्राणचोरंपश्यरक्षेतिसंततम् ॥ एवंपुनर्नकर्तव्यमनेनेतिचकाश्चन ॥ २० ॥ काश्चिदूचुरिमंमध्ये

यूयंकुरुतसत्वरं ॥ निबद्धप्रेमपाशेनत्हृदयेचेतिकाश्चन॥ २१ ॥ काश्चिदूचुरयंनास्तिप्रतीतिर्नकदाचन ॥ यत्नाच्चेतनचो
रंचपश्यपश्येतिकाश्चन ॥ २२ ॥ काश्चिदूचुर्निष्ठुरोयंनवघातीतिकोपतः॥ नपुनर्वदतेमांचकाश्चनेतिचनारद ॥ २३॥ निर्ज
नानिचरम्याणियानियानिचतानिच ॥ भ्रमेयुर्गोपिकास्तानिकृष्णेनसहकौतुकात्॥ २४ ॥ एवंतंगोपिकाःसर्वामध्येकृ
त्वासदीश्वरम्॥ ययुर्वनांतरेयत्रसुरम्यंरासमंडलम् ॥ २५ ॥ रासंगत्वास्वर्णपीठेतस्थौसरसिकेश्वरः ॥ निशिभातियथा
काशेचंद्रस्तारागणैःसह ॥ २६ ॥ नानामूर्तीर्विधायात्रसहताभिर्जनार्दनः॥ चकारचपुनःक्रीडांकामुकीनांमनोहरां ॥ २७॥
स्वयंराधाकरेधृत्वापूर्वोक्तंरतिमंदिरम्॥ विश्वकर्मविनिर्माणमारुरोहस्मरातुरः॥ २८॥ चंदनागुरुकस्तूरीकुंकुमाक्तंसुवा
सितं ॥ तत्रचंपकतल्पेससुष्वापचतयासह॥ २९॥ नानाप्रकारशृंगारंकामशास्त्रविशारदः॥ चकारकामीक्रीडांचकामिन्या
सहकौतुकी ॥ ३० ॥ बभूवसुरतिस्तत्रसुचिरंचतयोर्मुने॥ रतिनिष्णातयारम्याविरतिर्नास्तितत्क्षणं ॥ ३१ ॥ एवंतौतस्थ
तुस्तत्रराधाकृष्णौरसोत्सुकौ॥ तस्थुस्तागोपिकाभिश्चसुरतौकृष्णमूर्तयः॥ ३२॥ ॥ नारदउ०॥ ॥ आदौराधांसमुच्चार्य
पश्चात्कृष्णंविदुर्बुधाः ॥ निमित्तमस्यमांभक्तंवदभक्तजनप्रिय॥ ३३ ॥ श्रीनारायणउ०॥ ॥ निमित्तमस्यत्रिविधंकथया
मिनिशामय ॥ जगन्माताचप्रकृतिःपुरुषश्चजगत्पिता ॥ ३४॥ गरीयसीत्रिजगतांमाताशतगुणैःपितुः ॥ राधाकृष्णेतिगौ
रीशेत्येवंशब्दःश्रुतौश्रुतः ॥ ३५॥ कृष्णराधेशगौरीतिलोकेनचकदाश्रुतः ॥ प्रसीदरोहिणीचंद्रगृहाणार्घ्यमिमंमम ॥ ३६ ॥
गृहाणार्घ्यंमयादत्तंसंज्ञयासहभास्कर ॥ प्रसीदकमलाकांतगृहाणममपूजनं ॥३७॥ इतिदृष्टंसामवेदेकौथुमेमुनिसत्तम॥
राशब्दोच्चारणादेवस्फीतोभवतिमाधवः ॥३८॥ धाशब्दोच्चारतःपश्चाद्धावत्येवससंभ्रमः॥ आदौपुरुषमुच्चार्यपश्चात्प्रकृ

तिमुच्चरेत् ॥ ३९ ॥ सभवेन्मातृघातीचवेदातिक्रमणेमुने ॥ त्रैलोक्येभारतंधन्यंकर्मक्षेत्रंचपुण्यदं ॥४०॥ ततोवृंदावनंपु
ण्यंराधापादाब्जरेणुना ॥ षष्टिवर्षसहस्राणितपस्तप्तंचवेधसा ॥ ४१ ॥ राधिकाचरणांभोजपादरेणूपलब्धये ॥ ४२ ॥ ॥
इतिश्रीब्रह्मवै० राधामाधवयोरासवर्णनंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ नारदउ० ॥ ॥ समतीतेपूर्णमासेकिंचकार
जगत्पतिः ॥रहस्यंकिंवभूवाथतद्भवान्वक्तुमर्हति ॥ १ ॥ श्रीनारायणउ० ॥ रासंनिर्वृत्यरासेचरासेश्वर्यासमन्वितः ॥ स्व
यंरासेश्वरस्तस्माद्यमुनापुलिनंययौ ॥ २ ॥ तत्रस्नात्वाजलंपीत्वानिर्मलंनिर्मलेजले ॥ सार्धंगोपांगनाभिश्चजलक्रीडांच
कारसः ॥३ ॥ ततोजगामभगवान्भांडीरंराधयासह ॥ गोपांगनाश्चस्वगृहान्प्रययुर्विरहातुराः ॥ ४॥ क्रीडांचकाररहसिभां
डीरेमालतीवने ॥ मालतीपुष्पशय्यायांरम्यायांरमणोत्सुकः ॥ ५ ॥ कृत्वाक्रीडांचतत्रैववासंतीकाननंययौ ॥ रेमेतत्रैव
रासेशोवसंतेसुमनोहरे ॥ ६ ॥ तत्रैवरमणंकृत्वाययौचंदनकाननं ॥ चंदनोक्षितसर्वांगोगृहीत्वाचंदनोक्षितं ॥ ७ ॥ रम्ये
चंदनतल्पेचस्निग्धेचंदनपल्लवे ॥ पूर्णचंद्रेसमुदितेविजहारतयासह ॥ ८ ॥ कृत्वाविहारंतत्रैवययौचंपककाननं ॥ रम्येचं
पकतल्पेचचकाररतिमीश्वरीम् ॥ ९ ॥ रतिंनिर्वृत्यतत्रैवययौपद्मवनंप्रभुः ॥ पद्मपत्रसमाकीर्णेतल्पेतिसुमनोहरे ॥ १०॥
सार्धंतत्रपद्ममुख्याशितेनपद्मवायुना ॥ चकारसुखसंभोगंययौनिद्रांतयासह ॥ ११ ॥ विहायनिद्रांनिद्रेशोददर्शनिद्रितां
प्रियां ॥ शयानांपद्मतल्पेचसुखसंभोगमात्रतः ॥ १२ ॥ दृष्ट्वामुखंचघर्माक्तंशरच्चंद्रविनिंदितं ॥ अतिसंलुप्तसिंदूरंलुप्तंक
ज्जलमुल्बणम् ॥ १३ ॥ सुंलुप्ताधररागंचसंलुप्तगंडपत्रकम् ॥ विस्रस्तकबरीभारंनेत्रोत्पलविमुद्रितम् ॥ १४ ॥ रत्नकुंड
लयुग्मेनामूल्येनपरिशोभितं ॥ राजितंमौक्तिकेनैवगजराजोद्भवेनच ॥ १५ ॥ प्रेम्णास्वसूक्ष्मवस्त्रेणवन्हिशुद्धेनमाधवः ॥

चकारमार्जनंभक्त्यातद्वक्त्रंभक्तवत्सलः ॥१६॥ केशसंमार्जनंकृत्वानिर्मायकवरींहरिः॥ माधवीमालतीमालाजालेनपरिशो
भितां ॥ १७॥ रत्नपट्टसूत्रबद्धांवामवक्रांमनोहरां ॥ अतीववर्तुलाकारांकंदपुष्पसुशोभितां ॥ १८ ॥ ददौसिंदूरतिलकमधश्चं
दनमुज्ज्वलं ॥ कस्तूरीबिंदुनासार्द्धंपरितःपरिशोभितां ॥ १९॥ चकारपत्रकंगंडयुग्मेचित्रविचित्रितं ॥ प्रददौकज्जलंभक्त्या
नेत्रोत्पलसमुज्ज्वलं ॥ २०॥ चकाराधररागंचराधायाश्चानुरागतः॥ कर्णभूषणयुग्मंचचकारातीवनिर्मलं ॥ २१॥ अमूल्य
रत्नहारंचस्तनभारयुगोज्ज्वलं॥ ददौकंठेचवैकुंठोमणिराजिविराजितं ॥ २२॥ वह्निशुद्धांशुकंदिव्यममूल्यंविश्वरत्नतः ॥
वासयामासवसनंकस्तूरीकुंकुमाक्तकं ॥२३॥ प्रददौपादयुगुलेरत्नमंजीररंजितं ॥ चकारालक्तकंभक्त्यापादांगुलिनखेषु
च ॥ २४॥ चकारसेवांसव्यायाःसेव्यस्त्रिजगतांसतां ॥ अहोसेवकसंभक्त्याश्वेतनचामरेणच ॥२५॥ सर्वभावविदांश्रेष्ठोबो
धज्ञःकामशास्त्रवित् ॥ कामिनींबोधयामासवासयामासवक्षसि ॥ २६ ॥ प्रेम्णाचप्रददौतस्यैसद्रत्नदर्पणंशुभं ॥ सुवेषदर्श
नार्थंचमुखचंद्रंचमार्जितुं ॥ २७॥ नानापुष्पैर्विरचितामम्लानांचंदनोक्षितां ॥ गंडेसौभाग्ययुक्तायाःसौभाग्येनददौहरिः
॥ २८ ॥ कस्तूरीकुंकुमाक्तंचसुगंधिचंदनंततः॥ददौप्रियायाःसर्वांगेप्रियःप्रेमभरेणच ॥ २९॥ पारिजातस्यकुसुमंदत्तंरह
सिब्रह्मणा ॥ प्रददौतत्कबर्यांचललितायाश्चनारद ॥ ३०॥ कमलंनिर्मलंदिव्यंसहस्रदलमुज्ज्वलं॥ शिवेनदत्तंरहसिददौत
द्दक्षिणेकरे ॥ ३१॥ अतिसारंमणींद्राणांमणिदत्तंचकौस्तुभं ॥दत्तंरहसिधर्मेणतस्यैसुप्रीतयेददौ ॥३२॥ आसवंरत्नपात्र
स्थंदस्रदत्तंचनिर्जने ॥ पानार्थंप्रददौतस्यैकामोन्मादकरंपरम्॥३३॥ मालतीमाधवीकुंदमंदारचंपकादिकं॥ पुष्पंसद्रत्न
पात्रस्थंतस्यैसुप्रीतयेददौ॥३४॥ सुदुर्लभंचतांबूलंकर्पूरादिसंसुस्कृतं ॥ भक्षणंकारयामाससमयज्ञश्चतांप्रियां ॥ ३५॥ सु

दुर्लभंचविश्वेषुवाक्पतेःपरिनिर्मितं ॥ अनुत्तममम्मूल्यंचवरुणेनरहःस्थले ॥ ३६ ॥ अतिसूक्ष्ममनुपमंदत्तंभक्त्याविराजि
तं ॥ वासयामासवसनंकृत्वानम्रांचकौतुकात् ॥ ३७ ॥ देवराजेनदत्तंचगजराजेंद्रमौक्तिकं ॥ नासिकाभूषणंचारुतस्यै
सुप्रीतयेददौ ॥ ३८ ॥ एतस्मिन्नंतरेतत्रसुशीलाद्याश्चगोपिकाः॥ षष्टिःसत्सहचर्यश्चराधायाःसुप्रतिष्ठिताः ॥ ३९॥ षष्टिस
त्कोटिगोपीभिःसार्द्धंसंत्हृष्टमानसाः॥ आययुःपादचिन्हेनप्रियस्यवहतःप्रियं ॥ ४० ॥ काश्चिच्चंदनहस्ताश्चकाश्चिच्चामरवा
हिकाः॥ काश्चित्कस्तुरिहस्ताश्चमालाहस्ताश्चकाश्चन ॥ ४१ ॥ काश्चित्सिंदूरहस्ताश्चकाश्चित्कंकतिकाकराः ॥ काश्चिदलक्त
ककरावस्त्रहस्ताश्चकाश्चन ॥ ४२ ॥ काश्चिद्दर्पणहस्ताश्चपुष्पपात्रधरावराः ॥ काश्चित्क्रीडापद्महस्तामालाहस्ताश्चकाश्चन
॥ ४३ ॥ काश्चिदासवहस्ताश्चकाश्चिद्भूषणवाहिकाः ॥ करतालकराःकाश्चिन्मृदंगवाहिकाःपराः ॥ ४४ ॥ शरयंत्रकराःकाश्चि
द्वीणाहस्ताश्चकाश्चन ॥ षट्त्रिंशद्रागरागिण्योगोपिकारूपधारिकाः ॥ ४५ ॥ गोलोकादागतायाश्चभारतंराधयासह ॥ का
श्चिज्जगुश्चननृतुस्तत्रागत्यचकाश्चन ॥ ४६ ॥ काश्चिच्चरणसेवायांराधायाःश्वेतचामरैः ॥ काश्चिच्चकुश्चदेव्याश्चपादसं
वाहनंमुदा ॥ ४७ ॥ काचिद्ददौचतांबूलंभक्षणार्थंमहामुने ॥ एवंकौतुकयुक्तश्चपण्येवृंदावनेवने ॥ ४८ ॥ प्रतस्थौगोपि
कासार्द्धंराधावक्षःस्थलस्थितः॥ क्षणंपापौचमाध्वीकंप्रिययासहमाधवः ॥ ४९ ॥ क्षणंचखादतांबूलंक्षणंनिद्रांययौमुदा ॥
क्षणंचकारशृंगाररंरत्नमंदिरनिर्मितं॥ ५० ॥ क्षणंजलविहारंचचकारयमुनाजले॥ इत्येवंकथितावत्सरासक्रीडाहरेरहो॥ ५१
स्वेच्छामयस्वात्मनश्चपरिपूर्णतमस्यच ॥ निर्गुणस्यस्वतंत्रस्यपरस्यप्रकृतेःप्रभोः ॥ ५२ ॥ ब्रह्मविष्णुशिवादीनामीश्व
रस्यपरस्यच ॥ कृष्णजन्मरहस्यंचबालक्रीडनमीप्सितं ॥ ५३ ॥ उक्तंकिशोरचरितंकिंभूयःश्रोतुमिच्छसि ॥ ५४ ॥ ॥ इति

श्रीब्रह्मवै० म० नारदनारायणसंवादेश्रीकृष्णरासक्रीडावर्णनंनामत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ नारदउ० ॥ ॥ अतः परंकिंरहस्यंबभूवमुनिसत्तम ॥ कथंजगामभगवान्मथुरांनंदमंदिरात् ॥ १ ॥ नंदोदधारप्राणांश्चविच्छेदेनहरेःकथम् ॥ गोपांगनायशोदावाकृष्णैकतानमानसा: ॥ २ ॥ चक्षुर्निमेषविच्छेदाद्याराधानहिजीवति ॥ कथंदधारसादेवीप्राणान्प्राणेश्वरंविना ॥ ३ ॥ येयेतत्संगिनोगोपाःशयनासनभोगतः ॥ कथंविसस्मरुस्तेचताद्दशंबांधवंव्रजे ॥ ४ ॥ श्रीकृष्णोमथुरांगत्वाकिंकिंकर्मचकारसः ॥ स्वर्गारोहणपर्यंतंतद्भवान्वक्तुमर्हति ॥ ५ ॥ ॥ श्रीनारायणउ० ॥ ॥ कंसश्चकारयज्ञंचसमाहूतोधनुर्मखम् ॥ जगामतत्रभगवान्तेनराज्ञानिमंत्रितः ॥ ६ ॥ राजाप्रस्थापयामासचाक्रूरंभगवत्प्रियम् ॥ अक्रूरःप्रेरितोराज्ञागत्वाचंदनमंदिरम् ॥ ७ ॥ श्रीकृष्णंचगृहीत्वाचसगणंमथुरांगतः ॥ कृष्णःश्रीमथुरांगत्वाजघानन्नृपतिंमुने ॥ ८ ॥ जघानरजकंचैवचाणूरंमुष्टिकंगजम् ॥ चकारपित्रोरुद्धारंबांधवानांचबांधवः ॥ ९ ॥ कुब्जयासहशृंगारंकृत्वाचकौतुकेनच ॥ तांचप्रस्थापयामासगोलोकंगोपिकापतिः ॥ १० ॥ चकारकृपयाविष्णुर्मालाकारस्यमोक्षणम् ॥ कृपयाचोद्धवद्वाराबोधयामासगोपिकाः ॥ ११ ॥ तदोपनीतोभगवानवंतीनगरंययौ ॥ चकारविद्याग्रहणंमुनेःसांदीपिनेर्गुरोः ॥ १२ ॥ ततोजित्वाजरासंधंनिहत्ययवनेश्वरम् ॥ उग्रसेनंचनृपतिंचकारविधिपूर्वकम् ॥ १३ ॥ गत्वासमुद्रनिकटंनिर्मायद्वारकांपुरीम् ॥ जहाररुक्मिणींदेवींजित्वानृपतिसंघकम् ॥ १४ ॥ कालिंदींलक्ष्मणांशैब्यांसत्यांजांबवतींसतीम् ॥ मित्रविंदांनाग्नजितिंसमुद्वाहंचकारसः ॥ १५ ॥ निहत्यनरकंभूपरंणेनदारुणेनच ॥ पत्नीषोडशसाहस्रंविहारंचचकारसः ॥ १६ ॥ जहारपारिजातंचजित्वाशक्रंचलीलया ॥ चिच्छेदबाणहस्तांश्चजित्वाचचंद्रशेखरम् ॥ १७ ॥ पौत्रस्यमोक्षणंकृत्वापुनरा

गत्यद्वारकाम् ॥ आत्मानंदर्शयामासलोकांश्चप्रतिमंदिरम् ॥ १८ ॥ योगेचवसुदेवस्यतीर्थयात्राप्रसंगतः ॥ प्राणाधि
ष्ठातृदेवींचददर्शतत्रराधिकां ॥ १९ ॥ पूर्णेचशतवर्षेचसुदाम्नःशापमोक्षणे ॥ पुनर्ययौतयासार्द्धंपुण्यंवृंदावनंवनम् ॥ २०
पुनश्चतुर्दशाब्दंचतयासार्धंजगत्पतिः ॥ चकाररासंरासेचपुण्यक्षेत्रेचभारते ॥ २१ ॥ पूर्णमेकादशाब्दंचनिर्वृत्यनंदमंदि
रे ॥ मथुरायांद्वारकायांपूर्णमब्दशतंविभुः ॥ २२ ॥ चकारभारहरणंपृथिव्यांपृथुविक्रमः ॥ पंचविंशतिवर्षंचशतवर्षाधि
कंमुने ॥ २३ ॥ तिष्ठन्जगामगोलोकंपृथिव्यांचपुरातनः ॥ यशोदायैचनंदायवृषभानायधीमते ॥ २४ ॥ राधामात्रेकला
वत्यैददौसामीप्यमोक्षणम् ॥ कृष्णेनसार्द्धंगोपीचराधिकाचकुतूहलात् ॥ २५ ॥ निबद्धयधर्मसेतुंचवेदोक्तंचयुगेयुगे ॥
इत्येवंकथितंसर्वंसमासेनमहामुने ॥ २६ ॥ श्रीकृष्णचरितंरम्यंचतुर्वर्गफलप्रदम् ॥ ब्रह्मादिस्तंबपर्यंतंसर्वंनश्वरमेवच
॥ २७ ॥ भजंतंपरमानंदंसानंदंनंदनंदनम् ॥ स्वेच्छामयंपरंब्रह्मपरमात्मानमीश्वरम् ॥ २८ ॥ परमव्ययमव्यक्तंभक्तानुग्र
हविग्रहम् ॥ सत्यंनित्यंस्वतंत्रंचसर्वेशंप्रकृतेःपरम् ॥ २९ ॥ निर्गुणंचनिरीहंचनिराकारंनिरंजनम् ॥ ३० ॥ ॥ इतिश्री
ब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेनारदनारायणसंवादेश्रीकृष्णराधिकासंवादोनामचतुःपंचाशत्तमोऽध्यायः ॥ ५४
श्रीकृष्णार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ पूर्वार्द्धंसमाप्तम् ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

